स्यपृक्तं हल् ६।१।६८। हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल्लुप्यते। १८० नलोपः प्रातिपदिकान्तस्य ८।२।७। प्रातिपदिकसंज्ञकं यत् पदं तदन्तस्य लोपः स्यात्। सखा। १ सख्युरसम्बुद्धौ ७।१।९२। सख्युरङ्गात् परं संबुद्धिवर्जं सर्वनामस्थानं णिद्वत् स्यात्। २ अचो ञ्णिति ७।२।११५। अजन्ताङ्गस्य वृद्धिर्ञिति णिति च परे। सखायौ। सखायः। हे सखे। सखायम्। सखायौ। सखीन्। सख्या। सख्ये। ३ ख्यत्यात् परस्य ६।१।११२। खितिशब्दाभ्यां खीतीशब्दाभ्यां कृत-

---

दीर्घ ङ्यन्त आबन्त ( ङीप् टाप् ) से परे सु ति सि का अपृक्तसंज्ञकहल् = 'स, त् स्' उसका लोप हो। ( हलन्त का उदाहरण सखान् स्,। अहन् त्, अहन् स् ) ङीवन्त = दण्डिनी गौरी। आबन्त-रमा, कृष्णा।

( १८० ) प्रातिपदिकान्तस्य = प्रातिपदिकसंज्ञकपद के अन्त्य के नकार का लोप हो। साथी अर्थवाला सखिशब्दस्य प्रातिपदिकसंज्ञायाम् सु विभक्तिः अङ्गसंज्ञायाम्। अङ्गसंज्ञक सखिशब्द के 'इ' को 'अनङ्सौ' अनङ्-आदेश, परे सम्बुद्धि सु नास्ति। सखन्+स् इति दशायाम् अन्त्य अल् सखन् का 'न' उसके पूर्ववर्ण 'ख' में 'अ' को उपधा संज्ञा उसी नान्त उपधा अकार को दीर्घ उससे परे एक अल्-रूप प्रत्यय सु का स्, उसको अपृक्त संज्ञा। हलन्त शब्द से परे अपृक्त संज्ञक स का हलङ्यादि लोप। प्रातिपदिक के अन्त में न का भी न लोपः ( प्रातिपदिकान्तस्य से ) सखा।

( १ ) सख्युः = अङ्गसंज्ञकसखिशब्द से परे सम्बुद्धि को छोडकर सभी सर्वनामसंज्ञक ( सु औ जस-अम् औ ) को णिद्वत् = ण्इत की तरह कार्य हो अजन्त अङ्ग के स्थान में वृद्धिः। ( २ ) अचः = अजन्त अङ्ग के स्थान में वृद्धि हो। ञित् या णित् परे हो तो। यथा—सखि + औ अत्र 'औ' को णिद्वद भाव हुआ। वह णित् माना गया। जिसका फल अजन्त अङ्ग के अन्त्य अल् इके स्थान में वृद्धि 'ऐ' है। ऐस्थाने आयादेशे वर्णसम्मेलने सखायौ एवम् प्रथमायाः बहुवचने सखि + जस्। ज इत्। णिद्वत्। भावे वृद्धिः आयादेशे सखायः। सम्बुद्धि में "ह्रस्वस्य गुणः सूत्र से इ को गुण ए। हे सखे। सखि शब्दात् क्रियाफल आश्रय कर्मविवक्षायाम् 'अम्' ( कर्म ) को णिद्वत् भाव 'ऐ' वृद्धि आय्आदेश सखायम्, सखायौ। सखि + शस्। श इत्। पूर्वसवर्णदीर्घे, सकारस्य नकारे सखीन्। सखि+साधनविवक्षामें टा 'सखि + आ' अत्र यण्। सख्या सखिभ्यः ) सख्ये।

( ३ ) ख्यायात् = खि खी च ति ती च एतेषां समाहारः, ख्यत्यम्। तस्मात् ख्यत्यात् = खितिशब्दसे तथा खीती शब्दसे ( यदि वे कृतयणादेश = ई क

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यणादेशाभ्यां परस्य ङसिङसोरत उः। सख्युः। ४ औत् ७।३।११८। इदुद्भ्यां परस्य ङेरौत्। सख्यौ। शेषं हरिवत्।

१८५ पतिः समास एव १।४।८। घिसंज्ञः। पत्या। पत्ये। पत्युः २। पत्यौ। शेषं हरिवत्। समासे तु भूपतये। कतिशब्दो बहुवचनान्तः। ६ बहु-गुण-वतु-डति संख्या १।१।२३। ७ डति च १।१।२५।

---

स्थान मे य यण् हो चुका हो ) परे ङसि ङस् सम्बन्धी अको 'उ' हो। यथा अवधि की विवक्षा में। सखि + ङस् अनुबन्धलोपे इ स्थाने य् यणिकृते सख्यस्। यहाँ यण् किया हुआ खिती से परे ङस् के 'अ' को उ हो गया। सकारस्य रुत्व-विसर्गौ सख्युः ( पठामि, मित्र से पढ़ता हूँ ) सख्योः सखीनाम् ( यज्ञोपवीतानि अभवनन् ) ओस् परे यणि। आम् परे नुट् दीर्घ इति विशेषः। दीर्घ उदाहरणं, सुखी = सुख्युः। सुती सुत्युः समझे।

( ४ ) ह्रस्व इकार या उकारसे परे ङिविभक्ति के स्थान में औत् दो मात्रिक औकार हो। यथा—सखि + ङि औत् ङिको औ यण् सख्यौ, सख्योः सखिषु। अवशिष्ट रूप हरिकी तरह जाने। पूर्वेण सिद्धे आरभ्यमाणो विधिः नियमाय कल्पते। पतिशब्द को पूर्वसूत्र शेषोघ्यसखिसे घिसंज्ञा सिद्ध थी ही, पुनः घिसंज्ञाका विधान नियमार्थक होगा कि ( १८५ ) पति शब्द को यदि घिसंज्ञा हो तो किसी के साथ समास होनेपर ही हो। पाति = रक्षति पुष्यति। पतिः, पती पतयः। पतिं पती पतीन्। साधनविवक्षामें पति + टा, यहाँ प्राप्त—घिसंज्ञा उक्तनियमसे बाधित हो गई। क्योंकि समास नहीं हैं। अतः यण् पत्या। के लिए अर्थ में पत्ये ( शेते ) पति + ङसि अवधि या सम्बन्ध अर्थ में ङस् अनुबन्धलोपे यण् 'प्रत्यस्' 'ख्यात्यात्परस्य "अ" को 'उ' सकारस्य रुत्वविसर्गौ पत्युः। अधिकरण विवक्षामें पति + ङि तत्स्थाने 'औत्' सूत्र से औ यणि पत्यौ। शिष्टं हरिवत्। नियम सूत्र में समासग्रहण का फल देते हैं कि भुवः पतिः भूपतिः, तस्मै भूपतये यहाँ समास होने से घिसंज्ञा तन्निमित्तकगुण, अय् आदेश सम्भव हुआ। किम् शब्द से सङ्ख्या अर्थमें डति प्रत्ययसे बना, कतिशब्द नित्य बहुबचनान्त है। उसके एकबचन, द्विबचन नहीं हैं।

( ६ ) बहुशब्द; गणशब्द, वतुप्रत्यय, जिसके अन्त में हो तथा डतिप्रत्यान्त को सङ्ख्या संज्ञा हो। बहु = अधिक गणन ( समूह )। वतु–यथा–यावत्–तावत्। डतिप्रत्ययान्त कतिशब्द ( कितना अर्थकी अर्थवत्ता से ) प्रातिपदिकसंज्ञक से प्रथमा याः बहुबचने जस् संख्यासंज्ञाका फल है कि ( ७ ) डतिच। च = षान्त नान्त की तरह डति = अति प्रत्ययान्त सङ्ख्यावाची ( कति ) शब्दको षट् सञ्ज्ञा हो।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्यन्ता संख्या षट्संज्ञा स्यात् । ८ षड्भ्यो लुक् ७ । १ । २२ । जश्शसोः । ९ प्रत्ययस्य लुक्-श्लु-लुपः । १ । १ । ६१ । लुक् श्लु-लुप्-शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् । १९० प्रत्ययलोपे प्रत्ययलक्षणम् १ । १ । ६२ । प्रत्यये लुप्ते तदाश्रितं कार्यं स्यात् । इति जसि चेति गुणे प्राप्ते— । १ न लुमताऽङ्गस्य १ । १ । ६३ । लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् । कति २ । कतिभिः । कतिभ्यः २ । कतीनाम् । कतिषु । युष्मदस्मद्षट्संज्ञकास्त्रिषु सरूपाः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः २ । २ त्रेस्त्रयः ७ । १ । ५३ । त्रिशब्दस्य त्रयादेशः

---

जिसका फल है। (८) षड्भ्योलुक्—षट्संज्ञक (कति) शब्दसे परे जस् तथा शस्का लुक हो। बहुगण आदिशब्द लोकप्रसिद्ध सङ्ख्यावाची नहीं है अतः सङ्ख्या संज्ञाका विधान किया। न च—(९) प्रत्ययस्य लुक्श्लुलुपः—लुक् श्लु तथा लुप्शब्द से कृतं = किया गया प्रत्ययस्य=प्रत्ययका अदर्शन—(लोप) उसको क्रम से लुक् श्लु लुप संज्ञा हो। (१९०) प्रत्ययलक्षणम्—प्रत्यय है लक्षण कारण जिस कार्यका उसको प्रत्ययलक्षण कहते हैं। प्रत्ययलोपे—जहाँ प्रत्ययका लोप हुआ हो, वहाँ तदाश्रितं = प्रत्यय के आश्रित (आधारित निमित्तक) कार्य हो लुप्त जस्को सूत्रसे प्रत्ययलक्षणमानकर जसि च सूत्र से 'कति' में इको गुण प्राप्त हुआ। प्रत्ययलक्षणका निषेध सूत्र। (१). लु अस्ति अस्य इति लुमान् । तेन लुमाता (लुक्, श्लु, लुप्) तीनों में लु शब्द हैं, इनको निमित्त (कारण) मानकर अङ्गकार्य नहीं होते। प्रसङ्ग में कति शब्दों से लुप्त जस् विभक्ति मानकर प्राप्त अङ्ग कार्य को गुण नहीं हुआ, कति—कितनोंको। कतिभिः कितनों के द्वारा। कतिभ्यः=कितने के लिए या कितनी अवधि। कतीनाम्=कितनी सङ्ख्यका। कतिषु=कितनों में।

तीनों लिङ्ग में एकरस रहनेवाले शब्द की सूचना। युष्मद्, अस्मद् तथा षट् संज्ञा वाले शब्द त्रिषु=तीनों लिङ्ग में सरुपा (समानं रुपं येषान्ते) समान रूप वाले। यथा—त्वं स्त्री अहं स्त्री। कति पुरुषाः, कति स्त्रियः, कति फलानि। तीनों लिङ्ग में कतिशब्द एक रूप है। ऐसे ही त्वं युवां युयम्। अहम् आवां, वयम्। ये तीनों लिङ्गों में एक रस रहते हैं। त्रिशब्द का तीन सङ्ख्या अर्थ है, अतः नित्यबहुबचनान्त माना गया। यथा—त्रिशब्दस्य प्रातिपदिक संज्ञायां जस् (जइत्) ह्रस्वस्यगुणे अयादेशे सस्य रुत्वादिः त्रयः (पुरुषाः)। त्रि + शस् 'श्' इत्। पूर्वसवर्णदीर्घे सस्थाने (तस्मेच्छसो नः) नकारे त्रीन् इत्यर्थः। अन्वितक्रियाके फलका आश्रय कर्म है। यदि साधन अर्थ में त्रिशब्द हो तो, उससे भिस् आदि स्वादिकार्य हुए। त्रिभिः। उद्देश्य या अवधि अर्थ में

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्यादाभि । त्रयाणाम् । त्रिषु । गौणत्वेऽपि—प्रियत्रयाणाम् ।

३ त्यदादीनामः ७ । २ । १०२ । एषामकारो विभक्तौ । ( द्विपर्यन्तानामेवेष्टिः ) द्वौ । द्वौ । द्वाभ्याम् ३ । द्वयोः २ । पाति लोकमिति पपीः = सूर्यः । दीर्घाज्जसि च । पप्यौ २ । पप्यः । हे पपीः । पपीम् । पप्या ।

---

त्रिशब्दात् भ्यस् त्रिभ्यः ( २ ) त्रिशब्द से सम्बन्ध अर्थ में आम् । ( २ ) त्रेः = त्रिशब्दस्य स्थानें त्रेस्त्रयः इति त्रय आदेशः आम् परे त्रय+आम् नुट्, दीर्घे त्रयाणाम् । त्रिषु । आधारभूत 'त्रि' शब्दस्य प्रा० संज्ञायाम् सुप् षत्वादिकार्ये । गौणत्वेऽपि = विशेषणत्वेऽपि । यदि त्रि शब्द विशेषण, गौंण, अप्रधान भी हो जाय । जैसे—प्रियः त्रयो ( प्रियास्तिस्रः ) यस्यस प्रियत्रिः । तीन व्यक्ति प्रिय हो । जिसे प्रियत्रिः । पुरुषः । यहाँ त्रिशब्द उपसर्जन ( विशेषण ) गौंण है । यहाँ भी आम् विभक्ति परे त्रिशब्द को त्रय आदेश हुआ । नुट् दीर्घे रूपं हरिवत् । त्यद् तद् यद्, इदम्, अदस्, एक, द्वि इतने सर्वनाम को अत्व अकारान्त विधान का सूत्र ।

( ३ ) त्यदादीनाम् = त्यद् तद् इत्यादि । एषां = इन सबों को अकार अन्त में हो । विभक्ति परे । अलोऽन्त्यस्य से अन्त्य अल्को अ हुआ । इससे अदन्त मानकर अङ्गसंज्ञा हुई । यह अकार विधान क्या सम्पूर्ण त्यदादि के लिए है ? तब बोले—द्विपर्यन्तानां = त्यद से लेकर एकद्विपर्यन्त को ही अकार विधान इष्टिः = इष्ट है । यथा—इकारान्त प्रसङ्गानुकूल उदाहरण द्विशब्दस्य द्विवचने औ त्यदादिः 'द्वि' इति उसका अन्त्यअल् 'इ' उसको 'अ' हुआ । वृद्धौ । द्वौ । द्वि+भ्याम् अत्वदीर्घौ द्वाभ्याम् । रूपं सर्ववत् । सभी विभक्तियों का कारक के अनकूल अर्थ जानें । इति ह्रस्व इकारान्ताः ।

पाति = रक्षति लोकम् = जगत्, संसार पालक इति पपीः । रक्षणार्थक या धातु से "यापोः कित् द्वे च" से ई प्रत्यय पा को द्वित्व कित् का फल आ का लोप । पपीः । सूर्य अर्थ से अर्थवान् पपी को प्रातिपदिक संज्ञा सु रुत्वदिसर्गौ । उक्ते = प्रातिपदिकार्थे प्रथमा भवति । पपी औ—यहाँ प्राप्त पूर्वसवर्णदीर्घ का दीर्घाञ्जसि च से दीर्घ 'ई' से परे इच् = औ देखकर निषेध हुआ, यण् पप्यौ । सूर्यौ । पपी - जस् = अस् यण् । पप्यः । रक्षकाः, सम्बोधन = आवाहन अर्थ में । हे पपीः । सु रुत्वे विसर्गे । पपी + अम् अकारका पूर्वरुप । पपीं नमस्कुरु । पपी + शस्, (अस्) पूर्वसवर्णदीर्घ सकारस्य नत्वे । पपीन् । रक्षक अनेक कर्म ये जिस क्रिया में अन्वित हों उस क्रिया के फलाश्रय होनेसे सभी कर्मसंज्ञक होते हैं । साधन अर्थवाला पपीशब्द प्रा० संज्ञक से टा' = आ । यण्, पप्या । पपीभ्याम् । उद्देश्य, था अवधिभूत सूर्य । पपी ए यण् पप्ये । पपि + ङस् अस् यण् पप्यः । पपि + ओस् यणि रुत्वेविसर्गे पप्योः । पपिशब्द से षष्ठीबहुवचने आमि । यहां दीर्घ से परे

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पपीभ्याम् ३। पपीभिः। पप्ये। पपीभ्यः २। पप्यः। पप्योः। दीर्घत्वान्न नुट्, पप्याम्। ङौ तु सवर्णदीर्घः। पपी पप्योः। पपीषु। एवं वातप्रम्यादयः। बह्वयः श्रेयस्यो यस्य स बहुश्रेयसी। ४ यू स्त्र्याख्यौ नदी १।४।३। ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः। (प्रथमलिङ्गग्रहणं च) = पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः। १९५ अम्बार्थनद्योर्ह्रस्वः

---

आम् को नुट नहीं हुआ। ह्रस्व से ही नुट् होता है। दीर्घत्वान्न नुट्। पुलिङ्गत्वात् न नदीसंज्ञा। यण् पप्याम्। ङि विभक्ति में सवर्णदीर्घ होता है। पपि+ङि = इ पपी। पपीषु—सप्तमी बहुवचन षत्व, रक्षकों में। एवम् = पपी शब्द की तरह वातप्रम्यादयः = वातं प्रभिमीते, वायुं तोलयति, जो तेज हवा को तौले बराबरी करे, या तेज चले, उसे वातप्रमी (मृग) कहते हैं (क्विप्) वातप्रमी को भी समझें। यथा—वातप्रमीः, वातप्रम्यौ वातप्रम्यः। षष्ठी—वातप्रम्यः वातप्रम्योः, वातप्रम्याम्, इत्यादि।

बह्वयः = बहुसङ्ख्याकाः, श्रेयस्यः = कल्याण्यः स्त्रियः यस्य (पुरुषस्य) स (पुरुषः) बहुश्रेयसी। अधिक भाग्यशालिनी स्त्रीवाला पुरुष अर्थ से अर्थवान् प्रा० संज्ञक बहुश्रेयसी शब्दात् प्रातिपदिकार्थे प्रथमायाः सु। 'सु' का हल्ङ्यादिलोप। बहुश्रेयस्यौ, बहुश्रेयस्यः। पुण्यात्मा पुरुष। सम्बोधन सूचक है (शब्द) प्रयोगे हे बहुश्रेयसी 'सु' इति दशायाम्। (४) यू = ईश्च ऊश्च इति यू = ईकार उकारौ। स्त्राख्यौ = स्त्री आख्या = प्रसिद्धिः ययोस्तौ स्त्र्याख्यौ (इकारोकारौ) अथवा स्त्रियमाचक्षाते = स्त्रित्वं प्रकाशयतः इति स्त्र्याख्यौ = स्त्रीलिङ्गबोधकौ ईकारोकारौ। ईकारान्त उकारान्तशब्द यदि नित्यस्त्रीलिङ्गबोधकहों तो नदी संज्ञक हों। शंका—बहुश्रेयसीशब्द, ईकारान्त है, पर नित्य या वैकल्पिक स्त्रीलिङ्ग का बोधक नहीं हैं, नदी संज्ञा कैसे? तब बोले—'प्रथमलिङ्गग्रहञ्च प्रथमं = समासकी पूर्व दशा में जो लिङ्ग रहता है उसको नित्य मानकर भी नदी संज्ञा निर्विघ्न हो। यह शब्दः समासात्पूर्वं स्त्रिलिङ्गमाह—समासे कृते उपसर्जनदशायां लिङ्गव्यत्ययेऽपि, नदी संज्ञा भवतीत्यर्थः। अत आह पूर्वमिति = पूर्वकाल में स्त्रीलिङ्ग की प्रसिद्धि या प्रधानता के उपसर्जनत्वेऽपि = गौड़ (अप्रधान, विशेषण) हो जाने पर भी नदीसंज्ञा स्वीकृत है। नित्यस्त्रीलिङ्ग उसे कहते हैं जो लिंगान्तर (अन्य लिंग) का स्पर्श न करे। (१९५) अम्बायाः अर्थः अम्बार्थः। स च नदी च अम्बार्थनद्यौ तयोः। माता—अर्थ वाचक तथा नदीसंज्ञक अङ्गको ह्रस्व हो सम्बुद्धि परे। सम्बुद्धि सूचक—हे पूर्वक बहुश्रेयसी से 'सु' प्रथमलिङ्गग्रहणं मत्वा नदीसंज्ञा। तन्निमित्तक अम्बार्थनद्योः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

७।३।१०७। सम्बुद्धौ। हे बहुश्रेयसि। ६ आण्नद्याः ७।३।११२। नद्यन्तात् परेषां ङितामाडागमः।

७ आटश्च ६।१।९०। आटोऽचि परे वृद्धिरेकादेशः। बहुश्रेयस्यै। बहुश्रेयस्याः २। नद्यन्तत्वान्नुट्। बहुश्रेयसीनाम्। ८ ङेराम्नद्याम्नीभ्यः ७।३।११६। नद्यन्तादाबन्तान्नीशब्दाच्च परस्य ङेराम्। बहुश्रेयस्याम्।

---

ह्रस्वः। ह्रस्वे, ह्रस्वात् सम्बुद्धिलोपे। हे बहुश्रेयसि। (६) नद्याः = नद्यन्त = नदीसंज्ञकशब्द अन्त में हो, उससे परे ङितां = ङे ङसि, ङस् ङिको आट् हो। (७) आटः = आट् (आगम) (आ) से च = अचि परे रहते पूर्व, परके स्थान में वृद्धि एकादेश हो। यथा— बहुश्रेयसी शब्दात् क्रियाफलप्रापकार्थे चतुर्थ्येकवचने ङे (ङ इत्) 'ए' ईदन्तस्य प्रथमलिङ्ग ग्रहणञ्चेति सहकारेण नदी संज्ञा, नद्यन्तस्य आट् बहुश्रेयसी + आ + ए 'आटश्चेति' वृद्धौ यणि बहुश्रेयस्यै इति। बहुश्रेयसीभ्याम् बहुश्रेयसीभ्यः। बहुश्रेयसी + ङस् = अस् नदीसंज्ञा, आट् आगम वृद्धिः, यण् रुत्वविसर्गे, बहुश्रेयस्याः, बहुश्रेयसीभ्याम्, बहुश्रेयसीभ्यः। बहुश्रेयसींशब्दात् बहुवचने आमि, नदी संज्ञा, नद्यन्त होने से नुट् = न। बहुश्रेयसीनाम्। (८) ङेः (स्थाने) आम्, नदी, आम् नीशब्देभ्यः। नद्यन्त हो या आबन्त तथा नी शब्द से परे ङिविभक्ति को आम् हो। बहुश्रेयसी + ङि नदीसंज्ञा 'ङेरामि' यणि बहु श्रेयस्याम्। बहुकल्याणी स्त्रीवाले में। शेष = नदीसंज्ञा तथा उसके कार्य से सिद्ध शब्द समझाये गये। अब अवशिष्ट विभक्तियों के रूप 'पपी' शब्द की तरह समझें। लक्ष्मीमतिक्रान्तः अतिलक्ष्मीः (पुरुषः)। लक्ष्मी को भी अतिक्रमण करने वाला। लक्ष्येर्मुट् च, लक्षः = सिद्धिः अस्ति अस्यां अर्थ में लक्ष शब्द से मुट् = म् तथा ई प्रत्यय होता है। सुविभक्ति का (स्त्रीलिङ्ग बोधक ङीप्, ङीष्, ङीन् का 'ई' नहीं है तो ङ्यन्त न होने से) लोप नहीं हुआ। अङ्यन्तत्वात् न सुलोपः। रुत्वे विसर्गे अतिलक्ष्मीः। अन्य सभी रूप बहुश्रेयसीवत् चलेंगे। क्योंकि 'लक्ष्मीमतिक्रान्तः' इस दशा में लक्ष्मीशब्द स्त्रीलिङ्ग है, उससे बना अतिलक्ष्मीशब्द में प्रथम लिङ्ग नित्य स्त्रीलिङ्ग मानकर नदीसंज्ञा निश्चित है। उसके कार्य ह्रस्व, आट्, ङेराम् नुट्, ये अवश्य होंगे। अतिलक्ष्म्यौ, अतिलक्ष्म्यः अतिलक्ष्मीम् अतिलक्ष्म्यौ, अतिलक्ष्मीन्। अतिलक्ष्म्या, अतिलक्ष्मीभ्याम्, अतिलक्ष्मीभिः। अतिलक्ष्म्याम् अतिलक्ष्म्योः अतिलक्ष्मीषु। प्रकर्षेण ध्यायति, पूर्णरूपेण चिन्तनं करोति। ध्यैचिन्तायाम् चिन्तन-मनन् कर्ता अर्थ से अर्थवान् प्रधीशब्दस्य प्रा० सं० सु रुत्व विसर्गौ प्रधीः। चिन्तकः सूक्ष्मध्यान कर्ता। नाऽयं स्त्रीलिङ्गः। यदि प्रकृष्टाधीः बुद्धिर्यस्य अर्थ करें तो प्रथम लिङ्ग धी शब्द के नित्य स्त्रीलिङ्ग होने से नदी संज्ञा उसके कार्य होंगे।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शेषं पपीवत्। अङ्यन्तत्वान्न सुलोपः—अतिलक्ष्मीः, शेषं बहुश्रेयसीवत्। प्रधीः। ९ अचि श्नु-धातु-भ्रुवां य्वोरियङुवङौ ६। ४। ७७। श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाङ्गस्येङुवङौ स्तोऽजादौ प्रत्यये परे। इति प्राप्ते—

२०० एरनेकाचोऽसंयोगपूर्वस्य ६। ४। ८२। धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यणजादौ प्रत्यये। प्रध्यौ। प्रध्यम्। प्रध्यः। प्रध्यि। शेषं पपीवत्। एवं ग्रामणीः।

---

परन्तु यहाँ तथा नास्ति। यहाँ भी ङ्यन्त न होने से सुलोपो नास्ति। यद्यपि कुछ शब्दों में सुलोप नहीं होता यथा—

अवी तन्त्रीतरी लक्ष्मी धी, ह्री श्रीणामुणादितः।
अपि स्त्रीलिङ्गवृत्तीनां सोर्लोपो न कदाचनः॥

उणादि से सिद्ध 'ई' प्रत्ययान्त से सुलोप नहीं होता। प्रधी+औ इति दशायाम्—

( ९ ) अचि=अच् परे, श्नु=श्नुप्रत्यय हो अन्त में जिसके, धातुः=इकारान्त उकारान्त धातु के, भ्रूः=भ्रू शब्द के अङ्ग के स्थान में युवोः=इकारोकारयोः स्थाने क्रम से इयङ् उवङ् हो अजादि प्रत्ययपरे। इवर्णान्त धातु 'धी' का अङ्गभूत ई को इयङ् प्राप्त हुआ। यद्यपि प्रथमप्राप्त यण् को बाधकर प्राप्त पूर्वसवर्णदीर्घ का "दीर्घाज्जसि च" से निषेधः। पुनः यण् को बाधकर इयङ् की प्राप्ति है।

( २०० ) एः=धातु का अवयव संयुक्त अक्षर पूर्व में न हो ऐसा इवर्ण हो अन्त में जिसके, ऐसा धातु तदन्त=वह धातु हो अन्त में जिसके ऐसे अनेकाच् अङ्ग के स्थान में यण् हो अजादि प्रत्यय परे। प्रसङ्ग में धातु ईवर्णान्त धी है, उसके पूर्व में संयुक्त वर्ण नहीं है, वह अन्त में प्रधी के है वही अनेकाच् अङ्ग भी है। 'अलोऽन्त्य' सूत्रसे अन्त्य अल् ( ई ) को यण् हुआ। प्रध्यौ, तन्मयध्यानकर्तारौ। तथैव कर्म की विवक्षा में प्रधी + अम् अत्रापि इयङ् प्रबाध्य यण्, पूर्ववत् बोध्यः। प्रध्यम्। प्रध्यौ, प्रध्यः। प्रध्या, प्रधीभ्याम्, प्रधीभिः। प्रध्ये, प्रधीभ्याम्, प्रधीभ्यः। प्रध्यः, प्रध्योः प्रध्याम्। ङौ, यणि, प्रध्यि। शेषं पपीवत्। एवम्=प्रधीशब्द कीतरह ग्रामं नयतीति ग्रामणीः। गाँव का नेता, मुखिया या प्रधान व्यक्ति अर्थ में प्रातिपदिकसंज्ञा 'सु' रुत्वे विसर्गे, णत्वे ग्रामणीः। केवल सप्तमी विभक्ति में ङेराम्नद्याम्नीभ्यः, से 'ङि' को आम् यण् होकर ग्रामण्याम् ग्राम प्रधान का शेषं=प्रधीवत् रूप जाने। अनेकाचः किम्? सूत्र में अनेकाच् अङ्ग को यण् का विधान क्यों? इसलिए कि एकाच् अङ्ग के इकार को यण् न हो जाय। यथा—

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ङौ तु ग्रामण्याम्। अनेकाचः किम्–नीः नियौ नियः। अमि शसि च परत्वादियङ्। नियम्। नियः। ङेराम्, नियाम्। असंयोगपूर्वस्य किम्—सुश्रियौ। यवक्रियौ। १ गतिश्च १।४।६०। प्रादयः क्रियायोगे गति-संज्ञाः स्युः (गतिकारकेतरपूर्वपदस्य यण् नेष्यते)। शुद्धधियौ। २ न भूसुधियोः ६।४।८५। एतयोरचि सुपि यण् न। सुधियौ। सुधियः,

---

नयतीति नीः नयन=संचालन या प्रापणकर्ता नेता अर्थ में प्रातिपदिकसंज्ञा स्वादिकार्ये नी+औ, यहाँ एकाच् अङ्ग होने से यण् बाधक नहीं बना। इयङ् हुआ। नियौ, नियः नी+अम् इति दशायाम् अमि पूर्वरुपं प्राप्तं परत्वात् इयङ् आदेशे। नियम्, नियौ, नियः। पूर्णसवर्णदीर्घ बाधित्वा च इयङादेशे नियः, नियोः, नियाम्, इति। ङिस्थाने आम्, इयङ्, नियाम्, नियोः, नीषु। असंयोगपूर्वस्य किम्? सूत्र में संयुक्त (हल्) वर्ण धातु के पूर्व में न हो तभी यण्का विधान क्यों? इसलिऐ कि शोभनं श्रयति=सेवते इति सुश्रीः सुसेवकः अर्थवाला प्रातिपदिकसंज्ञक "सुश्री" शब्दसे स्वादिकार्य हो, यण् न हो। यदि शोभना श्री सुश्री उच्यते तर्हिनित्य स्त्रीलिङ्ग होनेसे नदीसंज्ञा तदनुकूलकार्यं होने लगेगा। सुश्री+औ। यहाँ धातुसंयोगपूर्वक है। अतः यण् न होकर इयङ हुआ सुश्रियौ। इसीप्रकार यवं क्रिणातीति यवक्रीः। जब खरीदनेवाला, यवक्रियम् यवक्रियौ, यवक्रियः। यवक्रिये, यवक्रीभ्याम्, यवकीभ्यः। यवक्रियि, यवक्रियोः, यवक्रीषु।

(१) प्रादयः=प्र, परा, अप, सम, आदि क्रियायोगे=क्रियासे जुड़ हो तो गति संज्ञा भी हो। गतिसंज्ञक तथा कारक इन दोनों में से कोई एक पूर्व पद हो, तब यण् नहीं होता। यह नियम है। शुद्धं=दोषरहितं निर्विकारं ध्यायति=साक्षात् करोति इति—शुद्धधीः। सफलचिन्तक अर्थ को प्रातिपदिक संज्ञा स्वादिः। शुद्धधी+औ, यहाँ शुद्धशब्द कर्मकारक उपपद रहनेपर धीमें ईको २०० सूत्र से यण् प्राप्त होता है। उसका निषेध (कारक पूर्वपद होने से) 'यण् नेष्यते' से हुआ। तब इयङ् हो गया। शुद्धधियौ (२) भू और सुधी शब्द को अचिसुपि=अजादि सुप्विभक्तिपरे यण् न हो। सुष्ठु ध्यायति सुधीः। सुधी+औ। यहाँ प्राप्त एरनेकाच् यण्का न भूसुधियोःसे निषेध तब इयङ्। सुधियौ। सुखमिच्छति सुखीः सुखकी इच्छा करनेवाला अर्थ मेंसुखी शब्द को प्रातिपदिक आदि कार्य हुए। इसी प्रकार सुतं=पुत्रमिच्छति अर्थ में। सुतीः भी प्रसिद्ध है। दोनों में अजादि विभक्ति परे रहते यण् हुआ। सुख्यौ, सुत्यौ, ङसि ङस विभक्ति में भी यण् तथा 'ख्यत्यात्परस्य' उत्वविधानकर सुख्यु, सुत्युः सुखीभ्यः। सुत्युः सुत्योः, सुत्याम्। शेष प्रधीवत्। उकारान्त, पुलिङ्गशब्द

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्यादि। सुखमिच्छतीति सुखीः। सुतमिच्छतीति सुतीः। सुख्यौ, सुत्यौ। सुख्युः, सुत्युः। शेषं प्रधीवत्। शम्भुर्हरिवत्। एवं भान्वादयः। ३ तृज्वत् क्रोष्टुः ७।१।९५। असम्बुद्धौ सर्वनामस्थाने परे क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः। ४ ऋतो ङि-सर्वनामस्थानयोः ७।३।११०। ऋतोऽङ्गस्य गुणो ङौ सर्वनामस्थाने च। इति प्राप्ते— । २०५ ऋदुशनस्पुरुदंसोऽनेहसां च ७।१।९४। ऋदन्तानामुशनसादीनां चानङ् स्यादसम्बुद्धौ सौ। ६ अप्तृन्-तृच्-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ होतृ-पोतृ-प्रशा-

---

हरिशब्दकी तरह होते हैं। यथा—शम्भुः शम्भू शम्भवः। शम्भुम् शम्भू शम्भुन्। शम्भुना शम्भुभ्यां शम्भुभिः। शम्भवे, शम्भुभ्याम्, शम्भुभ्यः। शम्भोः शम्भुभ्याम्, शम्भुभ्यः। शम्भोः शम्भवोः शम्भूनाम्, शम्भौ शम्भवोः, शम्भुषु। हे शम्भो इत्यादि। एवं=उकारान्त पुलिङ्ग भानु आदि को समझें।

शृगाल, वंचक, क्रोष्टु, फेरु, जम्बुका ( गीदड़ ) ऋषि, अर्थ से अर्थवान् शब्दस्वरूप क्रोष्टु शब्दस्य प्रातिपदिकसंज्ञायाम् 'सु'। ( ३ ) सम्बुद्धिसंज्ञक से भिन्न-सर्वनाम स्थान=( सु, औ, जस् अम्, औ, विभक्ति ) परे हों तो क्रोष्टुः=क्रोष्टु शब्दके स्थान में तृज्वत्=तृच्प्रत्ययेन तुल्यं क्रोष्टृ आदेशो भवति। ऋकारान्त क्रोष्टृ शब्दका प्रयोग करना चाहिए। केवल सर्वनामस्थानमें क्रोष्टृ + सु। ४) ऋतः=ऋकारान्तअङ्गकेस्थान में गुण हो सर्वनामस्थानयोः=ङि विभक्ति तथा सर्वनामस्थानसंज्ञकविभक्तिपरे हो तो। इससे ऋदन्त अङ्ग को गुण प्राप्त हुआ ( २०५ ) ऋत्=ऋदन्तानाम् उशनस् ( शुक्राचार्य ) ( पुरुदंस्=माजीरी ( बिल्ली ) उशनन् ( शुक्राचार्य ) ( पुरुदस् )=माजीरी ( बिल्ली ) अनेहस ( समय ) शब्द को अनङ्आदेश हो च=सम्बुद्धिभिन्न सुपरे। ऋदन्त अङ्गक्रोष्टृ के ऋको अनङ्=अन् हुआ। सम्बुद्धिभिन्न 'सु' समझकर। क्रोष्टन् सु। ( ६ ) अप् ( जल ) तृन्-तृच् ( प्रत्ययान्त ) स्वसृ=( बहन ) नप्तृ=( पुत्रिपुत्रः नाती ) नेष्टृ=दाता, त्वष्टृ ( असुर पुरोधा ) क्षत्रि=( द्वारपाल, रक्षक संचालक ) होतृ=होता। पोतृ=पवित्रकर्ता, प्रशास्तृ=प्रशंसनीय शासक, ये सभी अबादि हैं। उनके उपधाके स्थान में दीर्घ हो, सम्बुद्धिभिन्नसर्वनामस्थान परे। क्रोष्टन् में अन्त्य अल् 'न' के पूर्व वर्ण 'अ' को उपधासंज्ञा, उसीको दीर्घ हुआ। एकदेश विकृत न्याय से क्रोष्टन् को तृजन्तमानकर। क्रोष्टान् + सु हलङ्यदिलोपे, प्रातिपदिकान्त नलोप। कोष्टा ( शृंगालः, ऋषिर्वा कश्चित् ) कोष्टु + औ प्रातिपदिक-संज्ञा विभक्तिकी उत्पत्ति पूर्ववत्, समझें। तृज्वद भाव भी। ऋदन्त अङ्गमानकर गुण 'अर्' उसके उपधा ( पूर्ववर्ण ) को ६ से दीर्घ वर्णसंम्मेलने। अनेक शृंगाल बोधके बहुवचने क्रोष्टु जस् तृज्वत्, गुणे, रपरे उपधादीर्घ, रुत्वविसर्गे

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्तृणाम् ६। ४। ११। अबादीनामुपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने। क्रोष्टा। क्रौष्टारौ २। क्रोष्टारः। क्रोष्टारम्। क्रोष्टून्। ७ विभाषा तृतीयादिष्वचि ७। १। ९१। अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्ट्रा। क्रोष्ट्रे। ८ ऋत उत् ६। १। १११। ऋतो ङसिङसोरत उदेकादेशः। रपरः।

९ रात् सस्य ८। २। २४। रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य। रेफस्य विसर्गः। क्रोष्टुः। क्रोष्टोः। (नुमचिरतृज्वद्भावेभ्यो नुट् पूर्ववि-

---

क्रोष्टारः। अम् विभक्तिपरे भी वही प्रक्रिया। शस्‌विभक्ति में तृज्वत् नहीं होता, सर्वनाम परे न होने से। क्रोष्टुशब्द में पूर्वसवर्ण दीर्घ शस् के सकार को पुंसि नकार हे क्रोष्टो। शम्भुवत्। हे क्रोष्टारौ, हे क्रोष्टारः। सुसे भिन्न सम्बोधनमें तृज्वद्। (७) अचि - अजादि विभक्ति हो तथा तृतीयादिषु=तृतीया, चतुर्थी आदि। (टा ङे, ङसि, ओस्, आम, ङि) ये अजादि विभक्ति हैं) इनके परे रहते क्रोष्टु शब्द विकल्प से तृज्वत् = क्रोष्टृरूप धारण करता है। क्रोष्टु शब्दस्य तृतीयैक वचने साधने अर्थे टा आको अजादिविभक्तिमानकर क्रोष्टृभाव तथा ऋको यण् क्रोष्ट्रा। पक्ष में क्रोष्टुना १६४ टा को 'ना' क्रोष्टुभ्याम्, क्रोष्टुभिः। ङे=ए विभक्ति में तृज्वभाव यण् क्रोष्ट्रे, पक्षे घिसंज्ञा गुणावादेशे क्रोष्टवे। क्रोष्टुभ्याम्, क्रोष्टूभ्यः। सम्बन्धित अर्थकी विवक्षायां क्रोष्टु + ङस् = अस् विकल्पेन तृज्वद्भावे क्रोष्टृ + अस्। (८) ऋतः = ऋकारान्तशब्दस्य ङसि ङस्‌सम्बन्धी अकारपरे पूर्वपर (ऋ तथा अ) के स्थान में उत् = 'उ' एकादेश हो। यहाँ तपर तत्काल का बोधक है। ऋ के स्थान में 'उ' विधान से र पर हुआ, क्रोष्टुर स् (९) रात् = रेफ से परे यदि संयोगान्त वर्णका लोप हो तो सस्यैव = सकार का ही लोप हो। अन्यवर्ण का नहीं। यह नियमसूत्र है। 'स' का संयोगान्त लोपः। रेफस्य विसर्गः क्रोष्टुः। पक्षे, क्रष्टोः (भानोः जैसा) ओस् विभक्ति में भी क्रोष्टवोः क्रोष्टोः। क्रोष्टु + आम्। यहाँ (इकोऽचि विभक्तौ) से प्राप्त नुम्। अचिरऋत से रभाव,। तृन्वत्क्रोष्टुः से तृजन्तभाव। इन तीनों को पूर्वविप्रतिषेध से बाधकर ह्रस्वान्त मानकर नुट् हुआ। नामि दीर्घः क्रोष्टूनाम्। तुल्यबलका विरोध होने पर व्यवस्थापक 'विप्रतिषधे परं कार्यम्' में परशब्दका इष्टं कार्यम् अर्थ है। पूर्वसूत्र इष्ट हो या परसूत्र प्रयोगसिद्धि के अनुकूल समझें। यहाँ नुट् अभीष्ट है। इसीलिए पूर्वं कार्यम् मान्य है। सप्तमी ङिविभक्ति में २०७ से तृज्वौ २०४ से गुण क्रोष्टरि क्रोष्टत्, क्रोष्टुषु। हलादिविभक्ति में शम्भुवत् रुपम्। गन्धर्व अर्थसे अर्थवान् हू हू शब्द को प्रा० स्वादिकार्य। हूहूः।

हूहू औ यण् हूह्वौ। सवर्णदीर्घ का 'दीर्घाज्जसिच' से निषेध हुआ। शस्

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रतिषेधेन ) क्रोष्टूनाम् । क्रोष्टरि । पक्षे हलादौ च शम्भुवत् । हूहूः । हूह्वौ । हूह्वः । हूहून् । इत्यादि । अतिचमूशब्दे तु नदीकार्यं विशेषः । हे अतिचमु ! । अतिचम्वै । अतिचमूनाम् । खलपूः । २१० ओः सुपि ६।४।८६। धात्ववयव-संयोगपूर्वो न भवति य उवर्णस्तदन्तस्यानेकाचोऽङ्गस्य यण्

---

विभक्ति में पूर्वसवर्णदीर्घ 'स' को 'न' हूहून् । चमूशब्द स्त्रीलिंग है । चमूं = सेनामतिक्रान्तोऽतिचमू शब्द अर्थवान् है । जो ( जत्था ) सेना को मात करदे । प्रथम स्थिति का लिंग नित्यस्त्री मानकर नदीसंज्ञा तथा उसका कार्य = ह्रस्व, आट्, ङेराम् आदि विशेष होते हैं । अतः हे अतिचमू + सु ऊ को नदीसंज्ञा अम्बार्थनद्यो ह्रस्व इति ह्रस्वे सुलोपे । अतिचमुम् अतिचमू = अतिचमून् । ङे विभक्ति में आट् नदीकार्य, वृद्धि, यण्, अतिचम्वै । अतिचमूभ्याम् अतिचमूभ्यः । ङसि और ङस् विभक्तिमें नदीसंज्ञा, आट्, वृद्धि, यण् । आम् परे नदीसंज्ञा नुट् अतिचमू + ङि = इ 'यू' सूत्र से नदीसंज्ञा ( ङेराम ) 'ङि' को आम्, यण् अतिचम्वाम् अतिचम्वोः, अतिचमूषु । सेना को भी मात करने वाली जनता ) । ( खलं ( खलिहान ) पुनाति ( मार्ष्टि, मृजू शुद्धौ ) खलिहान शुद्धकर्ता ) स्वच्छं करोति' अर्थं में खलपूशब्द से स्वादिकार्य खलपूः । ( २१० ) ओः – धातु का अवयव ( अङ्ग ) संयुक्तवर्ण पूर्व में न हो जिसके, ऐसा उकार हो अन्त में ऐसा धातु, वह हो अन्त में जिसके ऐसे अनेकाच् अङ्ग को यण् हो, अजादिसुप्परे । खलपू में पूधातु का पूर्ववर्ण संयुक्त नहीं है । वह उकारान्त भी है, वह ( पू ) खलपू के अन्त में भी है । अनेकाच् अङ्ग होने से अन्त्य अल् पूके 'उ' को यण् हुआ । खलप्वौ । (खलिहान) पवित्रकर्तारौ । एवं खलप्वः । अजादिविभक्तियों में यण् होगा । हलादि में साधारण रहेगा । गृहं पुनाति गृहपूः । राष्ट्रपूः, समाजपूः, वस्त्रपूः, क्षेत्रपूः । एवं सुष्ठु ( स्वच्छं शोभनं ) लुनातीति सुलूः । छेदन् लवन कर्ता अर्थ में उकारान्त शब्दों की तरह समझें ।

स्वभूः = स्वेन ( आत्मना ) भवति ( उत्पद्यते ) इति स्वभूः = ब्रह्मा स्वयं प्रकट होते हैं । ( स्वभूर्नाब्रह्मणि हरौ इति मेदिनी ) अर्थ से अर्थवान् स्वभूशब्दस्य प्रा० संज्ञा 'सु' रुत्वे विसर्गे स्वभूः । स्वयं पैदा होनेवाले जीव । प्रातिपदिकार्थ विवक्षायां । स्वभू + औ अच्परे उकार के स्थान में अचिश्नु उवङ् स्वभुवौ स्वभुवः । विशेषः—प्रथम यण् प्राप्तिः, उसे बाधकर पूर्व सवर्णदीर्घ, उसका निषेध 'दीर्घाज्जसिच' से पुनः प्राप्तयण् को बाधकर उवङ् समझें । यदि 'एरनेकाच् यण् प्राप्त हो तो 'नभूसुधियोः'से उसका निषेध जाने । स्वभुवं, स्वभुवौ, स्वभुवः । स्वभुवे, स्वभूभ्याम्, स्वभूभ्यः । प० स्वभुवः स्वभुवोः स्वभुवाम् । हे स्वभूः हे स्वभुवौ हे स्वभुवः । वर्षासु = वृष्टिकालेषु भवति ( उत्पद्यते ) इति

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्यादचि सुपि। खलप्वौ। खलप्वः। एवं सुल्वादयः। स्वभूः। स्वभुवौ। स्वभुवः। वर्षाभूः। १ वर्षाभ्वश्च ६।४।८४। अस्य यण् स्यादचि सुपि। वर्षाभ्वावित्यादि। दृन्भूः। (दृन्-कर-पुनः पूर्वस्य भुवो यण् वक्तव्यः) दृन्भ्वौ। एवं करभूः। धाता। हे धातः!। धातारौ। धातारः। ( ऋवर्णा-

---

वर्षाभूः। मेढ़क, केचुआ, कीड़े वर्षाकाल के जन्तु आदि। ( भेक्यां पुनर्नवायां स्त्री वर्षाभूः दर्दुरे पुमान् इत्यमरः। इस अर्थ से अर्थवान् को प्रा० सु रुत्व विसर्गो = वर्षाभूः ( मेढ़क )। वर्षाभू + औ। द्विवचन की विवक्षा में औपरे प्राप्त यण् को बाधकर पूर्वसबर्णदीर्घ उसका निषेध, पुनः यण् बाधकर उवङ् उसे बाधकर एरनेकाच् यण्, उसको 'न भूसुधियोः' से निषेध (१) वर्षाभू शब्द के अङ्ग के उकार को यण् हो। अजादिविभक्तिपरे। 'औ' अजादि है अतः उकारको यण् वर्षाभ्वौ अन्यरुप स्वभूवत्!

दृन् सर्पः वज्रम्वा भवतीति दृन्भूः। जो सांप् वज्र, तृप्, या सूर्य बन जाय, इस अर्थ में दृन्भूः पन्नगबज्रयोः इतिविश्वः। स्वादिकार्ये: दृन्भू + औ, यहाँ बाध्यबाधक भाव पूर्ववत्। दृन्कर तथा पुनः शब्द पूर्व में हो, भूशब्द को यण् कहना चाहिए। दृन्भभ्वः। कराद्भवतीति करभूः = हस्तकलाकी वस्तु। पूर्ववत् औविभक्ति में 'दृन्कर', वार्तिक से करपूर्वकभूको यण् हुआ। दधाति धारयति पुष्यति वा लोकान् धाता = जगत का धारणपोषणकर्ता अर्थ से अर्थवान् धातृशब्दस्य प्रा० संज्ञायां प्रथमैकवचने 'सु' विभक्तौ 'ऋ' स्थाने ऋदुशनस् अनङ् = अन् उपधादीर्घे, सुलोपनलोपौ धाता। धातृ + औ ऋस्थाने ऋतोङि अर्-गुणे उपधायाः दीर्घे, धातारौ। एवं धातारः। हे धातः = धातृ + सु "ऋतोङि,, सूत्रेण अर्गुणे सम्बुद्धिलोपे रेफस्य विसर्गे। धातारम्, धातारौ, धातृन्। पूर्वसवर्णे-दीर्घे नत्वं, विशेषः। धात्रा, धातृभ्याम् धातृभिः। धात्रे = ब्रह्माके लिए धातृ + ए यण्,। धातुः धातृभ्याम् धातृभ्यः। धातुः धात्रोः धातृणाम्। धातरि धात्रोः, धातृषु। ( वा० ) ऋवर्ण से परे 'न' को णत्व हो। ऋशब्द अट् प्रत्याहार में नहीं आता। इसीलिए अलग णत्वविधायक वार्तिक पढ़ा! नप्त्रादिग्रहणमिति—अप्तृन् तृच्-सूत्र में तृन् तृच् के ग्रहण से नप्तृ, नेष्टृ आदि शब्द गृहीत होते, उपधा दीर्घ के भागी बनते। तब नप्त्रादि को अलग से क्यों पढ़ा? अतः सिद्धे सति आरभ्यमाणो विधिर्नियमाय कल्प्यते। तृन् तृच् से ही सिद्ध दीर्घविधि है। नप्त्रादि ग्रहणव्यर्थ होकर नियम करते हैं कि उणादिनिष्पन्नानां तृन् तृच्प्रत्ययान्तानां संज्ञाशब्दाना-मुपधादीर्घश्चेत् तर्हि नप्त्रादीनामेव। उणादिप्रकरण के विषय में दोपक्ष हैं अव्युत्पन्न तथा व्युत्पन्न। जिसमें प्रकृति अर्थ प्रत्यय अर्थ का विभाग न हो उसे अव्युत्पन्न कहते हैं। व्युत्पत्तिपक्ष में प्रकृति प्रत्यय का अर्थ विभाग

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न्नस्य णत्वं वाच्यम् ) धातॄणाम् । एवं नप्त्रादयः । नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् । तेनेह न—पिता, पितरौ पितरः । पितरम् । शेषं धातृवत् । एवं जामात्रादयः । ना । नरौ । २ नृ च ६ । ४ । ६ । अस्य नामि वा दीर्घः नृणाम्, नॄणाम् ।

३ गोतो णित् ७ । १ । ९० । ओकाराद्विहितं सर्वनामस्थानं णिद्वत् । गौः । गावौ । गावः । ४ औतोऽम् शसोः ६ । १ । ९३ । ओतोऽम् शसोरचि आकार एकादेशः । गाम् । गावौ । गाः । गवा । गवे । गोः २ । इत्यादि ।

---

होने से नप्तृ नेष्टृ-होतृ-पोतृ आदि को तृन्नन्त तथा तृजन्त मानकर दीर्घ सिद्ध है । नियम = उणादि से सिद्धतृन् तृच् प्रत्ययान्त तथा संज्ञाशब्द की उपधा को दीर्घ हो तो नप्तृ, नेष्टृ, होतृ, पोतृ, प्रशास्तृ, शब्दों को ही हो । इसलिए पितृ, मातृ शब्द तृन्नन्त होते हुए दीर्घ नहीं होता । उक्त नियम से मुक्त हैं । अतः पितरौ, पितरः । मातरः मातरौ में उपधादीर्घ नहीं हुआ । अव्युत्पत्ति पक्ष में प्रकृति प्रत्यय विभाग न होने से सूत्र में गृहीत शब्द ही दीर्घ के भागी होंगे । इससे भी पित्रादि में दीर्घः न प्राप्नोति । पितरं, पितरौ, पितॄन् । ना=मनुष्य अर्थ से अर्थवान् 'नृ' शब्दस्य प्रा० संज्ञा 'सु' ऋृ, अनङ्, नान्त उपधा दीर्घ, सु लोपनलोपौ ना इति । नृ+औ, इतिदशायां ऋकारन्त अङ्ग के अन्त्य अल् के स्थान में अर् गुण २०४ से नरौ, नरः । नरं, नरौ नॄन्, न्रा:, नृभ्यां:२ नृभ्यः२ । नुः२ न्रो, नृणां, नॄणां । अत्र ( २ ) सूत्र से आमिपरे नृको विकल्प से दीर्घ हुआ । नामि से प्राप्त दीर्घ को बाध कर ।

( ३ ) गोतः = ओकार से विधान किया गया सर्वनामस्थानसंज्ञक ( सुऔ जस्, अम्, औट् ) को णिद्वत् = णित् मानकर कार्य हो । यथा— गच्छतीति गौः ( गमेर्डोसि् ) गाय अर्थ में योगरूढशब्द प्रसिद्ध है । ओतो णिदिति वाच्यम् इस वार्तिक के अनुरोध से सूत्र की वृत्ति में ओकार बढ़ गया । गो+सु, ओकार से विधान किया गया सु को णित् हुआ । जिसके कारण १८२ से अच् ( ओ ) के स्थान में वृद्धि हुई, गौः । गो+औ, णिद्वत्, वृद्धि आव् । गावौ, गावः । गो+अम् ।

( ४ ) औतो = आ, ओत्, इति पदच्छेदः । ओकार से अम् शस् सम्बन्धी अच् परे पूर्व के स्थान में आकार एकादेश हो । ( ओ तथा अ ) मिलकर आ । गां, गावौ, गाः । गो+शस् = अस् पूर्व पर ओ तथा अ मिलकर आ आदेश रूत्व विसर्गौ । गो+टा = आ, अव् आदेश, । गवा, गोभ्यां गोभिः । गवे, गोभ्यः, गोः गवोः, गवाम् । गवि, गवो : गोषु । हे गौः हे गावौ हे गावः । धनवाची प्रा० संज्ञक रैशब्द से सु ।

 CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

२१५ रायो हलि ७ । २ । ८५ । अस्याकारादेशो हलि विभक्तौ । राः रायौ । रायः । राभ्यामित्यादि । ग्लौः । ग्लावौ । ग्लावः ग्लौभ्यामित्यादि ।

इत्यजन्ताः पुंल्लिङ्गाः

---

( १५ ) रैशब्द का आकार अन्तादेश हो । हलादिविभक्ति परे रहते । रैशब्द को 'रा' हो गया रुत्व विसर्गः । राः, रायौ, रायः । रायं रायौ रायः । राया । रैभ्यां में रायो हलि से हलि परे रैशब्द को आत्व राभ्यां राभिः । राये, राभ्यः, रायः रायोः रायां । रायि रायोः रासु । ( आसज्यते ) ग्लायति कृष्णपक्षे क्षिणी भवति इति ग्लौः = चन्द्रमा । सु रुवि । ग्लावौ, ग्लावः । ग्लावं ग्लावौ ग्लावः । ग्लावा ग्लौभ्यां ग्लौभ्यः । ग्लावः ग्लावोः ग्लावाम् । ग्लावि ग्लावोः ग्लौषु ।

इस प्रकरण में अ, इ, उ, ऋ ए ओ ऐ औ वर्ण समाम्नाय के क्रम से रूप विधि बताई गई है । यथा—अ = राम, इ = हरिः, उ = भानु, ए = शे, औ=गौः, ऐ रै = औ ग्लौः ।

इति प्रभाकरीटीकायां अजन्तपुलिङ्गाः ।

# अथषाड्लिङ्गेषु अजन्तस्त्रीलिङ्गप्रकरणम्

रजोगुण प्रधान धर्म स्त्रीलिङ्ग है वह शब्द में लीन हो तथा अजन्त= अच् प्रत्याहार के अक्षर अन्त में हों, ऐसे शब्द का कारकानुसारी प्रकरण अजन्तस्त्रीलिङ्ग है। स्त्रीधर्म का उद्बोधक ( प्रकाशक ) ङीप् टाप् आदि प्रत्यय है । टाप् = आ ( रमा ) ङीप् = ई, ( गौरी ) ऊङ् ( कमण्डलूः ) इत्यादि । प्रकरण का प्रारम्भिक उदाहरण रमा = रमते विष्णुना साकं या, सा । जो विष्णु के साथ रमण करे या रमते जगत् यस्यां सा ( रमा ) । सारा संसार जिसमें धर्म, अर्थ, काम, मोक्ष का लाभ कर मगन हो । ( रम-क्रीडायां ) धातु से कर्ता आदि अर्थ में अच्, प्रत्यय, प्रातिपदिकसंज्ञा स्त्रीलिङ्ग का टाप् = आ । अकारान्तस्त्रीलिङ्ग, एकलक्ष्मीरूप कर्त्री अर्थ से अर्थवान् रमाशब्द से ङ्याप्प्राति-पदिकात् सूत्र से आवन्त मानकर परमें प्रथमा का एकवचन 'सु' विभक्तिः । रमा + सु-( उकार इत् ) स् ( रमा स् ) स् को अपृक्त संज्ञा उसी का 'हल्ङ्यादि' लोपे सति रमा सिध्यति । सत्य यह है कि प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि-ग्रहणम् । जहाँ प्रातिपदिकसंज्ञा होने से जो कार्य हो वहाँ स्त्रीलिङ्गपरिचायक टाप् आदि प्रत्यय से विशिष्ट ( युक्त ) का भी ग्रहण हो । ङीप् आप् ग्रहण का फल आर्यिका आदि । परिभाषा द्वारा प्रातिपदिक जानकर 'सु' समझे । प्रत्यय लोप होने पर प्रत्ययलक्षण से पद संज्ञा भी जाने ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथाजन्त-स्त्रीलिङ्गाः

**रमा । ६ औङ आपः ७।१।१८। आबन्तादङ्गात् परस्यौङः शी स्यात्। औङित्यौकारविभक्तेः संज्ञा। रमे। रमा ।७ सम्बुद्धौ च ७।३।१०६। आप एकारः स्यात् सम्बुद्धौ। एङ् ह्रस्वादिति सम्बुद्धिलोपः। हे रमे!,**

---

दो लक्ष्मी रूप अर्थ से अर्थवान **रमा, रमा,** को एक शेष करके एक रमाशब्द दो रमाशब्द को बोले, तव द्वितीया का द्विबचन औ। रमा + औ।

(६) औङ् = औ विभक्ति के 'स्थान में आपः = आकारान्त अङ्ग से। आबन्तादङ्गात् = आबन्त अङ्ग (रमा) से परे औ विभक्ति के स्थान में 'शी' = ई आदेश हो। सूत्र में औङ् शब्द औ विभक्ति का बोधक है। शी में 'श' की लशकु-अतद्धिते से इत् स्थानिवद्भावेन शकार को प्रत्यय मानकर उसके आदि का अक्षर (इत् लोप) औ का प्रत्यय धर्म स्थानिवद्भाव से 'शी' में लायेंगे। **रमा+ई**। आ, ई मिलकर गुण एकादेशे। **रमे**। सुबन्त बनाने का प्रयोजन पद संज्ञा द्विवचन का बोध। अन्तादिवद्भाव = इस गुण एकादेश 'ए' के पूर्वभाग, (रमा) का अन्त 'आ' पर के औ का आदि मानकर पदं सिद्धम्। बहुत लक्ष्मी की विवाक्षा में रमा + जस् = अस्। अत्र प्राप्तस्य पूर्वसवर्णदीर्घस्य-दीर्घाज्जसि चेति सूत्रेण निषेधे सति। सवर्णदीर्घे रूत्वे विसर्गे च रमाः।

(७) सम्बुद्धौ च = सन्मुख उपस्थिति विषय होने पर। च = आकार को एकार। **आकारान्त अङ्ग को एकार हो। सम्बुद्धि का विषय होने पर**। एङन्त, ह्रस्वान्त, अंग से परे सम्बुद्धि के 'स्' का लोप हो, स्त्रीलिंग बोधक 'रमा' शब्द को सन्मुख करने (आह्वाहन — बुलाने) अर्थ का सूचक 'हे' शब्द पूर्वक या परक रमा को आकारान्तस्त्रीलिंग मानकर सम्बोधन अर्थ में 'सु' विभक्ति, उसको सम्बुद्धिसंज्ञापरे मानकर रमा में अलोन्त्य परिभाषा से अन्त्य अल् 'आ को एकार हुआ। एङ्ह्रस्वात् एङन्त से परे 'सु' के 'स्' का लोप। हे रमे। एवम् हे रमाशब्दात् द्विबचनविवक्षायाम् औ विभक्तिः (औङ् आपः) **आकारान्त अंग से परे औ विभक्ति को शी आदेश**। प्रत्ययत्वधर्म का स्थानिवद्भाव करके शी के श को इत् (अदर्शन) हुआ। आ और 'इ' के स्थान में गुण। **हे रमे**। एवं **हे रमाः** पूर्ववत्। **रमाम्** — क्रिया से उत्पन्नफल जिसको मिले या जिसमें रहे उसे कर्मकारक कहते हैं। जिसका बाचक अम् विभक्ति है। जब रमा शब्द फल का आश्रय बना तब रमा + अम्, अमिपरे हो तो पूर्व पर दोनों को पूर्वरूप हो। **रमे, रमाः**। शस् विभक्ति परे 'श' इत् पूर्वसवर्णदीर्घ, रुत्वादि हो। पुलिंग नहीं है स को न नहीं हुआ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**हे रमे !, हे रमाः ! । रमाम् । रमे । रमाः । ८ आङि चापः ७ । ३ । १०५ । आङि ओसि चाप एकारः । रमया । रमाभ्याम् । रमाभिः । ९ याडापः ७ । ३ । ११३ । आपो ङितो याट् । वृद्धिः । रमायै । रमाभ्याम् ३ ।**

---

जहाँ दो ( रमा ) या अनेक ( रमा ) सम्बन्धित क्रिया-जनक फल का आधार बनेगें। यथा—रमां पाठयति, यहाँ उच्चारण या ज्ञान की उत्पत्ति फल है उसका आश्रय रमा है। **जहां प्रातिपदिकार्थ ( व्यक्ति ) साधन हों** उसे तृतीयाकारक कहते हैं। साधने अर्थे प्रयुक्त 'रमा' शब्द से तृतीया का एक बचन ( ट् ) का लोप 'आ' ( ८ ) **आङि**=आ विभक्तिपरे। च=**ओसि** परे। **आपः**= **आकारान्त अङ्ग को एकार हो।** इति सूत्रेण आकारस्य एकारे रमे+आ, अयादेशे **रमया।** यहाँ दो रमाशब्द क्रिया में ( उत्कृष्ट उपकारक ) सहायक हों, वहाँ द्विबचन 'भ्याम्' रमाभ्याम्। अनेकाः रमाः यत्र क्रियायाः साहाय्यं कुर्वन्ति तत्र 'भिस्' रमाभिः।

( ९ ) **याट्**=आदेश हैं। **आपः**=आकारान्त अंग से। स्त्रीलिंग बोधक आकारान्त अंग से परे ङित्=ङे, ङसि, ङस् ङिको याट् हो। टित् होने से ङित् विभक्तिके आदि में हो। **क्रिया के फल के आश्रय ( कर्म ) जिसे समर्पण किया जाय वह चतुर्थीकारक है।** उद्देश्य अर्थ में विद्यमान रमा शब्द को आवन्त मानकर ङे, विभक्ति आई, ङ् इत्। **रमा+ए**=आकारान्त रमा से ङिद्-बचन ए। उसे **याडाप** से याट् आगम होने पर आ+ए स्थाने वृद्धि-एकादेश रमायै। एवं द्विबचन या बहुबचने विवक्षायां फलाश्रय ( कर्म ) की उपलब्धि वाले शब्द में भ्यां भ्यस् विभक्ति। **रमाभ्याम्, रमाभ्यः।** जहाँ से क्रिया की शुरुआत् हो उसे अवधि सीमा **अपादान** ( पञ्चमी कारक ) कहते है। अवधिअर्थमें वर्तमान रमाशब्द से ङसि, अनुवन्धलोपे 'अस् इति ङितं मत्वा याटि, सवर्णदीर्घे रुत्वविसर्गौ रमायाः : जहाँ दो या अनेक रमा से क्रिया का आरम्भ हो, तत्र भ्याम् भ्यस्। रमाभ्यां **रमाभ्यः।** यत्र सम्बन्ध, रिस्ता, नाता, मात्र अर्थ व्यक्त हो, तत्र षष्ठी-कारकं संज्ञामात्रम्। रमाशब्द को किसी के सम्बन्धमात्र अर्थ में प्रयोग हो तो एकवचन की विवक्षा में ङस् **रमा+अस्**, याट् सवर्णदीर्घे रुत्वादिः **रमायाः।** द्विबचन के विवक्षा में रमा+ओस्। ( **आङि चापः** ) सूत्र से 'आ' को एकार, उसको अय् आदेश रुत्वे विसर्गे च **रमयोः** इति। अनेक 'रमा' का सम्बन्ध हो तो आम् विभक्ति, आबन्तमानकर नुट्, णत्व **रमाणाम्।** कर्ताकर्म द्वारा क्रिया के आधार को अधिकरणकारक कहते हैं। कर्ता या कर्म के माध्यम से क्रिया का आधार कोई बनता ही है। आधार अर्थ में प्रयुक्तरमाशब्द से ङिविभक्तिः। 'ङे राम्' से आबन्त, **नद्यन्त या नी** शब्दसे परे ङिविभक्ति को आम् आदेश होता ही

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रमाभ्यः २। रमायाः २। रमयोः २। रमाणाम्। रमायाम्। रमासु। एवं दुर्गाम्बिकादयः। २२० सर्वनाम्नः स्याड्ढ्रस्वश्च ७।३।११४। आबन्तात् सर्वनाम्नो ङितः स्याट् स्यादापश्च ह्रस्वः। सर्वस्यै। सर्वस्याः २। सर्वासाम्। सर्वस्याम्। शेषं रमावत्। एवं विश्वादयः आबन्ताः।

१ विभाषा दिक् समासे बहुव्रीहौ १।१।२८। सर्वनामता वा। उत्तरपूर्वस्यै, उत्तरपूर्वायै। तीयस्येति वा संज्ञा। द्वितीयस्यै, द्वितीयायै।

---

है। आवन्त मानकर ङिको आम् स्थानिबद्भाव से आम में ङिद्धर्म लाकर याट् आगम अनुबन्ध लोप ) सवर्णदीर्घे। **रमायाम् रमयोः रमासु**। एवं = रमाशब्द की तरह दुर्गा, अम्बिका, अवस्था अङ्गना, उमा, कथा, यथा दशा नर्मदा आदि के अर्थानुकूलरुप समझे।

( २२० ) सर्वनाम्नः = सर्वनामसंज्ञकशव्दसे स्त्रीलिंगबोधक ( टाप् ) प्रत्यय विशिष्टसर्वा आदिशब्द से स्याट् हो ह्रस्वश्च, आप् के आ को हृस्व हो **आकारान्त सर्वनाम से परे ङित्विभक्ति को स्याट् का** आगम् हो। टित् होने से ङित्विभक्ति के आदि में हुआ। सम्पूर्ण अर्थ का बाचक स्त्रीधर्म का प्रकाशक प्रत्यय टाप् = आ से विशिष्ट सर्वाशब्द का रमावत् रूप। **सर्वा, सर्वे, सर्वाः। सर्वाम्, सर्वे, सर्वाः। सर्वया, सर्वाभ्याम्** सर्वाभिः। सर्वस्यै। सर्वा + ङे। या चतुर्थी का अर्थ पूर्ववत् जाने। आबन्तसर्वनाम् सर्वाशब्द से परे प्राप्त याट् को बाँधकर 'सर्वनाम्नः' सूत्र से स्याट्। आकार को ह्रस्व भी। सर्वस्या + ए वृद्धिः सर्वस्यै। ङसि तथा ङस् दोनों विभक्तियों में याट् को बाधकर स्याड् आगम्। आपश्च=आकारस्य ह्रस्वे सवर्णदीर्घे रुत्वेविसर्गेच। सर्वस्याः। सम्बन्ध व्यक्त करने अर्थ में षष्ठी का द्विबचन 'ओस्' परे आङिचापः इति एत्वे, अय् आदेशे। सर्वयो.। बहुबचने सर्वा + आम्। सर्वनाम से आमिपरे सुट् अनुबन्धलोपें सर्वासाम्। सर्व-स्याम्—सर्वाशब्दात् आधार, अर्थविवक्षायां ( सप्तमी ) एकबचने ङि तत्स्थाने 'ङेराम्नद्याम्नीभ्यः'। इति आम् आदेशे स्याडागमें आकार ह्रस्वेदीर्घे च। सर्वस्याम् सर्वयोः, सर्वासु।

इसी प्रकार विश्वा आदि आकारान्त शब्दों का भी रुप समझें ( १ ) **विभाषा** = भेददर्शिका, पक्ष पातिनी भाषा। विकल्प इति अर्थाः। **दिक्समासे**= दिशावाचीशब्द के साथ उत्तरपूर्वा को **बहुव्रीहौ** = बहुव्रीहिसमास में सर्वनामसंज्ञा विकल्प से हो। यथा—उत्तरस्याः पूर्वस्याः चान्तरालं दिक् सा उत्तरपूर्वयोः अन्तरालं दिक्। उत्तर और पूर्व दिशा के मध्य की दिशा ( ईशानकोण ) को **उत्तरपूर्वा** कहते हैं। उससे आगत 'ङे' विभक्ति परे बहुव्रीहिसमास उत्तरपूर्वा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एवं तृतीया। (१९५) अम्बार्थेति ह्रस्वः। हे अम्ब! हे अक्क!। हे अल्ल! जरा। जरसौ, इत्यादि। पक्षे हलादौ च रमावत्। गोपा विश्वपावत्। मतीः। मत्या।

---

को सर्वनाम संज्ञा हुई। जिसका फल स्याट् आगम आबन्त को ह्रस्व वृद्धिः उत्तरपूर्वस्यै। संज्ञा के अभाव पक्ष में केवल याट् तथा वृद्धिः। उत्तरपूर्वायै। तीयप्रत्ययान्त शब्द की भी सर्वनामसंज्ञा विकल्प से हो। यह स्त्रीलिंग प्रधान प्रकरण है। यथा द्वयोः पूरणा द्वियीया दूसरी संख्या को जो पूरी करे उसे द्वितीया कहते हैं। स्त्रीलिङ्ग में द्वितीयाशब्द से उद्येश्य अर्थवाचक 'ङे' विभक्तिः। अत्र तीयप्रत्ययान्तस्य सर्वनामसंज्ञा भवति, ङिद्वचनपरे। संज्ञायाः फलं स्याडागम इति। आकारस्य ह्रस्वे। द्वितीयस्यै। संज्ञायाः अभावपक्षे याडागमः। वृद्धिश्च, द्वितीयायै। एवं तृतीया। त्रयाणां पूरणा तृतीया। तीनसंख्या का पूरक तृतीया शब्द को सर्वनामसंज्ञा स्याट् आदि से, युक्तरूपं पूर्ववत्। तृतीयस्यै तृतीयायै। अम्बा, अक्का, अल्ला को भी मातृबाचक होने से सम्बुद्धि के विषय में ह्रस्व होता है। यथा—अम्बयति लोकान् जीवयति पालयति वा अम्बा। सम्बोधन अर्थ में हे अम्बा सु। माताअर्थमें अम्बाशब्द को अम्बार्थनद्योः से ह्रस्व हुआ। ह्रस्वान्तमानकर 'सु' का एङ ह्रस्वात् से लोप। हे अम्बा। अक्कयति प्राणिनः प्रबोधयति अक्का (सरस्बती) अत्र सम्बोधने ह्रस्वः हे अक्क। सुलोपश्च पूर्ववत्। अल्लयति लोकान् प्रलयं गमयति इति अल्ला। सम्बोधने ह्रस्वादिकार्यें। हे अल्ल। शेष रूप को रमावत् बोध्यम्। जीर्यते इति जरः=वृद्धः। तज्जातीया स्त्री जरा (वृद्धा)। आबन्तात् 'सु' विभक्तिः तल्लोपे। अजादि विभक्तिपरे जराशब्द से वृद्ध अर्थ होकर जब क्रिया में अन्वय हो (उस स्थिति का) द्विवचन औ विभक्तिः। "जरायाः जरसन्यतरस्याम्" से अजादि विभक्ति 'औ' परे जरा के स्थान में जरस् आदेश हो गया। इस प्रकार सभी अजादि विभक्ति में जरस् का विधान होने से हलादि विभक्ति परे रमावत् रूप समझें। यथा—जरा, जरसौ, जरे। जरसः जराः। जरसः जराः। तृतीया में। जरसा, जरया, जराभ्याम्, जराभिः, जरसे, जरायै। जरसः, जरायाः। जरसोः (जरयोः) जरसाम्, जराणाम्। जरसि जरायाम्। जरसोः (जरयोः) जरासु। गाम्—पालयतीति गोपा। स्त्री अर्थ का बोधक विच् प्रत्ययान्त है। जिसका पूर्ण अपहरण हो गया। यहाँ गोप जाति की स्त्री। परन्तु विश्वपा की तरह रूप चलता है। बुद्धि अर्थ में मतिशब्द को साधारणतः हरि की तरह रूप जाने। मतिः मती, मतयः। मतिं मती मतीः। द्वितीया बहुवचने शस् मति+अस् पूर्णसवर्णदीर्घे रूत्वेविसर्गे च। अत्र पूर्णसवर्णदीर्घ से परे शस् के सकार को नकार नहीं हुआ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

२ ङिति ह्रस्वश्च १।४।६। इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इवर्णो-वर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति। मत्यै, मतये। मत्याः २, मतेः। ३ इदुद्भ्याम् ७।३।११७। इदुद्भ्यां नदीसंज्ञकाभ्यां परस्य ङेराम्। मत्याम्, मतौ। हरिवत्। एवं बुद्ध्यादयः। ४ त्रिचतुरोः स्त्रियां तिसृचतसृ ७।२।९९।

---

क्योंकि वह पुलिङ्ग नहीं है। मति + टा। यण्। मत्या, मतिभ्याम्, मतिभिः। स्त्री प्रधान इकारान्त शब्द होने से टाको ना नहीं हुआ। चतुर्थी के एकवचन मति + ए इतिदशायाम्।

( २ ) ङिति = ङिति विभक्ति परे रहते ह्रस्व = एकमात्रिकः। च = इकार उकारको नदीसंज्ञा। **यदि इकार तथा उकार इयङ् उवङ् आदेशों का स्थानी ( विषय 'या' आधार ) हो और वे नित्य स्त्रीलिङ्गबोधक शब्द हो, किन्तु स्त्रीशब्द से भिन्न हो तब स्त्रीलिङ्गविवक्षा में नदीसंज्ञा विकल्प से हो।** ङित्=ङकार इत् विभक्ति परे रहते। मति + ए, अत्र अजादि प्रत्यय 'ए' परक मति का इकार इयङ् का स्थानी बना रहा। नित्यस्त्रीलिङ्ग मतिशब्द में है। किन्तु स्त्रीरूप नहीं है। अतः ङिति-से नदीसंज्ञा हुई। यस्याः फलम् आडागमः आटश्चेति वृद्धिः। यण् कृते **मत्यै**। नदीसंज्ञायाः अभावपक्षे घिसंज्ञा 'घेर्ङिति' गुणे अयादेशे च **मतये मतिभ्याम्, मतिभ्यः**। एवं बुद्धि पर्यायभूतमतिशब्दात् अवधि अर्थबोधक पञ्चम्यैकवचने ङसि विभक्तौ। मति + अस्। अत्र 'यदा' नदीसंज्ञा, तदा आण्नद्याः इति। आडागमः। वृद्धिः। यणि **मत्यैः**। पक्षे घिसंज्ञा, गुणे, ङसिङसोश्चेति पूर्वरूपे। सकारस्य रुत्वे विसर्गे च **मतेः मत्योः मतीनाम्।**

( ३ ) ह्रस्व इकार ह्रस्व उकार ( नदीसंज्ञक ) से = **नदीसंज्ञावाले ह्रस्व इकार उकार से परे ङि विभक्ति को आम् हो।** आधार अर्थ में मति + ङि। तस्याः फलम्, नदीसंज्ञकशब्दात् ङिविभक्ति स्थाने आम् विधानम्। यण् कृते **मत्याम्**। नदी संज्ञायाः अभाव पक्षे घिसंज्ञा **'अच्चघेः'** सूत्रेण ङि स्थाने 'औ' आदेशे इकारस्य अकारे। वृद्धिः। **मतौ, मत्योः मतिषु**। एवं यानि कतिपयानि रूपाणि न पठितानि सन्ति। तानि नदी संज्ञायाः अभावपक्षे हरिशब्दवत् ज्ञेयानि। इसीप्रकार श्रुतिः, स्मृतिः, गतिः, बुद्धिः, कान्तिः धृतिः आदि शब्दों का रूप समझना चाहिए।

( ४ ) त्रि = तीन सङ्ख्यावाचकशब्द, **चतुर = चार** सङ्ख्यावाचकशब्द, यदि **स्त्रियाम् = स्त्रीलिङ्ग** अर्थ प्रधान हो तब **एतयोः = त्रि और चतुर के स्थान**

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्त्रीलिङ्गयोरेतयोरेतौ स्तो विभक्तौ।

२२५ अचि र ऋतः ७।२।१००। तिसृचतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि। गुण-दीर्घोत्वानामपवादः। तिस्रः, तिस्रः। तिसृभिः। तिसृभ्यः। तिसृभ्यः। आमि नुट्। ६ न तिसृचतसृ ६।४।४। एतयोर्नामि दीर्घो न। तिसृणाम्। तिसृषु। द्वे। द्वे। द्वाभ्याम्। द्वाभ्याम्। द्वाभ्याम्।

---

में एतौ = तिसृ तथा चतसृ आदेश क्रम से हो, विभक्ति परे रहते (२२५) ऋतः=तिसृ चतसृशब्द के ऋकार के स्थान में र=रेफ आदेश हो, अच् प्रत्याहार के वर्ण परे रहते। ऋतोङि से प्राप्त गुण, प्रथमयोः पूर्णसवर्ण से प्राप्त दीर्घ, ङसि ङस् विभक्ति में 'ऋत्-उत्' से प्राप्त उत्व का बाधक यह रेफादेश है। एवं यण् का भी बाधक है। त्रिचतुरशब्दो नित्यं बहुवचनान्तः। तीन व्यक्ति का समुदाय अर्थ से या तीन सङ्ख्या अर्थ से अर्थवान् त्रिशब्द को प्रातिपदिकसंज्ञा बहुवचने 'जस्' विभक्तिः। ज् इत्। स्त्रीलिङ्ग में विद्यमान त्रिशब्दस्य स्थाने तिसृ आदेशे, सर्वनाम परे— ऋतोङि' से प्राप्त गुण, पूर्वसवर्ण-दीर्घ, ऋत् उत् से प्राप्त उत्व, तथा सर्वं बाधित्वा अच् परे ऋ स्थाने 'र' आदेशे सकारस्य रूत्वे विसर्गे तिस्रः। एवं क्रियाजन्य फलाश्रयः कर्म की विवक्षामें, तेन अर्थवत्वात् त्रिशब्दात् बहुवचने शसि। शकार इत्। त्रिस्थाने तिसृ' आदेशे, अत्र पूर्वसवर्णदीर्घं यणं च बाधित्वा ऋस्थाने 'अचिर ऋतः' सूत्रेण रेफ आदेशे रूत्वे विसर्गे। तिस्रः। एवं क्रियासिद्धौ साधन-दशायाम् त्रिशब्दस्य प्रा० संज्ञायां भिस्। तिस्रादेशे रूत्वे विसर्गे च त्रिभिः। एवम् उद्देश्य अर्थ में (के लिए) भ्यस् आदिकार्ये। तिसृभ्यः। सम्बन्धमात्रबोधदशायां त्रिशब्दात् प्रातिपदिकात् आमि। तिसृ आदेशे तिसृ + आम्। अत्र ऋस्थाने रेफादेशः परत्वात् प्राप्तः तं "नुमचिरतृज्वद्भावेभ्यो नुट्पूर्वविप्रतिषेधेन" इति बचनेन नुट् प्रबलो जातः। ततः रभावो न भवति, यतः अजादि नं तिष्ठति :

(६) तिसृ तथा चतसृ शब्दों को नामि परे दीर्घ नहीं होता। अतएव-निषेधादेव—नामिसूत्रेण न दीर्घः। ऋवर्णान्नस्य णत्वंवाच्यम् इति नस्य स्थाने णत्वे तिसृणाम्। एवम् आधारस्य विवक्षायां त्रिशब्दात् प्रातिपदिकात् सप्तमी बहुवचने सुप्। तिसृ आदेशे, अवयवसकारस्य आदेशप्रत्यययोः सूत्रेण षकारे तिसृषु। त्रिशब्द की तरह चतुरशब्द की विधि (साधनिका) समझें। चतस्रः २ चतसृभिः। चतसृभ्यः। चतसृणाम्। चतसृषु। 'दो सङ्ख्याका समुदाय' अर्थेन अर्थवतः द्विशब्दस्य प्रातिपदिकसंज्ञायां, (दो संख्याका अनुवादक) औविभक्तिः। द्वि + औ इति दशायां त्यदादिगण में द्विशब्द के पढ़े जाने से अत्व='इ' के स्थान में 'अ' हो गया। द्व + औ स्त्रीलिंग की इच्छा में टाप्=आ सवर्ण दीर्घे द्वा + औ

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**द्वयोः । द्वयोः । गौरी । गौर्यौ । गौर्यः । हे गौरि ! । गौर्यै । इत्यादि । एवं नद्यादयः । लक्ष्मीः । शेषं गौरीवत् । एवं तरीतन्त्र्यादय । स्त्री । रे स्त्रि !।**

---

आकारान्त से परे 'औ' के स्थान में "औङ आपः" से ( शी ) आदेश, श इत् गुणादिकार्यें । द्वे । ( दो संख्या वालों का विशेषण ; एवं दो व्यक्ति या वस्तु यदि कर्म ( क्रियाफल का आधार ) बने, तब द्वितीया के द्विवचन में भी ( द्वे ) पूर्ववत् समझें । यत्र द्विशब्दः क्रियाकी सिद्धि में साधन हो, तत्र भ्याम्, त्यदादि मत्वा अत्वे, टापि सवर्ण दीर्घे द्वाभ्याम् ( ३ ) द्वि+ओस् । अत्र अत्वे, टाप् सवर्णदीर्घे 'आ' स्थाने 'आङिचापः' एत्वे अय्, आदेशे रुत्वे विसर्गे द्वयोः । **गृणाति=पृथवीं धारयति गौरः** ( गौरवर्णः ) ( हिमालयः ) **तस्यापत्यं स्त्री' गौरी** ( पार्वती ) शब्दात् ङ्यन्तात् प्रथमायाः एकबचने सु । 'उ' इत् । सकारस्य अपृक्तसंज्ञा, हलङ्यादिलोपश्च । गौरी । एवं गौरी+औ अत्रपूर्वसवर्णदीर्घः प्राप्तः स **दीर्घाज्जसि च**" सूत्रेण अर्धचन्द्रीकृतः । ततो यणि **अचोरहाभ्याम्** गौर्य्यौः । बहुवचने 'जस् । गौरी+अस् । सधनिका पूर्ववत् । सन्मुखीकरण अर्थ में हे गौरी+सु नित्य स्त्रीलिङ्ग होने से नदीसंज्ञा जिसका फल अम्बार्थनद्योः ह्रस्वः से ह्रस्व । ह्रस्वान्त कारपेन से सम्बुद्धिसकारस्य लोपे हे गौरि गौरीम् गौर्य्यौ गौरीः । गौर्या गौरीभ्याम् गौरीभिः । गौरी+ए । अत्र नदीसंज्ञा आडागमः आटश्चेति, वृद्धिः यण् गौर्य्यै, गौरीभ्यां, गौरीभ्यः ।

गौर्य्याः गौर्योः गौरीणाम् । गौर्य्याम् इत्यादि । एवम्=इसी प्रकार नद्यादयः= नदी, नारी, कुमारी, ब्राह्मणी, सारंगी, सरस्वती इत्यादि । दीर्घइकारान्त नित्यस्त्रीलिङ्गशब्दोंके रुप चलायें । लक्ष्मीः **लक्षयति पुरुषार्थचतुष्टयं ( धर्मार्थकाममोक्षाणि ) साधयति इति लक्ष्मीः** । 'लक्षेर्मुट्च' यह दीर्घ ईकारान्त नित्यस्त्रीलिङ्ग है । मनोरथपूरक अर्थसे अर्थवान् लक्ष्मीको प्रातिपदिक संज्ञा 'सु' रुत्वे वि० । **लक्ष्मीः** । यहाँ ङीप् अन्तमेन होने से सुलोप नहीं हुआ । लक्ष्मीका अन्य सभी रुप शेष हैं । उनकी सिद्धि या ज्ञान, गौरी की तरह गम्य है । एवं=यथा लक्ष्मी शब्द ङीवन्त नहीं है, नित्यस्त्रीलिङ्ग है । इसी प्रकार अङ्यन्त स्त्रीलिङ्गका उदाहरण—तरी ( नौकायां तरणिस्तरीः । ( जलयानं ) तन्त्रीः ( वीणा ) धीः ह्रीः अवीः को भी जाने इनमें 'सु' का लोप न होकर विसर्ग ही होता है ।

स्त्री = स्त्यायति रजो धर्मफलं प्रदर्शयन्ति इत्यर्थेन अर्थवान् स्त्री शब्दः प्रातिपदिकसंज्ञां लभते । तत्फलम् अर्थवोधिकायाः प्रथमायाः एकवचनं 'सु' विभक्तिः ! ( 'उ' इत् ) सकारस्य अपृक्तसंज्ञा । ङ्यन्तात् सुलोपः स्त्री । सन्मुखीकरण अर्थमें स्त्री+सु 'यूस्त्र्याख्यौ' नदीसंज्ञा, नद्यन्तस्य ह्रस्वः, ह्रस्वान्तअङ्गसे सम्बुद्धिसकारस्य

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

७ स्त्रियाः ६।४।७९। अस्येयङ् स्यादजादौ प्रत्यये परे। स्त्रियौ। स्त्रियः।

८ वाम्शसोः ६।४।८०। अमि शसि च स्त्रिया इयङ् वा स्यात्। स्त्रियम्, स्त्रीम्। स्त्रियः, स्त्रीः। स्त्रिया। स्त्रियै। स्त्रियाः। परत्वान्नुट्, स्त्रीणाम्। स्त्रीषु। श्रीः। श्रियौ। श्रियः। ९ नेयङुवङ्स्थानावस्त्री १।४।४। इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो न तु

---

लोपः हे स्त्रि। ( 'गृहिणी' अर्थेन अर्थवतः स्त्रीशब्दात् द्विवचने औविभक्ति। (७) स्त्रीशब्दके अन्त्य ( वर्ण ) को इयङ्=इय आदेश हो, अच् अक्षर आदिमें हो ऐसा प्रत्यय परे। अत्र अजादिः 'औ' विभक्तिःतां दृष्ट्वा 'ई' स्थाने इयङ्=इय् जातः वर्णसम्मेलने स्त्रियौ। प्रथमायाः बहुवचने 'जस्' स्त्री+अस् इयङ्रुत्वे वि० स्त्रियः।

( ८ ) अम् च शश्च अम्शसौ तयोः। अम् परे तथा शस् परे हो ऐसे स्त्रीशब्द को इयङ् विकल्प से ( पाक्षिक ) हो। स्त्री+अम्। अत्र अम् विभक्ति परे इकारस्थाने प्राप्तं नित्यं इयङादेशं वाधित्वा "वाऽम् शसोः" इति पाक्षिक इयङादेशे स्त्रियम्। पक्षे अमि पूर्वरुपं स्त्रीम्। स्त्रियौ। शसिविभक्तौ तु सवर्णदीर्घं नित्यमियङ्आदेशं च वाधित्वा विकल्पेन इयङ्आदिकार्ये स्त्रियः। पक्षे-पूर्वसवर्णदीर्घे रुत्वे विसर्गे स्त्रीः। तृतीयायाः एकवचने स्त्री+आ इति दशायाम् इयङ्आदेशे वर्णसम्मेलने स्त्रियाः स्त्रीभ्यां स्त्रीभिः। चतुर्थ्याः एकवचने ङे स्त्री+ए। अत्र नित्यस्त्रीलिङ्गत्वात् नदीसंज्ञा आडागमः आटश्चेति वृद्धिः 'स्त्रियाः' से इयङादेशः। स्त्रियै, स्त्रीभ्याम् स्त्रीभ्यः। स्त्रियाः स्त्रियोः स्त्रीणाम्—स्त्री+आम्। अत्र इयङ्आदेशं परत्वात्=( विप्रतिषेधे=तुल्यवल्यविरोधे परम्=यत् इष्टम् तत् कार्यम् ) नुट=न् ( अट्कुप्वाङ्णत्वे रुपं ) स्त्रीणाम्। स्त्रियाम् स्त्रीषु।

श्रयति शरणं गच्छति गमयति वा हरिं पत्नीत्वेन सेवते इति श्रीः ( लक्ष्मीः ) सेवते लोकान् 'वा' श्रीः। हरिका शरणागता या विश्वसेविकाको श्रीः कहते हैं। यह क्विप्प्रत्ययान्त जिसका सर्वापहारी लोप है। तथा दीर्घ 'ई' होने पर भी ङीबन्त नहीं हैं। अतः हलङ्यादिलोप न होकर सुके स् को रु० वि श्रीः। औविभक्ति में। ( १९९ ) सूत्रसे इयङादेश श्रियौ। जस् विभक्ति में श्री इयङ आदि कार्य होते हैं श्रियः। ( ९ ) इयङुवङ्स्थानौ—इयङ् उवङ् की स्थिति हो जिसपर ऐसे ईकारान्त ऊकारान्त शब्द को न=नदीसंज्ञा नहीं होती। अस्त्री—स्त्री शब्द को छोड़कर। लक्ष्मीबाचक श्री शब्द का सम्बोधन अर्थ हो तब

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हे श्रीः। श्रियै। श्रियाः २, श्रियः २। २३० वामि १।४।५। इयङ्वङ्-स्थानी स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो न तु स्त्री। श्रीणाम्, श्रियाम्। श्रियि, श्रियाम्। धेनुर्मतिवत्।

१ स्त्रियां च। १।९६। स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते।
२ ऋन्नेभ्यो ङीप् ४।१।५। ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप्।

---

प्रातिपदिकसंज्ञक से सु। विभक्ति परे, 'श्री' को प्राप्त नदी संज्ञा का। (६) सूत्र से निषेध हुआ। ह्रस्वादि नहीं हुए। सम्बुद्धि लोप भी न भवति। रु० वि० हे श्रीः। श्रियम्। चतुर्थी कारक के एकवचन ङे ङकार इत् श्री=ए "ङितिह्रश्च" सूत्रेण पक्षे नदीसंज्ञा भवति। यस्याः फलम्, आडागमः, वृद्धिः। ततः 'अचिश्नु' सूत्रेण इयङ् श्रियै। नदीसंज्ञाया अभाव पक्षे केवलम् इयङ् आदेशः। श्रिये। एवं ङसि ङस् विभक्तौ। पक्षे नदीसंज्ञा आट् आदिः श्रियाः पक्षे इयङ् आदेशे रु० वि श्रियः। नेयङुवङ् से नदीसंज्ञाका निषेध, 'हे श्रीः' में चरितार्थ है। अतः ङितिह्रस्वश्च' का बाध नहीं हुआ।

(२३०) इयङ् उवङ् आदेश की स्थिति सिद्ध हो या स्त्रीलिङ्ग प्रधान हो तथा नित्य हो ऐसे यू – ईकार ऊकार को आमि परे नदीसंज्ञा विकल्प से हो, स्त्री शब्द को छोड़कर। यथा—षष्ठ्याः बहुवचने श्री + आम् इतिदशायाम् इयङ् आदेशस्य स्थितिः वर्तते। आम् विभक्ति परे विकल्पेन नदी संज्ञा जाता। यस्याः फलं ह्रस्वनद्यापोः नुट्। अनुबन्ध लोपे णत्वे। श्रीणाम्। पक्षे १९९ सूत्रेण इयङ् आदेशे श्रियामिति। सप्तम्याः एकवचनेङि। श्री + इ इति स्थितौ नदीसंज्ञायाः यत्फलम् ङेराम्नद्यामनीभ्यः इत्यनेन ङिस्थाने आम् आदेशे, आडागम वृद्धौ च इयङ् आदेशे च श्रियामिति। पक्षे इयङ्आदेशमात्रं श्रियि। धेनुशब्दस्य मतिशब्दसदृशं रुपं ज्ञेयम्। उकारान्तस्त्रीलिङ्गशब्दः। धेनुः, धेनू, धेनवः। हे धेनो! धेनुम्, धेनू, धेनूः। धेन्वा, धेनुभ्याम् धेनुभिः। धेन्वै, धेनवे, धेनुभ्याम् धेनुभ्यः। धेन्वाः धेन्वोः धेनूनाम्। धेन्वाम् धेनौ धेन्वोः धेनुषु।

(१) स्त्रियां=स्त्रीलिङ्गवाचो क्रोष्टुशब्द को च=तृजन्तवत्=तृच् अन्त में हो, ऐसा क्रोष्टृ शब्द की तरह रुप होता है। (२) ऋन्नेभ्यः=ऋ अन्त में हो या नान्तेभ्यः=न अन्त में हो, किन्तु स्त्रीलिङ्ग शब्द अवश्य हो तब ङीप् हो। शृगाल या ऋषि वाचक को स्त्री, स्त्रीलिङ्ग अर्थसे अर्थवान् क्रोष्टुशब्दस्य

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

क्रोष्ट्री गौरीवत्। भ्रूः श्रीवत्। स्वयंभूः पुंवत्। ३ न षट्स्वस्रादिभ्यः ४।१।१०। ङीप्टापौ न स्तः।

स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा।
याता मातेति सप्तैते स्वस्रादय उदाहृताः।

---

प्रातिपदिक संज्ञा। ततः सु। अत्र स्त्रीलिङ्गे वर्तमानक्रोष्टुशब्दः 'स्त्रियामिति' तृच् भावे क्रोष्टृ+सु इति लभते। ततः ऋदन्तं मत्वा ऋन्नेभ्यो स्त्रियां ङीप् अनुबन्ध लोपे यणिसुलोपे। क्रोष्ट्रीशब्दः गौरीशब्दस्य समानं रुपं लभते। अत्र ङीप् अन्ते सन् गौरी दृष्टान्तः। एवं बधूः करभोरूः आदिशब्दाः 'सु' भिन्नविभक्तौ गौरीवत् ज्ञेयाः। नेत्रयोः ऊर्ध्वरोमराजिः ( भौंह ) अर्थ वाचक भ्रू शब्द के श्रीवत्=श्री शब्द के समाव रूप होते हैं। यहाँ भी इयङ्आदेश, नदीसंज्ञा का निषेध, ङित् विभक्ति में विकल्प से समझे। भ्रूः भ्रूवौ भ्रूवः हे भ्रूः। भ्रुवं भ्रुवौ भ्रुवः। भ्रुवा भ्रुभ्याम् भ्रूभिः। भ्रुवै भ्रुवे भ्रूभ्याम् भ्रूभ्यः। भ्रुवाः भ्रुवः भ्रुवोः भ्रूवाम् भ्रूणाम्। भ्रुवाम् भ्रुवाम् भ्रूवि भ्रूषु। स्वयं भवतीति स्वयम्भूः ( मूल प्रकृतिः ) जो स्वयं प्रकट हो। इसी अर्थ से अर्थवान् मानकर स्वादिकार्य स्वयंभूः। शब्दको पुंलिग की तरह जानें। नित्य स्त्रीलिंग न होने से नदी संज्ञा तत्सम्बन्धी कार्य विधि, निषेध विकल्प आदि नहीं होते।

( ३ ) ( ष्णान्ताः षट् ) से षट्संज्ञक जैसे षष् ( ६ ) तथा पञ्चन् आदि शब्द तथा स्वस्रादि इनको नान्त या ऋकारान्त मानकर ऋन्नेभ्यो ङीप् से ङीप् नहीं होता। तथा अजन्त मानकर टाप् भी। कार्य कारण में स्वस्रादिकी स्पष्ट गणना कर रहे हैं। स्वसा=भगिनी तिसृ=तीन स्त्रियाँ, चतसृ=चार नारियाँ, ननान्दा पति की बहन। ननद ( पत्युर्भगिनी ) दुहिता=पुत्री। याता=पति की पत्नी उसकी कनिष्ठ भ्रातृपत्नी आपस में 'याता' हैं। माता ये सात शब्द हैं, जिनको ङीप्, टाप्, नहीं होते। भगिनी अर्थ से अर्थवतः प्रातिपदिकात् प्रथमायाः एक बचने सु। स्वसृ+स्। २०५ से अनङ् २०६। सूत्रेण उपधाया अकारस्य दीर्घे हलङ्यादिना अपृक्तसंज्ञकसकारस्य नलोपः प्रातिपदिकान्त नकारस्य च लोपे स्वसा। औवि-भक्तिपरे। ( २०४ ) इतिगुणे उपधा दीर्घे स्वसारौ, स्वसारः। हेस्वसः। स्वसारं स्वसारौ स्वसॄः। स्वस्रा स्वसृभ्याम् स्वसृभिः इत्यादि। पालनअर्थमें सिद्ध माता-शब्दका पिताशब्दकी तरह रूप चलायें। केवल शस्विभक्ति में मातृः बनेगा। क्योंकि पुलिङ्ग में ही शस् के स् को न होता है। ननान्दवत्=दुहिता आदि शब्दों के रुप भी जानें। केवल पितृ मातृ शब्द के उपधा को दीर्घ नहीं होते। आकाशबाची द्यौः शब्द की तरह रुप होता है। यथा द्यो+सु ( ओतो ऋणिदिति वाच्यम् ) से

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वसा। स्वसारौ। माता पितृवत्, मातृः। द्यौर्गोवत्। राः पुंवत्। नौग्लौवत्।

इत्यजन्ताः स्त्रीलिङ्गाः

णिद्, अचोणित् से वृद्धि रु० वि० द्यौः। धनवाची राशब्दः पुलिङ्गवत् जानें। नौक वाची नौशब्द को ग्लौः ग्लावौ ग्लावः की तरह समझें।

॥ इति प्राभाकर्याम् अजन्तस्त्रीलिङ्गाः ॥

## अथाजन्त-नपुंसकलिङ्गः

४ अतोऽम् ७।१।२४। अतोऽङ्गात् क्लीबात् स्वमोरम्। अमि पूर्वः। ज्ञानम्। एङ्ह्रस्वादिति हल्लोपः, हे ज्ञान। २३५ नपुंसकाच्च ७।१।१९। क्लीबादौङः शी स्यात्। भसंज्ञायाम्। ६ यस्येति च ६।४।१४८।

## । अथ अजन्तनपुंसकलिङ्गप्रकरणम् ।

सत्त्वरजस्तमसां साम्यावस्था सत्त्वतमरजोगुण जब समदशा समान अवस्था में रहें वह नपुंसकलिङ्ग है। यह अजन्तनपुंसकशब्दरूपसधनिकाका प्रकरण है। (२३४) अतः = ह्रस्व अकारान्त हो नपुंसकलिङ्ग में वर्तमान हो, तथा अङ्गसंज्ञक शब्द से परे 'सु' और अम्विभक्ति को 'अम्' आदेश हो, क्लीबात्= नपुंसकलिङ्गात् विशुद्धनपुंसककारक अर्थ से अर्थवान् ज्ञानशब्दः। तस्य प्रातिपदिक संज्ञा। तस्माद् 'सु' विभक्तिः। ततः 'अतोऽम्' सूत्रेण अकारान्तात् अङ्गात् ज्ञान शब्दात् 'सु' तत् स्थाने 'अम्' आदेशे। अमिपरे पूर्व रूपे। ज्ञानम्। सम्बोधन अर्थ में हे ज्ञान + सु तस्य अमादेशे। अत्र एङ् ह्रस्वात् सूत्रेण ह्रस्वान्तज्ञानशब्दात् परस्य सम्बुद्धि सुस्थाने अमः मकारस्य लोपे। हे ज्ञान। (२३५) नपुंसकात्=क्लीबात्। नपुंसक लिङ्ग में वर्तमान प्रातिपदिक से परे औविभक्ति के स्थान में 'शी' आदेश हो। जिसको भसंज्ञायां = सुडनपुंसकस्य सूत्र से सु औ जस् अम् औट् इन पाँच, विभक्ति को ही सर्वनामसंज्ञा होती है। अनपुंसकस्य = नपुंसकलिङ्ग में उक्तसंज्ञा का निषेध है। अतएव नपुंसक में भसंज्ञा सिद्ध हुई। स्थानिवद्भाव से प्रत्ययधर्म मानकर लशक्वतद्धिते से शकार इत्। ज्ञान + ई। इति स्थितौ।

(२३६) यस्येति --इश्च अश्च अनयोः समाहारः यम् तस्य इकारस्य अकारस्य च। ईकार या तद्धित प्रत्ययपरे हो तो भसंज्ञक इकार या अकारका

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ईकारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः इत्यलोपे प्राप्ते ( औङः श्यां प्रतिषेधः ) ज्ञाने। ७ जश्शसोः शिः। ७।१।२।२०। क्लीबादनयोः शिः स्यात्। ८ शि सर्वनामस्थानम् १।१।४२। शि इत्येतदुक्तसंज्ञं स्यात्। ९ नपुंसकस्य झलचः ७।१।७२। झलन्तस्याजन्तस्य च क्लीबस्य नुम् स्यात् सर्वनामस्थाने। २४० मिदचोऽन्त्यात् परः १।१।४७। अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्ताव यवो मित् स्यात्। उपधा-दीर्घः। ज्ञानानि। पुनस्तद्वत्। शेषं पुंवत्। एव धन-वन फलादयः। १ अद्ड्डतरादिभ्यः पञ्चभ्यः ७।१।२५। एभ्यः क्लीबेभ्यः स्वमो-

---

लोप हो। सूत्र में इति = ईकार परे, च = तद्धित प्रत्यय परे अर्थ है। इति सूत्रेण अलोपे ( अकारस्य अदर्शने ) प्राप्ते। निषेधवार्तिकम्। औङ के स्थान मे आदेश 'शी' यदि हुआ हो तो उसके परे रहते अकारलोप का निषेध होता है। अनेन अलोपस्य निषेधे पूर्वपरयोः गुण-एकादेशे ज्ञाने। ( ७ ) 'जश्शसोः' क्लीबात् = नपुंसकलिङ्ग अर्थ में वर्तमान प्रातिपदिक से परे जस् तथा शस् को 'शि' हो। ज्ञानशब्दात् प्रातिपदिकात् प्रथमायाः बहुवचने जस् तस्य स्थाने जश्शसोः शि आदेशे 'श' इत् ज्ञान + इ। इति दशायाम्।

( ८ ) शि यह उक्तसंज्ञं = सर्वनामस्थानसंज्ञक हो अनेन 'शि' इत्यस्य सर्वनामस्थानसंज्ञा सिद्धा ( ९ ) झलचः = झल् प्रत्याहार के वर्ण तथा अजन्तस्य = अच् प्रत्याहार के अक्षर अन्त में हो तब नपुंसकलिङ्गः अर्थ में वर्तमान शब्द को नुम = 'न्' हो! सर्वनामस्थान परे 'इ' को सर्वनामस्थानसंज्ञक परे मानकर अजन्तनपुंसकलिङ्गज्ञानशब्द को नुम् ( न् ) हुआ। वह ( न् ) कहाँ हो, किसका अंग बने ? तब निर्णायक परिभाषा सूत्र बोले।

( २४० ) अन्त्यात् अचः परो मित् = मकार इत्। अचों के मध्य में जो अन्त्य अच् है उससे परे उसीसमुदाय को नुम्का विधान हो। उसी का ही अन्त अवयव अंग मित् हो। अत्र ज्ञान शब्दस्य अन्त्यस्य अवयवस्य अकारस्य अंगभूतो नकारः तस्यनुट् = न्, ज्ञानन्। इ, नान्तस्य उपधायाः दीर्घे। ज्ञानानि। पुनस्तद्वत् = द्वितीया विभक्ति में भी उसी प्रकार ज्ञानम्, ज्ञाने, ज्ञानानि का ज्ञान करे। अवशिष्ट सभी रूप पुंलिंगवत्, संचालन करे। एवं = ज्ञान शब्द की तरह नपुंसक अर्थ में वर्तमान धन, बन, फल, मूल, पत्र, पुष्प, अन्न, जल, आदि शब्दों का रूप संचालन करे।

( १ ) डतरादिभ्यः = कतर, कतम, अन्य, अन्यतर एषु अन्यतमेभ्यः पञ्चभ्यः = इन पाँचों के क्लीबेभ्यः — नपुंसकलिङ्ग में विद्मान होने पर, इनसे

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रदडादेश स्यात् ।

२ टेः । ६ । ४ । १४३ । डिति भस्य टेर्लोपः । कतरत्, कतरद् । कतरे । कतराणि । हे कतरत् । शेषं पुंवत् । एवं कतमत् । इतरत् । अन्यत् । अन्यतरत् । अन्यतमस्य त्वन्यतममित्येव । ( एकतरात् प्रतिषेधो वक्तव्यः ) एकतरम् । ३ ह्रस्वो नपुंसके प्रातिपदिकस्य १ । २ । ४७ । अजन्तस्येत्येव ।

---

परे सु तथा अम् के स्थान में 'अदड्' आदेश हो । ( २ ) 'ड' इत् हो तो उसी के सामर्थ्य से 'भ' संज्ञकअङ्ग की 'टि' का लोप हो । 'दोनों में कौन हो' ( अनयोः कः कतरः ) इस अर्थ में प्रयुक्त प्रातिपदिकसंज्ञक डतरप्रत्ययान्त "कतर" शब्द से सु तथा अम् दोनों को अदड् आदेश हुआ । अन्त्यहल् 'ड्' की इत्संज्ञा तथा अदर्शन । भसंज्ञा, उसकेटि संज्ञक अकारका लोप 'वाऽवसाने' से विकल्पेन चर्त्वे तकारे कृते कतरत् । पक्षे कतरद् इति दकारःतिष्ठति । द्विवचन में 'औ' तत्स्थाने नपुंसकात् च, इति 'शी' आदेशे 'औङः श्याम्' वार्तिक से अकारलोपप्रतिषेधे गुणे कतरे । ( खादतः ) । वहुवचने जस् तत्स्थाने 'शि' तस्य ( शि सर्वनाम ) से सर्वनामस्थानसंज्ञा, नुमागम उपधादीर्घे, णत्वेच कृते कतराणि ( पठन्ति ) हे- कतरत् पूर्ववत् । अत्रविशेषः सम्बुद्धिहलः तकारस्य लोपो न भवति । यतोहि जो अङ्ग है, वह ह्रस्वान्त नहीं । जो ह्रस्वान्त है वह अङ्ग नहीं । अदड् के मिल जाने से रूप बना । शेषं पुंवत् = अनुच्चारित रूप पुलिङ्ग की तरह जाने जाय एवं = कतरशब्द की तरह कतमः, एषु किं कतमत् । एतस्मात् इति इतरत् एतयोः अन्यः अन्यतरत् । इन शब्दों से परे सु, अम् के स्थान में अदड् आदेश का विधान होता है । इन पाँचों के अतिरिक्त उक्त विधान नहीं होता । अतः बोले कि अन्यतमस्य = अन्यतम शब्द के स्थान में अन्यतमम् यही रूप बनता है । अदड् नहीं होता । क्योंकि यह अव्युत्पन्न प्रातिपदिक है । अनयोः एकः = प्रधान इति, एकतरम् । यहाँ भी डतरप्रत्यान्त जानकर अदड् प्राप्त है, परन्तु निषेधवार्तिक एकतर शब्द से अदड़का प्रतिषेध कहता है । रूपं ज्ञानवत् ।

( ३ ) नपुंसके = नपुंसक अर्थ में वर्तमान अजन्तस्य = अच्अक्षर अन्त में हो, ऐसे प्रातिपदिक को ह्रस्व ( एकमात्रिक ) हो । यथा—श्रियम्पाति ( लक्ष्मीं ज्ञानं वा रक्षति ) इति श्रीपा । लक्ष्मीरक्षक अर्थ से अर्थवतः श्रीपाशब्दस्य प्राति पदि कात् सुविभक्तिः अजन्तं नपुंसकलिंगे वर्तमानं प्रातिपदिकं 'श्रीपा' इतिदृष्ट्वा, अन्त्यअल् आकारस्थाने ह्रस्वे । 'अतोऽम्' सूत्रेण 'सु' स्थाने अम् आदेशे । श्रीपं, श्रीपे, श्रीपाणि । अत्र णत्वं विशेषः । अत्रसमानपदस्य अभावात्, 'अट्कुप्वाङ्' सूत्रेण णत्वं न भवति । किन्तु एकाजुत्तरपदे ण इति णत्वम् । अस्मिन् प्रकरणे ( दीर्घः ) आकारो न तिष्ठति । एवम् ( ए ओ ऐ औ ) एतेऽपि एकशः ( एक-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

श्रीपम्। ज्ञानवत्। द्वे २। त्रीणि २। ४ स्वमोर्नपुंसकात् ७। १। २३। लुक्स्यात्। वारि। २४५ इकोऽचि विभक्तौ ७। १। ७३। इगन्तस्य नुमचि विभक्तौ। वारिणी। वारीणि। (१९१) न लुमतेत्यस्यानित्यत्वात् पक्षेमम्बुद्धिनिमित्तो गुणः। हे वारे!, हे वारि!। आङो ना, वारिणा।

---

(एक करके) ह्रस्वो भूत्वा तिष्ठन्ति।

(४) नपुंसकात्—नपुंसकप्रधान अर्थ में वर्तमान शब्द से परे 'सु' तथा अम् का लुक् (अदर्शन) हो। यथा—वृणुते प्राणिनं जीवयति, इति वारि = जलम्। प्राणदान अर्थं से अर्थवान् प्रातिपदिकसंज्ञक 'वारि' शब्दात् सु। नपुंसक से परे स्वमोर्नपुंसकात् से सु का लोपः सञ्जातः। वारि। द्विवचनस्य इच्छायाम् वारि + औ नपुंसकाच्च, औस्थाने 'शी' आदेशे 'श' इत्। (२४५) इकः—इक् अक्षर अन्त में हो ऐसा शब्द उसे नुम् = न् आगमो भवति अजादिविभक्ति परे। मित् होने से 'न्' अन्त्य अच् का अवयव होगा। 'अट्कुप्वाङ्' णत्वे। वारिणी बहुवचने जस् शस् स्थाने जश्शसोः शि, आदेशे शि सर्वनामस्थानम्। अङ्गस्य नुमागमः, नान्तस्य उपधायाः दीर्घे। १३८ से णत्वे वारीणि। हे वारे। हे वारि + सु इति दशायां स्वमोर्नपुंसकात् से सु का लुक्। उस लोप (सु) को प्रत्ययलोपे प्रत्यय लक्षणं से ह्रस्वस्य गुणः से गुण। हे वारे। न च नलुमताङ्गस्य-लुमता (लुक्) शब्द से जिसका अदर्शन हुआ हो, वहाँ प्रत्ययलक्षण कार्य नहीं होता। तब गुण नहीं होगा हे वारि। 'नलुमताङ्गस्य' सूत्र के अनित्य पक्ष में सम्बुद्धि को निमित्त मानकर गुण, अनित्यता में प्रमाण, इकोऽचि नुम् विभक्तौ' सूत्रे 'अचि' ग्रहणं किमर्थम्? उत्तर—हलादिविभक्ति परे नुम् 'मा' भवतु एतदर्थम्। न च हलादिविभक्तिपरे नुम् यदि अभविष्यत् तदा न लोपः प्रातिपदिकान्तस्य इति नकारलोपो अभविष्यत्। इस प्रकार हलादि पक्षेऽपि नुम् होने पर भी न दोषः तदा अच् ग्रहणं व्यर्थीभूय बोधयति, यत् नलुमताङ्गस्य इतिनिषेधो 'अनित्यः' पाक्षिक इत्यर्थः।

जलवाचक वारिशब्दात् साधने अर्थे टा। अत्र 'टा' स्थाने आङो 'ना' अस्त्रियां इति नादेशे, णत्वे। वारिणा, (जलेन)। जीवन दानार्थक जलवाचक वारिशब्दात् चतुर्थी के एकवचन (के लिए) उद्देश्य अर्थ में ङे। वारि+ए इति दशायां (घेर्ङिति) सूत्र से ङिति सुप् 'ए' परे घिसंज्ञक वारि के इ को गुणे प्राप्ते, इकोऽचि से इगन्तस्य नुम्आगमे प्राप्ते, तत्र निर्णायकं वार्तिकम् = वृद्धिः, औत्व, त्रिज्वद्भाव, तथा गुण इनकी अपेक्षा 'नुम्' पूर्वविप्रतिषेध से प्रबल होता है। विप्रतिषेध = तुल्यबल विरोध होने पर परम् = इष्टं कार्यम्। पूर्वं इष्ट हो

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

घेर्ङितीति गुणे प्राप्ते । ( वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन ) वारिणे । वारिणः २ । वारिणोः २ । नुमचिरेति नुट् वारीणाम् । वारिणि । हलादौ हरिवत् ।

६ अस्थि-दधि-सक्थ्यक्ष्णामनङुदात्तः ७ । १ । ७५ । एषामनङ् स्यात् टादावचि । ७ अल्लोपोऽनः ६ । ४ । १३४ । अङ्गावयवोऽसर्वनामस्थान-यजादि-स्वादिपरो योऽन् तस्याकारस्य लोपः । दध्ना । दध्ने । दध्नः ।

---

या पर । अत्र नुमेव इष्टः । वह नकार वारिका अङ्ग है वारि + ए ( न तो इकारान्त रहा न घि संज्ञा हुई ) णत्वे सति । वारिणे । वारिभ्यां, वारिभिः । एवं वृद्धि का उदाहरण—प्रियः सखा यस्य कुलस्य तत्कुलम् । प्रियसखि । जिस कुल में मित्र प्यारा हो । अत्र प्राप्तणिद्वत् भाव तथा वृद्धि को बाँधकर नुम् । प्रियसखीनि औत्व का उदाहरण—वारिणि । सप्तमीएकवचने ङौ विभक्तौ ( अच्चघेः ) इति प्राप्तम् औत्वं वाधित्वा नुम् । तृज्वद्भावस्य उदाहरणं—प्रियः क्रोष्टा यस्मिनकुले, अत्रापि तृज्वद्भावं वाधित्वा नुम् भवति । एवं प्रिय-क्रोष्टूनि । वारिणः । वारिणोः इत्यादावपि पूर्वविप्रतिषेधेन नुम् प्रबलो भवति । वारीणाम् । वारि + आम् षष्ठी बहुवचने ह्रस्वनद्यापोनुट् इति नुट् प्राप्ते 'इकोचि' इति 'नुम्' प्राप्ते तत्र नुम् अचिरतृज्वद्भावेभ्यो पूर्वविप्रतिषेधेन इति नुम् भवति । ततः 'नामि' सूत्रेण दीर्घे णत्वे च । यद्यपि नुम् कृतेऽपि नकारः तिष्ठति तथाऽपि नुट् कृते 'नामि' इति दीर्घो न भविष्यति । नकारस्य अङ्गावयवे सति अजन्तत्वं न स्यात् । ह्रस्वान्तत्वं क्षीयते । अतो नुम् एव श्रेयान् । वारिशब्द से हलादि ( भ्यामादि ) विभक्ति में हरिशब्दवत् रूपाणि सुलभन्ताम् ।

( ६ ) अस्थि = हड्डी, दधि = दही, सक्थि = ( उरु जङ्घा शकटावयव = गाड़ी की धुरा, अक्षि = नेत्र । इन शब्दों के अन्त्य अल् के स्थानमें अनङ् आदेशो भवति । स च उदात्तो भवति । टादौ अचि = टा, ङे, ङसि, ङस्, आदि अजादि विभक्तिपरे । ( ७ ) अनः = अङ्गसंज्ञकका अवयव = अंश हो, तथा सर्वनाम स्थानसंज्ञा न हुई । ऐसा यजादि = य और अच् अर्थात् यकारादि या अजादि प्रत्यय और स्वादि = सु, औ, जस् आदि परे हो ऐसे अन्के अकारका लोप हो । दधिशब्दः—प्रथमासम्बोधनद्वितीयाविभक्तौ च वारिशब्दसदृशं रूपं लभते । किन्तु । टादौ अचि । अनङ् प्रत्ययो भवतीति विशेषः । यथा—दधि + टा इतिदशायाम् ( अस्थिदधि ) सूत्रेण, अन्त्य 'अल्' दधितगस्य इकारस्य अनङ् आदेशे, सर्वनाम स्थानभिन्न यजादि स्वादि प्रत्यय टा का आपरे अंगावयव 'अनः' अकारस्य लोपे, वर्ण सम्मेलने दध्ना । एवं चतुर्थ्यैकवचने पूर्वप्रक्रियावत् रुपम् । तथैव अन्यत्राऽपि ।



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दध्नः । दध्नोः । दध्नोः । ८ विभाषा ङिश्योः ६ । ४ । १३६ । अङ्गावयवोऽसर्वनामस्थानपरो योऽन् तस्याकारस्य लोपो वा स्यात् ङिश्योः परयोः । दध्नि, दधनि । शेषं वारिवत् । एवमस्थि-सक्थ्यक्षि । सुधि । सुधिनी । सुधीनि । हे सुधे !, हे सुधि ! । ९ तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य ७।१।७४ । प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा टादावचि ।

---

अर्थवाचकात् प्रातिपदिकात् दधिशब्दात् अधिकरणे अर्थे सप्तम्यैकवचने 'ङि' । दधि + इ इति स्थिते 'अस्थिदधि' सूत्रेण अनङ्, अनुबन्धलोपे । अत्र अल्लोपोऽनः नित्यम् अकारलोपे प्राप्ते । ( ८ ) विभाषा=पक्षपातिनीभाषा, अङ्ग ( जिससे प्रत्यय हुआ हो ) का अवयव=अंश । **सर्वनामस्थानसे भिन्न विभक्ति परे रहते अङ्गका अवयव जो 'अन्' उसके अकारका लोपविकल्पसे हो ।** ङि और शीपरे । अत्र ङित् परकस्य अनः अकारस्य लोपेकृते । **दध्नि** । अभाव पक्षे **दधनि** । शेषं=अनुच्चारितं रुपं **वारिवत्** । वारिशब्दसदृशरुपं लभताम् । एवं दधिशब्दकी तरह अस्थि, सक्थि अक्षि शब्दों को समझें । यथा—अक्षि, अक्षिणी, अक्षीणि । हे अक्षि हे अक्षे । अक्ष्णा, अक्षिभ्याम् अक्षिभिः । अक्ष्णे अक्षिभ्याम् अक्षिभ्यः । अक्ष्णः अक्ष्णोः अक्ष्णाम् । अक्ष्णि अक्षणि, अक्ष्णोः अक्षिषु । इति इकारान्तः ।

( २४९ ) **तृतीयादिषु**=टा, ङे, ङस् इत्यादि विभक्तिपरे **भाषितपुस्कं**=भाषितः, पुमान् + पुलिंगलक्षणं यस्य शब्दस्य तत् ।

जिस स्त्रीलिङ्ग शब्द में पुलिङ्गधर्म प्रतीत हो उसे **पुंवद**=पुलिङ्ग के सदृशकार्य हो । **गालवस्य**-गालव नामकआचार्य के मत में । पाणिनिमते पुम्वद् न हो । इससे दो पक्ष सिद्ध हैं । **प्रवृत्तिनिमित्तैक्ये**-शब्द की **प्रवृत्ति**=प्रयोग में निमित्त, कारण ( हेतु ), एक ही अर्थ ( जाति ) है । **वस्तु या व्यक्तिमें जाति गुण क्रिया को प्रवृत्ति-निमित्त कहते हैं । शब्दः अर्थस्य कारणम् स हि तेनोपजन्यते । शब्द के प्रयोग में अर्थ ही कारण है । पुलिङ्ग या नपुंसकलिङ्ग में समान अर्थ होता हो, उसी को भाषिस्तपुंस्क कहते हैं ।**

यन्निमित्तमादाय पुंसि शब्दः प्रवर्तते ।
क्लीबवृत्तौ तदेव स्यात् भाषित् पुंस्कंत-दुच्यते ।
पीलुर्वृक्षः फलं पीलु पीलुने न तु पील्वे ।
वृक्षे निमित्तं पीलुत्वं, तज्ज्ञत्वं तत्फले पुनः ॥

जिस नपुंसकलिङ्गक शब्द में पुलिङ्ग की स्वच्छप्रतीति हो, ऐसा इकारान्त नपुंसकलिङ्ग, उसको पुंवद्भाव हो । टादिविभक्ति परे । यथा—सुष्ठुध्यायति इति सुधी सुन्दर ध्यानकर्त्ता अर्थ से अर्थवान् प्रातिपदिकसंज्ञक सुधीशब्द से

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सुधिया, सुध्रिनेत्यादि। मधु। मधुनी। मधूनि। हे मधो! हे मधु! सुलु सुलुनी। सुलूनि। सुल्वा सुलुनेत्यादि। धातृ। धातृणी। धातॄणि। हे धातः!, हे धातृ! धात्रा, धातृणा, धातॄणाम्। एवं ज्ञात्रादयः।

२५० एच इग्घ्रस्वादेशे १।१।४८। आदिश्यमानेषु ह्रस्वेषु मध्ये

---

प्रथमा का एकवचन 'सु' 'ह्रस्वो नपुंसके' से ह्रस्व, स्वमोर्नपुंसकात् इति सुलोपः। सुधि, सुधिनी सुधीनि। पुनस्तद्वत्। तृतीया-एकवचने सुधी+टा नपुंसकह्रस्वे सुधि+आ। गालवाचार्यमते तु, सुन्दरध्यानकर्ता अर्थः पुलिङ्ग, स्त्रीलिङ्ग, नपुंसके च तिष्ठति। अतः सुधीशब्दः भाषितपुंस्कः। तेन तस्य ( सुधी शब्दस्य ) पुंवद्भावो अभवत्। यस्य फलम् ( अचिश्नु ) इतिइयङ्आदिः। सुधिया। पाणिनि मते इकोचिनुम् = न्। सुधिना, सुधिने, सुधिये, सुधिभ्यां सुधिभ्यः। सुधियः सुधिनः, सुधियोः सुधिनोः सुधीनाम्। सुधियि सुधिनि सुधिषु। एवं प्रधी शब्दः नपुंसके बोध्यः। नपुंसकलिङ्ग में सभी ईकारान्त ऊकारान्त शब्द ह्रस्वान्त हो जाते हैं। मधुशब्द का रूप भी तथैव मधु मधुनी मधूनि। शेषरूप भानुसदृश समझें। सुष्ठु लुनाति इति सुन्दर छेदन या लवनकर्ता अर्थ से अर्थवान् प्रातिपदिकसंज्ञक सुलू+सु। नपुंसकह्रस्वे सोर्लुक्। सुलु, सुलुनी = ह्रस्वे औ के स्थान में 'शी' नुम्। अत्राऽपि सुलु+टा इति दशायाम्।

अच्छा छेदनकर्ता अर्थ पुलिङ्ग में भी है नपुंसक में भी। अतः भासितपुंस्क होने से पुम्वद्भाव, पुलिङ्गवत् रूप। 'ओः सुपि' से यण्। सुल्वा। यण् अभाव पक्ष में 'नुम्' सुलुना इत्यादि। चतुर्थी में सुल्वे सुलुने। सुल्वः सुलुनः। सुल्वोः सुलुनोः इत्यादि। दधाति = धारयति पोषयति लोकान्। जो जगत का धारण या पोषण करे उसे 'धाता' कहते हैं। धारणकर्तृत्व या पोषणकर्तृत्व सभी लिङ्ग में हैं। धातृ+सु, नपुंसके, सुलोपः। धातृ, धातृणी ( औ स्थाने शी, नुम् ) धातॄणि। जश्शसोः शि नुम् दीर्घः। हे धातृ सु, तस्य नपुंसकलुक्। ह्रस्वस्य गुणः ( अर् ) रेफस्य विसर्गे। हे धातः। पक्षे हे धातृ। टादिविभक्ति में धारण या पोषण अर्थ तीनों लिङ्ग में होने से भाषितपुंस्के पुंवद्भावे, यणि। धात्रा। पक्षे नुमि धातृणा णत्वे। धातृ+आम्। अत्र नुमचिरतृज्वद्भावेभ्यो नुट् से नुम् को बाँधकर 'नुट्' दीर्घ, णत्व, धातॄणाम्। धात्रे धातृणे। धातृभ्याम् धातृभ्यः। धातुः धातृणः। धात्रोः धातृणोः इत्यादि। एवं ज्ञातृ, कर्तृ, हन्तृ इत्यादि। जो भाषितपुंस्क है, उन्हें समझें।

( २५० ) एच् = ए ओ ऐ औ। इक् = इ उ को ह्रस्वादेशे = ह्रस्व आदेश होने पर। आदिश्यमानेषु = आदेश होनेवाले ह्रस्वों के मध्य में एच् के स्थान

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एच् इगेव स्यात् । प्रद्यु । प्रद्युनी । प्रद्यूनि । प्रद्युनेत्यादि । प्ररि । प्ररिणी । प्ररीणि । प्ररिणा । एकदेशविकृतमनन्यवत् । प्रराभ्याम् । सुनु । सुनुनी । सुनूनि । सुनुनेत्यादि ।

इत्यजन्ताः नपुंसकलिङ्गाः

---

मे इक् ही आदेश हो । प्रकृष्टा द्यौः यस्मिन्दिने = स्वच्छ, आकर्षक प्रकाशमान् आकाश हो जिस दिन, वह प्रद्यु है । 'प्रद्यो' शब्द प्रा० सं० से 'सु' विभक्ति नपुंसक लिङ्ग में वर्तमान प्रातिपदिक प्रद्यो ह्रस्वो जातः । परञ्च कौन सा ह्रस्व हो, तत्र निर्णायक सूत्र "एच् इक् ह्रस्वादेशे" एच् के स्थान में ह्रस्व आदेश इक् ही होना चाहिए । अकार नहीं । ए ऐ के स्थान में 'इ' ह्रस्व हो । ओ औ के स्थान में ह्रस्व 'उ' हो । इसका रूप मधुशब्द की तरह संचालित करें । स्वमोर्लुक् । प्रद्यु । प्रद्युनी । प्रद्यो + औ अत्र नपुंसकह्रस्वे शी आदेशे, नुमागमे प्रद्यूनि । अत्र ह्रस्वे, 'जश्शसोः शि' नान्त-उपधा दीर्घः । प्रद्युना प्रद्यवा-तृतीया । एकवचने 'टा' नुम् । अत्र पुंवद्भावो न भवति । इति केचित् । निर्मलदिन अर्थ प्रवृत्तिनिमित्त, दोनों लिङ्गो में एक होने से यद्यपि भाषितपुंस्क है । जो इगन्त होनेपर पुंवद्भाव करता है । परन्तु 'प्रद्यो' शब्दः भाषितपुंस्कः स इगन्तो नास्ति, य इगन्तः प्रद्युशब्दः स भाषितपुंस्को नास्ति । अतो न पुंवद्भावः । भाषितः पुमान् येन । तथापि एकदेश विकृतन्यायेन प्रद्यो या प्रद्युमें कोई अन्तर नहीं है । हे प्रद्यु, हे प्रद्यो । प्रद्युना, प्रद्यवा, प्रद्युभ्याम् प्रद्युभिः । प्रद्युने प्रद्यवे प्रद्युभ्याम् प्रद्युभ्यः । प्रद्युनः प्रद्यवः, प्रद्युनोः प्रद्यवोः प्रद्युनाम् । प्रद्युनि प्रद्यवि इत्यादि । प्रकृष्टाः रायः धनं यस्य तत्कुलं प्ररि । प्ररै . शब्दस्य प्रातिपदिकसंज्ञायां 'सु' नपुंसके वर्तमानस्य प्रातिपदिकस्य ह्रस्वं एच् स्थाने इ भवति । सुलोपे प्ररि । प्ररीणि । प्ररै + औ ह्रस्वे, औ स्थाने शीभावे नुम् णत्वे, दीर्घे । प्ररिणी । अत्रापि ह्रस्वे प्ररै जस् जश्शसोः 'शि' नुम्, दीर्घे, णत्वे च । प्ररिणा । प्ररै + टा ह्रस्वे, नुम् णत्वे । अत्रापि प्रद्यू इव रुपं पुंवद्भावश्च बोध्यः । हे प्ररे । प्ररि । 'एकदेशविकृतम्' प्रराभ्याम् । किसी एक अंश में विकार या त्रुटि आ जाने से अनन्यवत् = अन्य अर्थ वाला नहीं होता । जैसे—छिन्ने-पुच्छे श्वा गर्धभो न भवति । कुत्ते की पूंछ कटी तो वह गदहा नहीं होता । वैसे ही प्ररि + भ्याम् । यहाँ रै के स्थान में ह्रस्व 'रि' होने पर भी जो अर्थ 'प्ररै' का था, वही अर्थ प्ररि में भी है । अतः रायोहलि सूत्र से आकारान्त होकर सिद्धम् । हलादि विभक्ति परे सर्वत्र आत्वं भवति । शोभना = दर्शनीया नौः ( तरिणिः ) यस्य तत् कुलम् । सुनु । सुनौ + सु, अत्र औ स्थाने 'उ' ह्रस्वादेशे, स्वमोर्लुकि सुनु सुनुनी इत्यादि । मधु शब्दवत् रुपं संचालनीयम् ।

इति प्राभाकरीटीकायामजन्तनपुंसकलिङ्गाः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ हलन्ताः पुंल्लिङ्गाः

२५१ हो ढः ८।२।३१ । हस्य ढः स्याद् झलि पदान्ते च । लिट्, लिड् । लिहौ । लिहः । लिड्भ्याम् । लिट्त्सु, लिट्सु । २ दादेर्धातोर्घः ८।२।३२ ।

---

## । अथ हलन्तपुंलिङ्गप्रकरणम् ।

अजन्तपुलिङ्गसमाप्ति के अनन्तर हलन्त शब्दों में सत्वगुण प्रधानशब्द ( पुलिङ्ग ) का प्रकरण प्रस्तुत करते हैं। जिस प्रकार अजन्त में अच् प्रत्याहार के वर्ण अकारान्त इकारान्त उकारान्त आदि क्रमानुसारीशब्द उपस्थित किये गये। इसी प्रकार हल् प्रत्याहार के वर्णों का शब्दविन्यास हलन्तप्रकरण में हलवर्ण हकारान्त वकारान्त हयवरट् आदि क्रमानुरोध से प्रस्तुत करते हैं। यकारान्त शब्द नहीं होते, अतः हकारान्त शब्द से प्रकरण **प्रारम्भ करते हैं।**

( २५१ ) हः=हकार के स्थान में, ढ़ः ( ढ़कार ) हो, झलि = झलप्रत्यहार के अक्षर परे हो, या पदान्त हो। यथा—**लेढ़ि** = आस्वादयति इति **लिट्** ( चाटनेवाला ) आस्वादग्रहणकर्ता अर्थ से अर्थवान् प्रातिपदिकसंज्ञक लिह् शब्दात् आस्वादनकर्ता अर्थे सुविभक्तिः। उ इत्। सकारस्य अपृक्तसंज्ञा, हल्ङ्यादिलोपश्च प्रथमं भवति,सपादसप्ताध्यायिस्थकार्यं होने से। ततः 'होढ़ः' 'ह' स्थाने 'ढ़' कृते। 'झलां जश्' इति जश्त्वे, अवसानसंज्ञायां 'वाऽवसाने' इति चर्त्वे विकल्पेन, **लिट्, लिड्। स्वादकः।** दो आस्वादक अर्थ रहने पर द्विवचने **लिह + औ।** सम्मेलने **लिहौ लिहः।** यह रूप जस्, ङसि, ङस् में समान होगा। लिहा, लिड्भ्याम्, लिड्भिः। हस्थाने ढ़त्वं जश्वं सर्वत्र समानम्। लिहे, लिड्भ्याम् लिड्भ्यः। लिहः, लिहोः, लिहाम्। लिहि, लिहोः। सप्तमी बहुवचने लिह् + सु इति दशायाम् होढ़ः इति 'ह' स्थाने ढकृते, ढ़कारस्य जशत्वेन ड कृते, 'ङःसि धुट्' आगमे अनुबन्धलोपे 'खरि' चर्त्वे धस्थाने त्। डस्थाने ट् कृते **लिट्त्सु।** धुट् अभावे चर्त्वे **लिट्सु।** इस प्रकरण में अजादिविभक्ति परे विशेष कार्य नहीं होता। हलादि में सामान्य विशेष दोनों कार्य, यथायोग्य होते हैं। लिह के समान ही प्रायः सभी हकारान्त होंगे।

( २ ) दादेः = द अक्षर आदि में हो उसे दादि कहते हैं। **उपदेशे** = मुनियों के प्रथम उच्चारण में **दादिधातु** के 'ह' को 'घ' हो। झलि प्रत्याहार के अक्षर परे हो या पदान्त हो। यहाँ दादिपद उपदेश **अवस्था का होना अनिवार्य है।**

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

झलि पदान्ते चोपदेशे दादेर्धातोर्हस्य घः। ३ एकाचो बशो भष् झषन्तस्य स्ध्वोः ८।२।३७। धात्ववयवस्यैकाचो झषन्तस्य बशो भष्, से ध्वे पदान्ते च धुक्, धुग् दुहौ। दुहः। धुग्भ्याम्। धुक्षु। ४ वा द्रुह-मुह-ष्णुह-ष्णिहाम् ८।२।३३। एषां हस्य वा घो झलि पदान्ते च। ध्रुक्, ध्रुग्, ध्रुट्, ध्रुड्, द्रुहौ। द्रुहः। ध्रुग्भ्याम्, ध्रुड्भ्याम्। ध्रुक्षु, ध्रुट्सु, ध्रुट्त्सु। एवं मुह।

---

(३) एकाचः=एक अच् हो, जिस धातु में या धातु का अवयव एक अच् हो, झषन्तस्य=झष् (झ, भ; घ, ढ, ध) ये अक्षर अन्त में हो तब वश (ब, ग, द ड) के स्थान में भष् (भ घ ढ ध) हो, से=सकारे परे, ध्वे=ध्वं प्रत्यय परे, पदान्ते=पद के अन्त में हो। यथा—दोग्धि इति धुक् (दूहनेवाला) अर्थ से अर्थवान् प्रातिपदिकसंज्ञकः दुहशब्दः तस्मात् सु=स्, तस्य, अपृक्तसंज्ञा, हल्ङ्यादिलोपः। दकारादि धातुः दुह इति। तस्य हकारस्य स्थाने दादेर्धातोर्घः कृते दुध्। अयं धकारान्तः दादिधातुश्च। व्यपदेशिवद्भावेन (अमुख्ये मुख्य व्यवहारेण) एकाचोऽपि=इस धातु के बश् (दकार) को भष् धकार हुआ। वाह्य प्रयत्न के परीक्षण से। अत्र झलो जश्त्वे, 'वावसाने चर्त्वे धुक् धुग्' दुहौ दुहः। दुहम् दुहौ, दुहः दुहा दुह्+भ्याम्। अत्रापि घत्वे भष्भावेन 'द' स्थाने घकारे जश्त्वेन 'ग'। धुग्भ्याम्। दुहः दुहोः दुहाम। सप्तमीबहुवचने दुह+सु इत्यवस्थायां दादेर्धातोर्घः भष्भावेन घ्। जस्त्वेन घस्य 'ग्' चर्त्वेन क् धुक्+सु। आदेश प्रत्ययोः षत्वे क प संयोगो क्षकृते धुक्षु। यहाँ झषन्त सिद्ध करने के लिए भष्भाव प्रथम होता है।

(४) द्रुह (द्रोह करना) मुह (मुग्ध) स्नुह (वमनकर्ता) स्णिह (स्नेहकर्ता) इन शब्दों के 'ह' को विकल्प से 'घ' हो, झलिपरे, या पदान्त में। ईर्ष्या द्वेष, (द्रोह) करने अर्थ में प्रसिद्धः द्रुहशब्दः, प्रातिपदिकसंज्ञकः तस्मात् 'सु' तस्य हल्ङ्यादिलोपः। अत्र 'होढः' 'ढत्वे प्राप्ते तं प्रवाध्य, दादिमत्वा घत्वे प्राप्ते, तं प्रवाध्य 'वाद्रुह्' सूत्रेण पाक्षिके, घत्वे, भषभावे, जश्त्वे, चर्त्वे, ध्रुक् ध्रुग् पक्षेढत्वे, जश्त्वे, चर्त्वे। द्रुह्यति, ध्रुट् ध्रुड्, द्रुहौ, द्रुहः। विकल्प घत्व तथा ढत्व, जश्त्व, चर्त्व से ध्रुग्भ्याम् ध्रुड्भ्याम्, सप्तमी बहुवचने द्रुह+सु। घत्व, पक्षे भष्भावे चर्त्वे, ककारे षत्वे क ष संयोगे ध्रुक्षु। पक्षे ढत्वे भष्भावे जश्त्वे, ध्रुडागमे चर्त्वे ध्रुटत्सु। धुट्अभावे, ध्रुट्सु। द्रुहौ ध्रुग्भ्याम् ध्रुड्भ्याम् ध्रुड्भिः ध्रुड्भिः। विभक्ति का अर्थ पहले ही समझाया गया है। एवम्=इसी प्रकार मोह अज्ञान में पड़ा व्यक्ति अर्थवत् प्रा० सं० करके मुह शब्द से भी रूप बनेंगे। मुह्यति, मुक्, मुग्, मुट्, मुड् मुग्भ्याम्, मुड्भ्याम्।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

२५५ धात्वादेः षः सः ६।१।६४। स्नुक्, स्नुग्, स्नुट्, स्नुड्। एवं स्निह्। ६ इग्यणः संप्रसारणम् १।१।४५। यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात्।

७ वाह ऊठ् ६।४।१३२। भस्य वाहः संप्रसारणमूठ्। ८ संप्रसारणाच्च ६।१।१०८। संप्रसारणदचि पूर्वरूपमेकादेशः। वृद्धिः। विश्वौहः। इत्यादि। ९ चतुरनडुहोरामुदात्तः ७।१।९८। अनयोराम्

---

(२५५) धातु के आदि में यदि ष हो तो उसके स्थान में 'स' हो। स्नुह्यति=वमनकर्ता अर्थ में विद्यमान ष्णुहको प्रातिपदिकसंज्ञा 'सु'। धातु के आदि षकार को सकार हुआ। अत्र णत्वस्य निमित्तं षकारः ( निमित्ताऽपाये नैमित्तकस्यापि अपायः। निमित्त=कारण ( ष ) के हट् जाने से ( कार्य ) णत्वभी हट गया। स्नुह+सु 'वाद्रुह' सूत्रेण हस्थाने घकृते 'सु' का प्रथम ही हल्ङ्यादिलोप—होगा। जश्त्व चर्त्वे स्नुक् स्नुग्। पक्षे ढत्वे जश्त्वे विकल्पेन चर्त्वें। स्नुट् स्नुड्। इसी प्रकार ष्णिह ( प्रेम करनेवाला ) स्नेही अर्थ से अर्थवान् को धात्वादेः षः सः कारणाभावे, कार्याभावः, स्निहशब्दस्य प्रातिपदिकसंज्ञा स्वादिः सुलोपः धत्वढ़त्वजस्त्वचर्त्वेषु स्निक् स्निग्। पक्षेढत्व जश्त्व, चर्त्वं। स्निट् स्निड्। स्निक्षु, स्निट्सु। स्निट्त्सु। ( ६ ) यणः=य व र ल के स्थान में प्रयुज्यमानः=प्रयोगकिया जानेवाला जो इक् है वह सम्प्रसारणसंज्ञक हो। ( ७ ) भसंज्ञक वाहशब्द के आदि 'व' को सम्प्रसारण ऊठ=ऊ हो।

( ८ ) सम्प्रसारणात्=जिसको सम्प्रसारणसंज्ञा हुई हो। उससे परे अच् को पूर्वरूप एकादेश हो। यथा—विश्वंवहति इति विश्ववाट्. ब्रह्माण्डका नेता। विश्व का पालन पोषणरूप भारवोढा परमात्मा। विश्ववाह् सु यहाँ भी ढत्व जश्त्व चर्त्व वकास्य सम्प्रसारणे पूर्वरूपे विश्ववाट्, विश्ववाड्, बिश्ववाहौ, विश्ववाहः। विश्ववाहं विश्वनाहौ विश्वौहः। विश्ववाह् शब्दात् कर्मकारकस्य बहुबचने शस्=अस्। भसंज्ञा अत्र ( इग्यणः सम्प्रसारणम् ) यण्=वाह, इत्यत्र वकारः तस्य स्थाने प्रयुज्यमान इक् सम्प्रसारणसंज्ञक ऊठ् ऊकारः। सम्प्रसारणाच्च पूर्वरूपे 'ऊठिपरे पूर्व रस्थाने वृद्धौ रुपम्। विश्वौहा विश्ववाड्भ्यामित्यादि। एवं भारं वहतीति भारवाट् भारवाहौ भारवाहः। शसादौ भारौहः भरवाड्भ्याम् भारवाड्भिः। भारौहे भारवाड्भ्याम् भारवाड्भ्यः। भारौहः भारौहोः भारौहाम्। भारौहि भारवाट्सु भारवाटत्सु।

( ९ ) अनयोः=चतुर्शब्द तथा अनडुह् शब्द इन दोनों को आम् हो, सर्वनामस्थानसंज्ञकपरे। ( २६० ) अनडुहः=अनडुह्शब्द को नुम्का

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्यात् सर्वनामस्थाने परे। २६० सावनडुहः ७।१।८२। अस्य नुम् स्यात् सौ परे। अनड्वान्। १ अम् संबुद्धौ ७।१।९९। हे अनड्वन्! अनड्वाहौ। अनड्वाहः। अनडुहः। अनडुहा। २ वसु-स्रंसुध्वंस्वनडुहां दः ८।२।७२। सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात् पदान्ते। अनडुद्भ्यामित्यादि। सान्तेति किम्-विद्वान्। पदान्ते किम्-स्रस्तम् ध्वस्तम्। ३ सहेः साडः सः ८।३।५६। साड्रूपस्य सहेः सस्य मूर्धन्यादेशः। तुराषाट्। तुरासाहौ। तुरासाहः। तुराषाड्भ्यामितित्यादि। ४ दिव औत् ७।१।८४। दिविति प्रातिपदिकस्यौत् स्यात् सौ। सुद्यौः। सुदिवौ।

---

आगम हो, सुपरे। यथा—गाड़ी खींचने वाला, तगड़ा वैल, अर्थ में अनडुह् + सु। अत्र अनडुहोः आम् = आगामे सर्वनामस्थानपरे सु अस्ति। अनडुआह् उकारस्य यण्। अनड्वाह् + स् सावनडुहः इति सुपरेनुम् ~ नकारोऽपि। अनड्वान्ह्स् ततः सुलोपः संयोगान्तहकारलोपश्च, तस्य ( संयोगान्त लोपस्य ) असिद्धिसम्भवात् नलोपो न भवति। दत्वमपि न, नुम् विधानात्।

( १ ) सम्बुद्धौ = सम्बुद्धिसंज्ञक 'सु' परे रहते आम्को बाधकर अम् हो जाय। हे अनडुह् सु आम् का बाधक अम्। सावनडुह इति नुम्। यण् सुलोपादिः हे अनड्वन्। अत्र एङः इति पूर्वरूपं न भवति। हे है प्रयोगे हैहयोः इति प्रगृह्य संज्ञाप्रकृतिभावात्। हे अनडुह् + औ, अत्र आम् यण्। अनडुहः। अनडुहा—अत्र किमपि कार्यं न भवति। अनडुद्भ्याम्। ( २ ) वसु अन्ते यस्य स वस्वन्तः वस् अन्तमें हो सान्तः स अन्तमें हो और संस्रादेः = स्रंसु, ध्वंसु, तथा अनुडुह इनके अन्त्य अल्वर्णको 'द' ही पदान्तमें। अनडुह् + भ्याम्। अत्र 'ह' स्थाने 'वसुस्रंसु-सूत्रेण दकृते अनडुद्भ्यामित्यादि। सूत्रमें वस्वन्तशब्द सान्त ही हो। ऐसा क्यों कहा? इसलिये कि विद्वान्शब्द वस्वन्त है वहाँ नको 'द' न हो। इसलिए सान्त कहा। साम्प्रतं नायं सान्तः। सूत्रे पदान्तग्रहणं किमर्थम्। स्रस्तम् = खिसका हुआ। ध्वस्तम् = नष्ट भ्रष्ट हुआ। यहाँ सकारको दत्व न हो। इसलिए पदान्त-ग्रहण किया। द होता तो शब्दशक्ति नष्ट होती।

( ३ ) साडः = सहशब्द यदि साड् रूप में हो गया हो तो उसके सकारको मूर्धन्य = षकार हो। तुरां वज्रं साहयति प्रहरति इति तुराषाडिन्द्रः अर्थंसे अर्थवात् तुरासाह् + सु 'होढ़ः' ढत्वे सहेः साडः मूर्धन्ययादेशे षकारे। तुरासाहौ, तुरासाहः। तुराषाड्भ्याम्। अत्र ढत्वे, जश्त्वे च। ( ४ ) दिव्शब्दः यदि प्रातिपदिक हो तो उसके अन्त्य अल् ( व ) के स्थानमें औत् = औ हो, सुपरे। सोभना द्यौः सुन्दरस्वच्छ आकाश अर्थमें सुदिव् + सु। यहाँ दिव् प्रातिपदिकका अन्त्यअल् व' है उसको 'औ' हुआ। दिमें 'इ' को यण् रुत्वेविसर्गे सुद्यौः। सुदिव् + औ=

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

२६५ दिव उत् ५ । १ । १३१ । दिवोऽन्तादेश उकारः स्यात् पदान्ते । सुद्युभ्याम् । इत्यादि । चत्वारः चतुरः । चतुर्भिः । चतुर्भ्यः २ । ६ षट्-चतुर्भ्यश्च ७ । १ । ५५ । एभ्य आमो नुडागमः । ७ रषाभ्यां नो णः समानपदे ८ । ४ । १ । "अचो रहाभ्यां द्वे" । चतुर्ण्णाम् । चतुर्णाम् । ८ रोः सुपि ८ । ३ । १६ । रोरेव विसर्गः सुपि । षत्वम् । षस्य द्वित्वे प्राप्ते । ९ शरोऽचि ८ । ४ । ४९ । अचि परे शरो न द्वे स्तः । चतुर्षु ।

२७० मो नो धातोः ८ । २ । ६४ । धातोर्मस्य नः स्यात् पदान्ते । प्रशान् । १ किमः कः ७ । २ । १०३ । किमः कः स्याद् विभक्तौ । कः । कौ ।

---

सुदिवौ सुदिवः । टादि में । सुदिवा, सुदिव्+भ्याम् । स्वादिष्वसर्वनामस्थाने इति पदसंज्ञायाम् । ( २६५ ) दिव्शब्दके अन्त्य अल् ( व ) के स्थानमें उकार हो । यहाँ व को 'उ' 'इ' को य । सुद्युभ्यातिमयादि । सुदिवः, सुदिवोः । सुदिवि, सुदिवोः सुदिव्सु । चतुर्+जस् । चतुरनडुहोः, से आम्, अनुबन्ध लोपः यण्, रुत्वे, विसर्गे, चत्वारः । चतुरः । शसिविभक्तौ 'आम्' नभवति । भिस् । चतुर्भिः । चतुर्णाम् ।

( ६ ) षट्संज्ञकशब्द तथा चतुर्शब्दसे परे 'आम्' को नुट्का आगम हो, चतुर् शब्दात् सम्बन्धेअर्थे+आम् इत्यवस्थायां चतुर्शब्द । तपरः आमः उक्तसूत्रेण नुडागमे । नकारः सञ्जातः । चतुर्+नाम् । ( ७ ) रेफ तथा षसे परे नको 'ण' हो । समानपदे=एकपदमें । अचोरहाभ्यां 'द्वे' इति विकल्पेन द्वित्वे चतुर्ण्णाम् द्वित्व अभाव पक्षे चतुर्णाम् । ( ८ ) सप्तमीबहुवचनपरे रहते रु के रको ही विसर्ग हो, अन्यरेफको नहीं । चतुर्शब्दात् प्रातिपदिकात् सुप्-विभक्तिः । रेफस्य इणप्रत्याहारे सम्भवात् आदेशप्रत्यययोः इत्यनेन षत्वम् । चतुर्षु अत्र रेफस्य विसर्गे प्राप्ते, तत्र नियमसूत्रम् रोः सुपि । रोरेव, रेफस्य, विसर्गः न तु अन्यस्य । ततः षकारस्य अचोरहाभ्यामिति द्वित्वे प्राप्ते । ( ९ ) अच् परे रहते शरः=शषसको द्वित्व नहीं होता । यहाँ अच् परे सुमें 'उ' अतः षको द्वित्व नहीं होगा । ( २७० ) धातुके मको 'न' हो पदान्तमें प्रकर्षेण शाम्यति प्रशान् ( शान्तपुरुष ) प्रशाम् शब्दात् सु तस्य हल्ङ्यादिलोपे धातोः मस्थाने न कृते सति प्रशान् । प्रशामौ प्रशामः । अत्र न लोपो न भवति नकारस्य असिद्धत्वात् । सप्तमीबहुवचने प्रशान्सु । नश्च इति विकल्पेन धुट् आगमे प्रशान्त्सु इत्यपि रूपं भविष्यति ।

( १ ) किमः=किम्शब्दके स्थानमें 'क' आदश हो, विभक्तिपरे । प्रश्न-वाचक सर्वनाम किम् शब्दको प्रातिपदिकसंज्ञा 'सु' विभक्तिः । किमः क आदेशे रुत्वे विसर्गे । कः कौ ( किम्+औ क आदेशे वृद्धिश्च ) बहुवचने किम्+जस्

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

के । इत्यादि । शेषं सर्ववत् । २ इदमो मः ७ । २ । १०८ । सौ । त्यदाद्यत्वापवादः । ३ इदोऽय् पुंसि ७ । २ । १११ । इदम् इदोऽय् सौ पुंसि । अयम् । त्यदाद्यत्वे । ४ अतो गुणे ६ । १ । ६७ । अपदान्तादतो गुणे पररूपमेकादेशः । २७५ दश्च ७ । २ । १०९ । इदमो दस्य मः स्याद्विभक्तौ । इमौ । इमे । त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः । ६ अनाप्यकः ७ । २ । ११२ । अककारस्येदम इदोऽनापि विभक्तौ । आबिति प्रत्याहारः । अनेन । ७ हलि लोपः

---

सर्वादिगणपठितः किम् शब्दः सर्वनामसंज्ञकः तस्य स्थाने किमः 'क' आदेशः । तस्य स्थानिवद्भावेन, जसः शी आदिसर्वनामकार्याणि भवन्ति 'क' आदेशः । के कम कौ, कान् । केन, काभ्याम्, कैः । कस्मै काभ्याम् केभ्यः । कस्मात् । कस्य कयोः केषाम् । कस्मिन् कयोः केषु ( किन लोगोंमें ) ( २ ) इदमः = इदम् शब्दके अन्त्य अल् मको म ही रहता है सुपरे । त्यदाद्यत्वापवादः = त्यदादीनामः से प्राप्त अत्व को बाधकर । अतः अत्व न होकर ( म ) ही रहा ।

( ३ ) इदम्शब्दके इद्भागको अय् हो पुंसि – पुलिङ्गमें सु परे । निश्चय- ( जहाँ अङ्गुलि निर्देशसंभव हो उस ) अर्थ से अर्थवान् सर्वनाम-प्रातिपदिकसंज्ञक इदम्शब्दात् सु, अत्र मकारस्थाने त्यदादीनामः इति अत्वं प्राप्तः, तं बाधित्वा इदमो म विधानम् इदोऽयपुंसि इद्भागस्य अय्आदेशे सुलोपे । अयम् । द्विवचने इदम् + औ इति स्थितौ त्यदात्वे त्यदादीनामः सूत्रेण अन्तिमवर्णस्य अत्वे । ( ४ ) अतः = पदान्तभिन्नह्रस्व अकारसे, गुणे = अ ए ओ परे हो तो पररुप एकादेश हो । इद् + औ । ( २७५ ) इदम् शब्दसे 'द' को 'म' हो विभक्तिपरे इम + औ । वृद्धिरेचि इतिवृद्धिः । ( इमौ इनदोनोंमे पूर्वसवर्णदीर्घस्य नादिचि इति निषेधो भवति । बहुवचने जसि विभक्तौ इदम् + अस् । अत्र अत्वे पररुपत्वे दश्चेति दकारस्य मकारे अदन्तसर्वनामपरस्य जसः शी आदेशे श इत् गुणे च इमे । ( ये सब ) त्यद्यद् इत्यादि सर्वनामको सम्बोधन नहीं होते । इत्युत्सर्गः = यह सामान्य नियम है । इनसे सम्बोधन सम्भव नहीं । इमम् इमौ, इमान् ।

( ६ ) अन् अपि अकः = ककाररहित इदम्शब्द के इद्भाग को 'अन्' आदेश हो , 'अपि' विभक्तिपरे । अत्र 'आप्' इति प्रत्याहारः टासे लेकर सुप् के प्' तक । अनेन–इदम् + टा त्यदादीनामः अत्वे, अतो गुणे, पररुपत्वे दश्चेति दकारस्य मकारे प्राप्ते, तं बाधित्वा टा परे इद्भागस्य अन्आदेशे टाङसि सूत्रेण इन् आदेशे गुणे रुपम् । इदम् + भ्याम् अत्वे, पररुपत्वे, दश्चेति मकारःप्राप्तः तं बाधित्वा इद्भागस्य 'अन्' आदेशः प्राप्तः, तं बाधित्वा—

( ७ ) ककाररहित इदम् शब्द के इद्भागका लोप हो आपि = टासे सुप् तक वर्णपरे । किन्तु हलादिविभक्ति परे अवश्य हो ( पृ० ) अभ्यास तथा

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

७ । २ । ११३ । अककारस्येदम इदो लोप आपि हलादौ । नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे । ८ आद्यन्तवदेकस्मिन् १ । १ । २१ । एकस्मिन् क्रियमाणं कार्यमादाविवान्त इव च स्यात् । सुपि चेति दीर्घः । आभ्याम् ३ । ९ नेदमदसोरकोः ७ । १ । ११ । अककारयोरिदमदसोर्भिस ऐस् न । एभिः । अस्मै । एभ्यः । अस्मात् । अस्य । अनयोः २ । एषाम् । अस्मिन् । एषु ।

---

विकार को छोड़कर । अनर्थके=अर्थरहित में अलोन्त्यविधिः=अलोन्त्यस्य-सूत्र की प्रवृत्ति नहीं होती । अर्थात् अर्थवान स्थलमें आलोन्त्यस्य सूत्र लगता है निरर्थक में नहीं । ( किन्तु पिपर्ति आदि में अभ्यास के स्थान में जहाँ विकार गुण आदि होना है । वहाँ निरर्थक में भी परिभाषा लगती है तभी अन्त्य ऋको इर् हुआ ) इद+भ्याम् इति दशायाम् हलिपरे इद्भागस्य लोपे । इद अर्थवान् हैं इसलिए अलोन्त्यविधि अन्त्य अल्के स्थान में विधि हुई । यहाँ सुपि च से दीर्घ कैसे हो ? क्योंकि अदन्तः=अकारः अन्त्ये यस्य ऐसा अङ्ग नहीं है । अतः ( ८ ) एकस्मिन्=असहाये जहाँ एक ही वर्ण हो उसमें क्रियमाण दीर्घकार्य एकही में आदि तथा अन्त ( आदिश्च अन्तश्च अद्यन्तौ तौ इव आद्यान्तवद् ( आद्यन्तभाव से ) ताभ्यां तुल्यं कार्यं हो । यह व्यपदेशिवद्भाव हैं । एक में अनेक का व्यवहारभाव लोकप्रसिद्ध है । यथा—देवदत्तस्य एकेव पुत्रः स एव जेष्ठः कनिष्ठः मध्यमश्च । यद्यपि अनेक के बिना एकमें ज्येष्ठ कनिष्ठ मध्यम व्यवहार लौकिक है ; तथापि आरोपित व्यवहार बनता है । जैसे गर्दभे मातुलव्यवहारवत् । अमुख्य में मुख्य का व्यवहार । इस न्याय से असहाय अकार में सहायका आरोप करके अदन्त मानकर सुपिचेति दीर्घः । अभ्याम् । एवम् इदम्+भिस् अत्रापि अत्वे, पररुपत्वे, हलादि भिस्परे इद्भागस्य लोपे, अकारस्य व्यपदेशिवद्भावेन अदन्तं मत्वा 'अतोभिस् ऐस्' प्राप्ते, निषेधसूत्रम् । ( ९ ) अकोः=अककारयोः ( ककार से रहित ) इदमदसोः=इदम् और अदस् शब्द से परे भिस् को ऐस् न हो, इति निषेधे । बहुवचने झलि एत्वे, रुत्वे, विसर्गे । एभिः । इदम् शब्दात् चतुर्थ्याः एकवचने ङे, इदम्+ए, त्यदाद्यत्वे पररुपे सर्वनाम्नः स्मै इति ङे स्थाने स्मै । स्थानिवद्भाव से ङे का विभक्ति धर्म स्मै में लाकर 'हलिलोप' इति इद्भागस्य लोपे । अस्मै । ( देहि ) आभ्याम् एभ्यः । इदम्+भ्यस् अत्वे, पररुपे, इद्भागस्य लोपे व्यपदेशिवद्भावेन एत्वे, रुत्वविसर्गौ । एभ्यः । अस्मात् । अत्रापि पूर्ववत् कार्यम् । ङसिस्थाने 'स्मात्' इति विशेषः । अस्य । अत्रापि ङस्स्थाने 'स्य' । अनयोः । इदम्+ओस् अत्र अत्वे पररुपे, अनाप्यकः इति 'अन्' आदेशे 'ओसि च' इति अकारस्य एकारे, अयादेशे । एषाम् । अत्वं पररुपत्वम् इद+आम् । सर्वनाम्नः सुट् आगमे इद्भागस्य लोपे अनुबन्धलोपे च । बहुवचने झलि एत्वे षत्वे । सप्तम्यां

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**२८० द्वितीयाटौस्स्वेनः २ । ४ । ३४ ।** इदमेतदोरन्वादेशे । किञ्चित् कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । यथा—अनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति । अनयोः पवित्रं कुलमेनयोः प्रभूतं स्वमिति । एनम् । एनौ । एनान् । एनेन । एनयोः । राजा । **१ न ङिसम्बुद्ध्योः ८ । २ । ८ ।** नस्य लोपो न ङौ सम्बुद्धौ च । हे राजन् ! ( ङावुत्तरपदे प्रतिषेधो वक्तव्यः ) ब्रह्मनिष्ठः । राजानौ । राजानः । राज्ञः ।

---

ङि स्थाने 'स्मिन्' आदेशे अस्मिन् अनयोः एषु । हलादिविभक्तिपरे इद्भागस्य लोपो निश्चितः । ( २८० ) द्वितीया ( अम्, औट्, शस् ) टा और ओस् विभक्तिपरे इदम् तथा अदस् शब्द के स्थान में एन आदेश हो । अन्वादेश की स्थिति में । किसी कार्य को विधातुम्=करने के लिए । उपात्तस्य=स्वीकारकिये गये का कार्यान्तरम् =अन्यकार्य करने के लिए पुनरुपादानम्=पुनः स्वीकारकराना ही अन्वादेश है । यथा—व्याकरण पढ़ लिया या पुनः पढ़ने चले । तब कहा इसने व्याकरण पढ़ लिया, इसको वेद पढ़ाइये, प्रथम व्याकरण पढ़ने का विधान हो । पुनः वेद पढ़ने पढ़ाने का विधान किया जाय, इस स्थितिमें अम् विभक्ति परे इदम् स्थाने एन आदेशे । एनम् । एनयोः पवित्रं कुलम् । यहाँ कुलकी पवित्रता के प्रसंग में धन की प्रचुरता का पुन' उपादान की स्थिति में अन्तादेश होने से एन आदेशः ।

राजते—शोभते य स राजा—राजन् शब्दात् प्रातिपदिकार्थे सु ( उइत् ) अपृक्तसंज्ञा, तस्य हल्ङ्यादिलोपे नान्तस्य उपधायाः दीर्घे प्रातिपदिकान्त नकारस्य लोपे । राजा । हे राजन् शब्दात् सम्बोधने अर्थे सु तस्य हल्ङ्यादिलोपे । नकारस्य लोपे प्राप्ते ।

( १ ) नकारका लोप न होः ङिपरे तथा सम्बुद्धिपरे । प्रत्ययलक्षणेन सु मानकर नलोपका उक्तसूत्र से निषेध हुआ (वा०) यदि उत्तर भाग में इसको कोई पद हो तो ङि परे नलोप का निषेध नहीं होता । अर्थात् न लोप हो ही जाता । ( वार्तिक में उत्तरपद समास के अन्तिम पद में रूढ़ हैं । समासचरमावयवे रुढ़ः । उत्तरपदे यथा ब्रह्मणि निष्ठा यस्य स ब्रह्मनिष्ठः । भगवान में अटूट श्रद्धा रखने वाला । यहाँ समास का अवयव उत्तरपद 'निष्ठा' है, उसके परे ब्रह्मन्का न लोप होता है । परन्तु प्रत्ययलक्षण से विभक्ति परे । न लोप के निषेध का निषेधवार्तिक से हुआ । ब्रह्मनिष्ठः ) राजानौ राजन्+औ नान्त उपधाया दीर्घे एवं राजानः जसि विभक्तौ तथा । राजानं राजानौ, राज्ञः—प्रातिपदिकात् राजन् शब्दात् कर्मबोधके द्वितियायाः बहुवचने शस् राजन्+अस् 'अल्लोपोऽनः' अकारस्य लोपे नकारस्य श्चुत्वेन ञ कृते जञोः स्थाने 'ज्ञ' कृते रुत्वेवि० राज्ञः । प्रातिपदिकात् राजन्शब्दात् 'भ्याम्' विभक्तिः, स्वादिषु इति पदसंज्ञायां प्रातिपदिकान्तनकारलोपे ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

२ नलोपः सुप्-स्वर-संज्ञा-तुग्विधिषु कृति ८ । २ । २ । सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धः । नान्यत्र राजाश्व इत्यादौ । इत्यसिद्धादात्वमेत्वमैस्त्वं च न । राजभ्याम् । राजभिः । राजभ्यः । राजभ्यः । राजनि, राज्ञि । राजसु । यज्वा । यज्वानौ । यज्वानः ।

३ न संयोगाद् वमन्तात् ६ । ४ । १३७ । वमन्तसंयोगादनोऽकारस्य लोपो न । यज्वनः । यज्वना । यज्वभ्याम् । ब्रह्मणः । ब्रह्मणा । ४ इन्-हन्-पूषार्यम्णां शौ ६ । ४ । १२ । एषां शावेवोपधाया दीर्घो नान्यत्र । इति

---

राजभ्याम् + अत्र सुपि च इतिदीर्घे प्राप्ते ।

( २ ) सुप्विधि में, स्वरविधि, संज्ञाविधि, कृदन्त में तुक्विधि के विषय में नलोप असिद्ध हो । दीर्घ सुप्विधि है । अतः नकार असिद्ध होने से दीर्घ नहीं हुआ । नान्यत्र = अन्यस्थल में नकार असिद्ध नहीं होता । यद्यपि पूर्वत्रा सिद्धं से नलोप असिद्ध हो जाता तथापि यह सूत्र करने का प्रयोजन यह है कि ( पूर्वेण सिद्धे सति आरभ्यमाणोविधिः नियमाय कल्पते ) यदि किसी पूर्व सूत्र से कार्य सिद्ध होता हो उसी कार्य के लिए दूसरा सूत्र व्यर्थ होकर नियम बनाता है। कि नलोपो यदि असिद्धो भवेत् तर्हि सुपिस्वरसंज्ञा कृतितुग्-विधिषु एव नलोपो असिद्धः । अन्यस्थले असिद्धो न भवति । ( यथा राज्ञः अश्वो राजाश्वः । राजन् + अश्व नकारलोपे सति अकः सवर्णे दीर्घो भवति । तत्र नकारलोपोऽसिद्धो न भवति । यह दीर्घ सुप्आदि परे रहते कोई विधान नहीं करता । इत्यसिद्धत्वात् = इस सूत्र से नलोप के असिद्ध होने से 'सुपिच' से आत्व । बहुवचने झल्येत् । अतो भिस्ऐस् नहीं होते । यह सुप्निमित्तकदीर्घं में नलोप असिद्ध करता है । राजभ्याम्, राजभिः । राज्ञे, राजभ्याम्, राजभ्यः राज्ञः राज्ञोः राज्ञाम् । राज्ञि-राजन् + ङि । विभाषाङिश्योः" इति विकल्पेन अकारलोपे श्चुत्वे जञोर्ज्ञः । राज्ञि अभावपक्षे राजनि । यज्वा ( विधिना इष्टवान् ) विधिपूर्वक यज्ञकर चुका यजमान । इत्यर्थेन अर्थवान्-यज्वन्शब्दात् प्रातिपदिकार्थे सु नान्त उपधायाः दीर्घे सुलोपनलोपौ । यज्वानौ यज्वानः । राजन्शब्दवत् सर्वं रूपं ज्ञेयम् । केवलम् 'अनः' अकारस्य लोपो न भवति । यतोहि—

( ३ ) वमन्तसंयोगात् = 'व' या 'म' अन्त में हो तथा संयुक्त हो उससे परे अन के अकारका लोप न हो । अतः यज्वनः । यज्वना । यज्वने आदि । रूप बनते हैं । यह 'व' अन्तका उदाहरण था । म अन्त का उदाहरण सृष्टिकर्ता अर्थ में प्रसिद्ध ब्रह्मन् शब्द को भी यज्वन् की तरह जाने । ब्रह्मा ब्रह्माणौ ब्रह्माणः । ब्रह्माणं ब्रह्माणौ ब्रह्मणः । शसिविभक्तौ प्राप्तस्य अनः अकारलोपस्य निषेध इति

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

निषेधे प्राप्ते। २८५ सौ ६।४।१३। इन्नादीनामुपधाया दीर्घोऽसम्बुद्धौ सौ। वृत्रहा। हे वृत्रहन्!। ६ एकाजुत्तरपदे णः ८।४।१२। एकाजुत्तर-पदं तस्मिन् समासे पूर्वपदस्थान्निमित्तात् परस्य प्रातिपदिकान्त-नुम्-विभक्तिस्थस्य नस्य णः। वृत्रहणौ। ७ हो हन्तेर्ञ्णिन्नेषु ७।३।५४। ञिति णिति प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वम्। वृत्रघ्नः। इत्यादि।

---

विशेषः। ब्रह्मणा ब्रह्मभ्याम् ब्रह्मभि.। ब्रह्मणे ब्रह्मभ्यां ब्रह्मभ्यः। ब्रह्मणि। वृत्रं=(वृत्रासुरं) हतवान्, इति वृत्रहा, (इन्द्रः) वासवो वृत्रहा वृषा, इत्यमरः। प्रातिपदिकात् वृत्रहन् शब्दात् वृत्रकर्मकहननकर्ता अर्थे एकवचने सु सर्वनामस्थाने चासम्बुद्धौ" इति नान्त उपधायाः दीर्घे प्राप्ते, तं बाधित्वा। (४) इन्=इन् प्रत्ययान्तशब्द, दण्डिन्, हन् अन्तमें हो यथा वृत्रहन्, पूषन् (सूर्यः अर्यमन् शब्दोंके उपधाको दीर्घ हो। तो 'शी' परे ही हो। अन्यत्र दीर्घ न हो, इतिदीर्घस्य निषेधेप्राप्ते। क्योंकि यहाँ सु-परे हैं 'शि' परे नहीं हैं। (२८५) इन्नादीनां=इन् हन्, पूषन् अर्यमन्, शब्दके उपधा=अन्त्य अल्के पूर्ववर्णको दीर्घ हो तो सम्बुद्धि भिन्न सुपरे। इतिदीर्घे सुलोपनसुलोपौ वृत्रहा। यद्यपि 'शि' को सर्वनामसंज्ञा कर ' 'सर्वनामस्थानेसे' उपधादीर्घ सिद्ध है। अतः सूत्रमें नियम कियाकि, शि के अतिरिक्त स्थलमें कहीं भी दीर्घ न हो। इसलिए वृत्रहणौ वृत्रहणः इत्यादौ न दीर्घः। हे वृत्रहन्। यहाँ सम्बुद्धि सु है। अतः दीर्घ नहीं हुआ। न लोप भी प्राप्त है उसका निषेध नङिसम्बुद्धयोः से। वृत्रहन्+औ इतिदशायाम् प्रथमायाः द्विवचने औ उपधायाः दीर्घनिषेधे। णत्व विधायकं सूत्रम्।

(६) जिससमासमें एक अच्वाला उत्तरपद हो उससमामें पूर्वपदस्थात्=पूर्वपदमें स्थिति णत्वका निमित्त रेफ या षकार उससे परे प्रातिपदिकके अन्तका नकार हो या नुम् का या विभक्ति का नकार हो। उसे 'ण' हो। प्रसङ्ग में एकाच् उत्तरपद 'हन्' है उसके साथ समासमें पूर्वपद 'वृत्र' में 'र' णत्वका निमित्त रूप है। अतः प्रातिपदिकवृत्रहन् के अन्त्य नकारको ण हुआ। वृत्रहणौ। (श्रीपाणिमें नुम्के नकारको णत्व, श्रीपेणका ण विभक्तिस्थ नकारस्थानक है) वृत्रहणं, वृत्रहणौ, वृत्रघ्नः। (वृत्रासुरवधकर्तॄन्।) अर्थवतः प्रातिपदिकसंज्ञक वृत्रहन् शब्दात् द्वितीयाबहुवचने शस्विभक्तिः। अनुबन्धलोपे अनः अकारस्य लोपे (७) हन्ते=हन् धातुके ह=हकार के स्थान में कुत्व=कवर्ग हो ञित् प्रत्ययपरे हो, या नकारपरे हो। इससे हस्थाने क, ख, ग, घ, ङ एते प्राप्ताः। परन्तु नाद, अघोष तथा महाप्राणप्रयत्न के संशोधनसे 'घ' ही हुआ। रुत्व विसर्गो। वृत्रघ्नः। वृत्रघ्ना, वृत्रहभ्याम् वृत्रहभिः। वृत्रघ्ने, वृत्रहभ्याम् वृत्रहभ्यः। वृत्रघ्नः वृत्रघ्नोः वृत्रघ्नां वृत्रहसु। एवं=वृत्रहन् शब्दकी तरह शार्ङ्गिन् (विष्णुः) यशस्विन्

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एवं शार्ङ्गिन्, यशस्विन्, अर्यमन्, पूषन् । ८ मघवा बहुलम् ६ । ४ । १२८ । मघवन्शब्दस्य वा तृ इत्यन्तादेशः । ऋ इत् । ९ उगिदचां सर्वनामस्थानेऽधातोः ७ । १ । ७० । अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम् स्यात् सर्वनामस्थाने परे । मघवान् । मघवन्तौ । मघवन्तः । हे मघवन् ! । मघवद्भ्याम् । तृत्वाभावे—मघवा । सुटि राजवत् ।

२९० श्व-युव-मघोनामतद्धिते ६ । ४ । १३३ । अन्नन्तानां भानामेषा-

---

अर्यमन् पूषन्, आदि शब्दोंके भी रुपबनेंगे । यशस्वी यशस्विनौ यशस्विनः । शार्ङ्गी शार्ङ्गिणौ शार्ङ्गिणः इत्यादि ।

( ८ ) मघवन् शब्दके अन्त्य अल्के स्थानमें तृ आदेश बहुलं—विकल्प से हो ऋ इत् । तृमें ऋके रहनेसे वह अनेकाल् नहीं होता । क्योंकि नानुबन्धकृतमनेकालत्वम् । अनुबन्धको लेकर अनेकाल होनेका नियम नहीं है । ( ९ ) उक्—उ ऋ ऌ इत् येषान्ते उगितः । ते च अच्च उगिदचः धातुसे भिन्न उगित तथा च नलोपिनो=नकारका लोप हुआ हो जिसके ऐसे अञ्च धातुको नुम् हो । सर्वनामस्थानसंज्ञकविभक्तिपरे । महः धनं, तेजः, ऐश्वर्यं वा अस्ति अस्य इति मघवान् धन, तेज शक्तिसे परिपूर्ण मघवन्-शब्दस्य प्रतिपदिकसंज्ञायां 'सु' विभक्तिः । 'मघवाबहुलम्' सूत्रेण अन्त नकारस्य तृ आदेशे । ऋकार-इत् । उगित् होनेसे 'उगिद्चाम्, सूत्रेण 'नुम्' अनुबन्धलोपे सकारस्थ अपृक्तसंज्ञा हल्ङ्यादिलोपे । ततः संयोगसंज्ञा अन्त्य तकारलोपे । नान्तस्य उपधायः दीर्घे मघवा । मघवन्तौ, मघवन्तः । मघवन्तं मघवन्तौ, मघवतः मघवता, मघवद्भ्यां मघवद्भिः । मघवतः, मघवतोः मघवताम् मघवति । मघवत्सु । बहुलग्रहणात् तृत्वाभावे='तृ' अन्तादेशस्य अभावे । पक्षे मघवन्+सु नान्त-उपधायाः दीर्घे सुलोपनलोपौ । मघवा मघवानौ मघवानः । सुटि् सु औ जस्, अम्, औ, विभक्तियों में राजाकी तरह ।

( २९० ) श्वन् ( कुत्ता ) युवन् ( युवा ) मघवन्=( इन्द्रः ) इन शब्दों के अन्तमें अन् हो, ऐसे भानाम्=भसंज्ञक अङ्ग को सम्प्रसारण ( वके स्थान में उ ), हो, अतद्धिते=तद्धितभिन्न प्रत्ययपरे । ( इन्द्र कुत्ता तथा युवकको साथ में जोड़नेका उद्येश्य लोभ, पदलोलुपता है ) इस सम्बन्धमें एक रोचक 'सूक्ति प्रसिद्ध है। यथा—काचं मणिं काञ्चनमेकसूत्रे ग्रथ्नासिबाले किमिदं विचित्रम् । विचारवान् पाणिनिरेकसूत्रे श्वानं युवानं मघवानमाहुः । हे बाले शीशामणि सोनाको एकसूत्रमें क्यों गुंथ रही हो । वह बोली, विवेकी पाणिनिने तीनोंको जैसे गुंथा है । मघोनः-प्रातिपदिकात् मघवन् शब्दात् द्वितीयाबहुबचने शस् । भसंज्ञायां मघवन्+अस् श्वयुव सूत्रेण वस्थाने उ-सम्प्रसारणे सम्प्रसारणाच्चेति पूर्वरूपे गुणे रुत्वे विसर्गे रूपम् । मघोना मघवभ्याम् मघवभिः । मघोने मघवभ्याम् मघवभ्यः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मतद्धिते संप्रसारणम्। मघोनः मघोना मघवभ्याम्। एवं श्वन्, युवन्। १ न संप्रसारणे संप्रसारणम्। ६। १। ३७। संप्रसारणे परतः पूर्वस्य यणः संप्रसारणे न स्यात्। इति यकारस्य नेत्वम्। अत एव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम्। यूनः। यूना। युवभ्याम्। इत्यादि। अर्वा। हे अर्वन्!। २ अर्वणस्त्रसावनञः ६। ४। १२७। नञा रहितस्यार्वन्नित्यस्याऽङ्गस्य तृ इत्यन्तादेशो न तु सौ। अर्वन्तौ। अर्वन्तः। अर्वद्भ्यामित्यादि। ३ पथिमथ्यृभुक्षामात् ७। १। ८५। एषामाकारोऽन्तादेशः स्यात् सौ परे। ४ इतोऽत् सर्वनामस्थाने ७। १। ८६। पथ्यादेरिकारस्याकारः सर्वनाम-

---

मघोनः मघोनोः मघोनाम्। एवं = मघवनशब्दकी तरह श्वा श्वानौ, श्वानः। श्वानम्, श्वानौः शूनः शुना शुने, इत्यादि। युवन्शब्दात् प्रतिवदिकात् द्वितीया बहुवचने शसि, युवन् + अस् श्वयुवमघोनाम् सूत्रेण वस्थाने 'उ' सम्प्रसारणं सवर्ण दीर्घे रुत्वे वि० यूनः। न च 'व' की तरह 'य' को सम्प्रसारण क्यों नहीं होता। निषेध सूत्र।

( १ ) सम्प्रसारणपरे हो तब पूर्व यण् को सम्प्रसारण नहीं होता। इस सूत्र से निषेध होनेपर य के स्थान में 'इ' सम्प्रसारण नहीं हुआ। पहले 'य' को ही सम्प्रसारण क्यों नहीं होता ? इसलिये कि न सम्प्रसारणे सूत्र व्यर्थ होगा। क्योंकि इसकी प्रवृत्ति का कोई स्थल नहीं रहेगा। वह ज्ञापन करता है कि पूर्वयण् को सम्प्रसारण नहीं होता। या अन्त्य यण् को सम्प्रसारण प्रथम हो। अतएव सूत्रं चरितार्थं भवति। यूना = टा सम्प्रसारणे सवर्णदीर्घे। यूने, युनः, यूनामित्यादि।

अर्वन् ( घोड़ा ) शब्दात्सु नान्त उपधादीर्घ सुलोपः-अर्वन् + औ। ( २ ) अर्वणः, तृ असौ। अनञः नञ्रहितस्य। अर्वा-नञ् से रहित, अङ्ग-संज्ञक अर्वन् शब्द के अन्त्य अल् न को तृ अन्त्यादेश हो। 'सु' परे न हो तो। ऋकार इत् से उगित् है। अर्वत् + अ 'उगिदचाम्' सुत्रेण नुम् = न आगमे, वर्णसम्मेलने अनुस्वारपरसवर्णे च अर्वन्तौ। ( पर्यन्यवल्लक्षण प्रवृत्तिस्थल की तरह जल में भी बादल बरसते हैं ) अर्वन्तम्, अर्वन्तौ, अर्वतः। अर्वद्भिः। अर्वते अर्वद्भ्याम् अर्वद्भ्यः। अर्वतः अर्वतोः अर्वताम्। अर्वति अर्वतोः अर्वत्सु। ( ३ ) पथि ( रास्ता ) मथिन् ( मथानी ) ऋभुक्षिन् ( इन्द्रः आखण्डलः सहस्राक्षः ऋभुक्षा इत्यमरः )। इन शब्दों को आकार अन्तादेश सु परे हो। पथिन् + सु। न स्थाने आकारे। तकार उच्चारणार्थः। ( ४ ) पथ्यादेः = पथिन्, मथिन्, ऋभुक्षिन् शब्द के इतः = इकार के स्थान में अत् = अकार हो। सर्वनामस्थाने =

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्थाने परे। २९१ थो न्थः ७। १। ८७। पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने। पन्थाः। पन्थानौ। पन्थानः। ६ भस्य टेर्लोपः ७। १। ८८। भस्य पथ्यादेष्टेर्लोपः। पथः। पथा। पथिभ्याम्। एवं मथिन् ऋभुक्षिन्।

७ ष्णान्ता षट् १। १। २४। षान्ता नान्ता च संख्या षट्संज्ञा स्यात्। पञ्चन्शब्दो नित्यं बहुवचनान्त। पञ्च। पञ्च। पञ्चभिः। पञ्चभ्यः। पञ्चभ्यः नुट्। ८ नोपधायाः ६। ४। ७। नान्तस्योपधाया दीर्घो नामि। पञ्चनाम्। पञ्चसु। ९ अष्टन आ विभक्तौ ७। २। ८४। हलादौ वा स्यात्। ३०० अष्टाभ्य औश् ७। १। २१। कृताकारादष्टनो जश्शसोरौश्। अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति। अष्टौ।

---

सु औ जस् अम् औट् परे रहते। इति इकारस्य अकारे। (२९५) पथि तथा मथिशब्दके थको न्थ आदेश हो। सर्वनामस्थानपरे। पन्थ + आ + स्। सवर्णदीर्घे रुत्वे वि० पन्थाः। अनेन प्रकारेण औपरे पन्थानौ। पन्थानः। पन्थानं, पन्थानौ, पथः। प्रातिपदिकसंज्ञकात् पथिन्शब्दात् द्वितीयाबहुवचने शसि। भसंज्ञायाम्। (६) भसंज्ञकपथ्यादि के टिका लोप हो। अचोन्त्यादिटि से 'इन्' को टिसंज्ञा तस्य पररुपे रुत्वे वि० पथः। एवं पथा पथिभ्याम् इत्यादि। पथिन् की तरह ऋभुक्षिन् को भी जाने। ऋभुक्षिन् में थोन्थः नहीं लगेगा। ऋभुक्षा ऋभुक्षाणौ। ऋभुक्षाणम् ऋभुक्षाणौ ऋभुक्षः। इत्यादि, मथा मथिभ्याम् मथिभिः। मथे मथिभ्याम् मथिभ्यः। मथः मथोः मथाम्। मथि मथोः मथिषु।

(७) ष्णान्ता = ष अन्त में या न अन्त में हो ऐसे सङ्ख्यावाची शब्द को षट्संज्ञा हो। पञ्चन् शब्द बहुत्वसङ्ख्याका वाचक होने से नित्य बहुवचन है। नान्तपञ्चन्शब्दात् जस् या शस्। ष्णान्ताःषट्संज्ञा 'षड्भ्यो परयोः जश्शसोर्लुक्' न लोपः। पञ्च। केवल 'स्वादिषु' पदसंज्ञायां नकारलोपे पञ्चभिः पञ्चभ्यः। षष्ठीवहुवचने पञ्चन् + आम् इतिदशायाम् षट्संज्ञा 'षट्चतुर्भ्यश्च' इति नुट्। अनुबन्धलोपे। पदसंज्ञा नलोपे। (८) नकारान्तशब्द को दीर्घ हो, नाम्परे। इतिदीर्घे। पञ्चानाम्।

(९) 'रायोहलि' सूत्र से हलिपद की अनुवृत्ति करके अष्टन् शब्द के अङ्ग के अन्त्य अल् को आत्व हो। हलादिविभक्तिपरे हो तो विकल्प से। विकल्प में प्रमाण 'अष्टनोदीर्घात्' सूत्र में दीर्घ ग्रहण है। (३००) कृताकारात् = कृत-किया गया है आकार जिसमें ऐसे अष्टन् शब्दसे परे जस् तथा शस् के स्थान में औश् आदेश हो। 'श' इत् का प्रयोजन शित् मानकर सर्वादेश। अनेकाल् और शित् सम्पूर्ण को आदेश हों जस् शस् विभक्ति से जकार शकार की इत् संज्ञा, लोप



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अष्टौ। अष्टाभिः। अष्टाभ्यः। अष्टाभ्यः। अष्टानाम्। अष्टासु। आत्वाभावे—अष्ट। पञ्चवत्। १ ऋत्विग्-दधृक्-स्रग्-दिगुष्णि-गञ्चु-युजि-क्रुञ्चां च ३।२।५९। एभ्यः क्विन्। अञ्चेः सुप्युपपदे। युजि क्रुञ्चोः केवलयोः। क्रुञ्चेर्नलोपाभावश्च निपात्यते। कनावितौ। २ कृदतिङ् ३।१।९३। अत्र धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात्। ३ वेरपृक्तस्य ६।१।६७। अपृक्तस्य वस्य लोपः।

४ क्विन्प्रत्ययस्य कुः ८।२।६२। क्विन् प्रत्ययो यस्मात्तस्य कवर्गोऽ-

---

होने पर हलादि न होने से, किया हुआ आकार ऐसा अष्टन् शब्द दुर्लभ है। औश् आदेश कैसे ? तब अष्टाभ्यः औश् सूत्र व्यर्थ होकर नियम बनाता है कि अष्टभ्यः इति वक्तव्ये कृतात्वनिर्देशो = सूत्र में अष्टाभ्यः न कहकर अष्टभ्यः यही कहना था, किन्तु किया हुआ आत्वनिर्देश ( उच्चारण ) ज्ञापन करता है। इस नियमसे आत्व का अनुमान स्पष्ट है। अष्टौ अष्टन् शब्दात्+जसि आत्वे सवर्णदीर्घे अस् स्थाने औशादेशे। वृद्धौ अष्टौ २। अष्टाभिः। अष्टाभ्यः। अष्टन् आविभक्तौ आत्वे दीर्घे च अष्टानाम्। एवम् अष्टन् शब्दात् आमि ष्णान्ताः षडिति षट्संज्ञायां षट्चतुर्भ्यश्चेति नुट् आगमे आत्वे। आत्वाभावे अष्ट २ अष्टभिः, अष्टानाम् अष्टसु। ये नकारान्तशब्द समाप्त हुए।

( १ ) ऋत्विग्, दधृक्, स्रग्, दिग्, उष्णिग्, अञ्च, युजि कुञ्च इन धातुओं से क्विन् प्रत्यय हो। अञ्चधातु से सुबन्तपद उपपदरहनेपर क्विन् हो। युज क्रुञ्च से बिना उपपदके क्विन् हो। क्रुञ्चशब्द के नकारलोप का अभाव भी निपातन से हो। बिना ( सूत्र निर्देश के आधार पर जो कार्य हो उसे निपातन कहते हैं। ) यहाँ नकारलोप का निषेध बिना विधायक सूत्र के होनेसे कनावितौ क्विन् प्रत्यय के 'क' का लशक्वतद्धितेसे। 'न' का हलन्त्यम् से। ( २ ) कृत् यहाँ धातु के अधिकार में अतिङः = तिङ्भिन्नप्रत्यय कृत्संज्ञक हो। जिसका फल कृदन्त मानकर प्रातिपदिकसंज्ञा होना है। ( ३ ) ककार इकार की इत् संज्ञा, केवल 'व' शेष रहता है। वह एक अल् रुप प्रत्यय होने से अपृक्तसंज्ञक है। ऐसे अपृक्त व् का लोप 'वेरपृक्तस्य' से हुआ। क्विन् प्रत्यय का सर्वापहार लोप समझे। क्विन् विट् आदि की तरह। ( ४ ) क्विन् प्रत्यय जिससे हुआ हो ऐसे धातु के अन्त्य अल् के स्थान में कवर्ग अन्त्यादेश हो, पदान्त में। अस्यासिद्धत्वात् क्विन् प्रत्ययस्य कुः सूत्र के असिद्ध होने से 'चोः कुः' से कुत्व हुआ। दोनों कुत्व में यह अन्तर है कि 'चोः कुः' केवल चवर्ग को ही कवर्ग करता है। दूसरा क्विन्परे सभी के स्थान में कुत्व करता है। ऋतुषु यजते इति ऋत्विक् ऋतु के अनकूल यज्ञ करनेवाला। ऋत्विज् शब्दात् 'ऋत्विग् दधृक् आदि

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

न्तादेशः पदान्ते । अस्यासिद्धत्वाच्चोः कुरिति कुत्वम् । ऋत्विक्, ऋत्विग् । ऋत्विजौ । ऋत्विग्भ्याम् । ३०५ युजेरसमासे ७ । १ । ७१ । युजेः सर्वनामस्थाने नुम् स्यादसमासे । सुलोपः, संयोगान्तलोपः, कुत्वेन नस्य ङ । युङ् । अनुस्वारपरसवर्णौ । युञ्जौ । युञ्जः । युग्भ्याम् । ६ चोः कुः ८ । २ । ३० । चवर्गस्य कवर्गः स्याज्झलि पदान्ते च । सुयुक्, सुयुग् । सुयुजौ । सुयुग्भ्याम् ।

---

सूत्रेण क्विन् । 'क, न, इ' लोपे वेरपृक्तस्य वलोप । कृदतिङ् कृत्संज्ञा । ततः प्रातिपदिकसंज्ञा सुविभक्तिः सुलोपे । पदान्ते 'क्विन् प्रत्यय' इति कुत्वे प्राप्ते तस्य त्रिपादित्वेन असिद्धत्वात् 'चोः कुः' कुत्वे 'वावसाने' चर्त्वे ऋत्विग्, ऋत्विजौ, ऋत्विजः, ऋत्विग्भ्याम् । अत्र स्वादिषु पदसंज्ञा, ततः कुत्वम् । ऋत्विक्षु ।

( ३०५ ) युजेः=( युजिर् योगे ) जोड़ने अर्थ में प्रसिद्ध युज्धातु को नुम् हो । सर्वनामस्थानसंज्ञक विभक्तिपरे ; असमासे=समास नहुआ हो तो । दो हल्वर्ण को संयोगसंज्ञा कही गयी है । उसके अन्त का लोप, संयोगान्त लोप है । कुत्व होकर न' को 'ङ' हुआ । युनक्ति आत्मानं परमात्मनि जो आत्मा को परमात्मा में जोड़ दे, उसे युङ् ( योगी ) कहते हैं । या किसी समाज या वस्तु के मेल कराने वाला युङ् है । युज् धातु से "ऋत्विग् 'दधृक्' सूत्र से क्विन्, तस्य सर्वापहारिलोपे प्रातिपदिकसंज्ञायाम् । प्रथमायाः एकवचने सु=सर्वनामस्थानसंज्ञा, 'युजेरसमासे' इति नुमि अनुबन्धलोपे, मित्वात् अचांमध्ये अन्त्यअच् ( व्यवहारभावेन ) युज् का उकारः ; तस्मात्=उससे परे उसीका अवयव नुम् । युनज्+स् अपृक्तसंज्ञा, सकारस्य हल्ङ्यादिलोपः । जकारस्य संयोगान्तलोपे 'क्विन्प्रत्ययस्य कुः' इति कुत्वे नकारस्य ङकारे युङ् । अत्र नलोपो न भवति, संयोगान्तलोपस्य असिद्धत्वात् । युञ्जौ—युज् धातोः क्विन्, सर्वापहारि लोपः प्रा० सर्वनामस्थानसंज्ञायाम् औ विभक्तिः । नुमि । नश्चापदान्तस्य' इत्यनुस्वारे । अनुस्वारस्य परसवर्णे युञ्जौ अत्र श्चुत्वम् न भवति । अनुस्वारे कर्तव्ये श्चुत्वस्य असिद्धत्वात् युञ्जः । हे युङ् । युञ्जम् युञ्जौ युजः । युजा युग्भ्यां युग्भिः । 'चोः कुः' इतिकुत्वम् । युजे युग्भ्याम् युग्भ्यः । युजः, युजोः, युजाम् । युजि, युजोः, युक्षु ।

( ६ ) चोः—चवर्गस्थान में कु—कवर्ग हो, झलिपरे, पदान्तविषय में सुष्ठु युनक्ति संयोजयति । जो ठीक से जोड़े वह सुयुक् हैं । प्रातिपदिकात् सुयुज्शब्दात् सुविभक्तिः अनुबन्धलोपे अपृक्तसंज्ञा, हल्ङ्यादिलोपे समास होने से युजेरसमासे नुम् इति न भवति । पदान्त 'ज' को ( चोः कुः ) इति 'ग' कृते अवसाने विकल्पेन चर्त्वे । सुयुक्, सुयुग्, सुयुजौ सुयुजः । सुयुजि सुयुजोः सुयुक्षु । पङ्गू ( लङ्ड़ा ) अर्थ में प्रसिद्ध खञ्ज्शब्दात् सु विभक्तिः । सुलोपे च जस्य संयोगान्तलोपे सति । जकारो न तिष्ठति । कारणस्य अभावे कार्यस्य अभावात् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

खन् । खञ्जौ । खन्भ्याम् । ७ व्रश्च-भ्रस्ज-सृज-मृज-यज-राज-भ्राज-च्छशां षः ८ । २ । ३६ । झलि पदान्ते च । जश्त्व-चर्त्वे । राट्, राड् । राजौ । राजः । राड्भ्याम् । एवं विभ्राट् । देवेट् । विश्वसृट् (परौ व्रजेः षः पदान्ते) परावुपपदे व्रजेः क्विप् स्यात् दीर्घश्च, पदान्ते षत्वमपि । परिव्राट् । परिव्राजौ ।

८ विश्वस्य वसुराटोः ६ । ३ । १२८ । विश्वशब्दस्य दीर्घोऽन्तादेशः

---

खन्, खञ्जौ, खञ्जः । खञ्जा, । खन्भ्याम्, खन्भिः । खञ्जः, खञ्जोः, खञ्जाम् । खञ्जि, खञ्जोः खन्सु, अत्र 'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञा ततः संयोगान्तलोप ।

( ७ ) व्रश्च् = छेदने ( काटना ) भ्रश्ज् = पाके ( भूंजना ) सृज् = सृष्टि करना । मृज् - शुद्धि । यज् ( सङ्गति पूजा दान ) राज् = ( प्रकाशार्थक ) ( भ्राज् = दीप्त्यर्थकः इन् धातुओं के अन्त्यअल् छान्त और शान्त धातु का अन्त्यअल् कोभी षकार अन्त आदेश हो । झल् प्रत्याहार परे या पदान्त में । जश्त्व तथा चर्त्व होने पर राट् राड्, राजते, शोभते क्विपः सर्वापहारिलोपे इति कृदन्त-प्रातिपदिकसंज्ञकात् राज् शब्दात् सु = स् अपृक्तसंज्ञा हल्ङ्यादिलोपे, व्रश्चभ्रश्च इति जस्थाने षकृते राष्, तस्य झलां जश् इते मूर्धास्थानसादृश्येन डकारः विकल्पेन चर्त्वे टकारे कृते राट् राड् । अजादि विभक्तौ केवलं वर्णसम्मेलनम् । राजौ, राजः । राजा राड्भ्याम्, राड्भिः । राजे, राड्भ्याम्, राड्भ्यः । राजः राजोः राट्त्सु राट्सु । एवम् = राज शब्द की तरह विशेषेण भ्राजते ( प्रकाशते, शोभतेवा ) विभ्राट् ( सूर्यः ) देवान् यजति देवयाजकः । देवेट् क्विप् । देवपूर्वक यज् शब्दात् वचिस्वपियजादीनांकित् सम्प्रसारणे देवइज स्थितिः कर्मणिषष्ठी उपपद मतिङ् समासे गुणे । सलोपे देवेट् । षत्व जत्व चर्त्व । सृट् ब्रह्मा । संसार का स्रष्टा विश्वं सृजति विश्वसृट् परमात्मा ।

( वा० ) परि उपसर्गक व्रज् धातु से क्विप् । उपधा के अकार को दीर्घ । पदान्त में षत्व अन्तादेश भी हो । सर्वपरित्यज्य परिव्रजति ( सर्वत्र विचरति ) परिव्राट्, विरक्त, सन्यासी, परिपूर्वक् व्रज् धातु से वार्तिक द्वारा क्विप् सर्वापहारि लोपे कृदन्तत्वात् प्रातिपदिकसंज्ञा सु इत्यादि । दीर्घे, षत्वे, जश्त्वे, चर्त्वे ।

( ८ ) विश्व शब्द के दीर्घ अन्तादेश हो । वसु शब्द या राट्शब्द परे । विश्वावसुः विश्वानि सम्पूर्णानि वसूनि धनानि यस्य सः ( विश्व है सबधन ( जिसके ) विश्वस्मिन् राजते ( संसारं व्याप्य तिष्ठति ) इति विश्वाराट् ब्रह्म, परमात्मा । विश्वराज् + सु, सुलोपे व्रश्चेति जस्थाने षः 'विश्वस्य वसु

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्याद्धसौ राट्शब्दे च परे। विश्वाराट्, विश्वाराड्। विश्वराजौ। विश्वाराड्भ्याम्। ९ स्कोः संयोगाद्योरन्ते च। ८। २। २९। पदान्ते झलि च यः संयोगस्तदाद्योः स्कोर्लोपः। भृट्। सस्य श्चुत्वेन शः। 'झलां-जश् झशि' इति शस्य जः। भृज्जौ। भृड्भ्याम्। त्यदाद्यत्वम् पररूपत्वम्। ३१० तदोः सः सावनन्त्ययोः ७। २। १०६। त्यदादीनां तकार-दकारयोरनन्त्ययोः सः स्यात् सौ। स्यः। त्यौ। त्ये। सः। तौ। ते। यः। यौ। ये। एषः। एतौ। एते। एतम्। अन्वादेशे—एनम्। एनौ। एनान्। एनेन। एनयोः।

---

राटोः' इति दीर्घे षकारस्य जस्त्वे चर्त्वे। अजादि विभक्ति परे न दीर्घः। विश्वराजौ विश्वराजः। विश्वाराड्भ्याम्। विश्वराजि विश्वराजोः विश्वराजाम्। विश्वाराट्सु, विश्वा राटत्सु।

(९) स्कोः=सकार और ककारका संयोगाद्योः=संयोगसंज्ञक आदि में हो, तब लोप हो, पदान्त में झलिपरे। भृज्जति पाकं करोति इति भृट्—भड़भूजा। भ्रस्ज्—सु इति दशायाम् अपृक्त-सकारस्य हल्ङ्यादि लोपे संयोगान्त पदस्य अन्त्यजकारस्य लोपे प्राप्ते, तं बाधित्वा स्कोरिति संयोगादिसकारस्य लोपे। व्रश्चेति षत्वे, जश्त्वे, चर्त्वे ग्रहिज्येतिसम्प्रसारणे भृड्। भ्रस्ज+औ इति दशायां ग्रहिज्येति सम्प्रसारणे सकारस्य स्थाने श्चुत्वेन शः, तस्य स्थाने जश्त्वेन जकारे (तालु स्थानदर्शनेन) भृज्जौ, भृज्जः। भृज्जम्, भृज्जौ, भृज्जः। भृज्जे, भृड्भ्याम्। भृज्जः भृज्जोः, भृज्जाम्, इत्यादि। त्यद्यत्वम्, पररुपत्वम् त्यदादीनामः सूत्र से अकार। अतोगुणे से पररूप।

(३१०) तदोः=तकारदकारयोः अनन्त्योः आदिमध्य के 'त, द' के स्थान में 'स' हो, सुपरे। त्यद्, तद्, यद्, एतद् ये त्यदादि हैं। इनके त या द को स होता है। यथा—तद्+सु। त्यदादीनामः से दस्थाने अत्वेकृते, 'अतो गुणे' पररुपे, तद्तकारस्य 'तदोः सः' सूत्रेण सकारे, रु० वि० सः। तद्+औ अत्वे, वृद्धौच। तौ। ते। तद्+जस् तस्य शी आदेशे अत्वे गुणे। तम् तौ तान्। तेन, ताभ्याम् तैः। तस्मै, ताभ्याम्, तेभ्यः। तस्मात् ताभ्यां, तेभ्यः। तस्य तयोः तेषाम्। तस्मिन् तयोः तेषु। त्यदादि के सम्बोधन नहीं होते। एतद् शब्द से सु विभक्ति परे अत्वे पररूपे च। अनन्त्य तकारस्य स्थाने स (स) को रु० वि०। एषः, एतौ एते इत्यादि। यत्र अन्वादेशः। तत्र द्वितीया विभक्तिः। टा ओस् परे एन आदेशो भवति। एनं एनौ एनान्, एनेन एनयोः :

युष्मद् (तुम) अस्मद् (मैं) शब्द की सभी प्रयोगों की सिद्धि करते हैं।

इसमें सर्वनामसंज्ञा का फल प्रायः नहीं है। अन्य कार्य स्पष्ट दिये जाते हैं। केवल अकच् ही सर्ववामसंज्ञा का फल है। इनके तीनों लिङ्गों में समान

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

१ ङेप्रथमयोरम् ७ । १ । २८ । युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः । २ त्वाहौ सौ ७ । २ । ९४ । अनयोर्मपर्यन्तस्य त्वाहौ आदेशौ स्तः ।

३ शेषे लोपः ७ । २ । ९० । एतयोष्टिलोपः । त्वम् । अहम् । ४ युवावौ द्विवचने ७ । २ । ९२ । द्वयोरुक्तावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ । ३१५ प्रथमायाश्च द्विवचने भाषायाम् ७ । २ । ८८ । औङि एतयोरात्वं लोके । युवाम् । आवाम् । ६ यूय-वयौ जसि ७ । २ । ९३ । अनयोर्म-

---

रूप होता है । युष्मदष्मदादेशाः त्रिषु लिङ्गेषुसरूपाः । ( १ ) ङे-युष्मद् अस्मद् से परे ङे के स्थान में तथा प्रथमयोः=प्रथमा ( सु औ जस् ) । द्वितीया ( अम् औट् शस् ) के स्थान में अम् आदेश हो । प्रातिपदिकसंज्ञक युष्मद् शब्दात् सु एवम् अस्मद् + सु ङे प्रथमयोरम् इति सु स्थाने अम् आदेशे ।

(२) अनयो=युष्मद् तथा अस्मद् शब्द के मपर्न्यतस्य=युष्म तथा अस्म भाग को क्रम से 'त्व' तथा 'अह' आदेश सुपरे हो । इत्यनेन युष्मभागस्य 'त्व' आदेशे 'स्म' भागस्य अह आदेशे । त्व अद् + अम्, अह अद् + अम् इतिदशायां=अतोगुणे पररूपे ( ३ ) एतयोः = युष्मद् अस्मद् के शेषे=अवशिष्ट भाग त्व तथा अह आदेश से परे बचा हुआ अद् को टि मानकर शेषे लोप हुआ । यह टिलोप आत्व यत्व आदि स्थल में नहीं होगा । तीनों लिङ्गों में प्रयोग समान है । यथा—त्वं पुमान् त्वं स्त्री, त्वं दैवतम् अहं पुमान् अहं स्त्री अहं दैवतम् ।

( ४ ) द्विवचने = युष्मद् अस्मद् शब्द ( यदा ) द्विवचन को कहें, या द्वित्व-सङ्ख्याविशिष्ठ अर्थ हो ( तदा ) द्वयोः = द्विवचनस्य उक्तौ = कथने अनयोः = युष्मदस्मदोः मपर्यन्तस्य = युष्म के स्थान में 'युव' अस्म के स्थान में 'आव' आदेश हों, विभक्तिपरे । सर्वत्रद्विवचने एतौ आदेशौ भवतः । औ, भ्यामि, ओसि विभक्तिषु, युव-आवौ भवतः । ( ३१५ ) प्रथमाविभक्ति के द्विवचन औङि = औपरे रहते, एतयोः = युष्मद् अस्मद् शब्द के अन्त्यवर्ण को आत्वम् = आकार हो । भाषायां=संस्कृत भाषा के लोकव्यवहार में । युवाम्—आवाम् युष्मद् + औ, अस्मद् + औ इति दशायाम् द्विवचने युष्मभागस्य 'युव' आदेशे 'अस्म' भागस्य 'आव' आदेशे । ङेप्रथमयोः इति औकारस्य अम् आदेशे । 'प्रथमायाश्च' द्विवचने अन्त्यदकारस्य आत्वे दीर्घेच आत्वनिमित्ते सति न टिलोपः । प्रथमायाः बहुवचने जसि । युष्मद् + अस् अस्मद् + अस् । ( ६ ) अनयोः=इनके मपर्यन्तभाग युष्म के स्थान में 'यूय' तथा अस्म के स्थान में 'वय' आदेशे कृते । अतोगुणे पररुपे "ङे प्रथमयोः' अम् आदेशे । 'शेषे टिलोपः। यूयम् वयम् ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पन्तस्य। यूयम्। वयम्। ७ त्वमावेकवचने ७।२।९७। एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ। ८ द्वितीयायां च ७।२।८७। अनयोरात् स्यात्। त्वाम्। माम्। ९ शसो नः ७।१।२९। आभ्यां शसो न स्यादमोऽपवादः (७२) आदेः परस्य। (२०) संयोगान्तलोपः। युष्मान्। अस्मान्। ३२० योऽचि ७।२।८९। अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः। त्वया। मया। १ युष्मदस्मदोरनादेशे ७।२।८६। अनयोरात् स्यादनादेशे हलादौ विभक्तौ। युवाभ्याम्। आवाभ्याम्। युष्माभिः। अस्माभिः। २ तुभ्य-मह्यौ ङयि ७।२।९५। अनयोर्मपयन्तस्य। टिलोपः। तुभ्यम्। मह्यम्—

३ भ्यसोऽभ्यम् ७।१।३०। आभ्यां परस्य। युष्मभ्यम् अस्मभ्यम्।

---

प्रातिपदिकसंज्ञकयुष्मद्शब्दात् द्वितीयैकवचने अम् युष्मद्+अम्। अस्मद्+अम् इतिदशायाम्। (७) एकवचने = एकसंख्या के उक्तौ = कहने पर अनयोः = युष्मद् अस्मद्शब्दयोः मपर्यन्तस्य = युष्मस्थाने 'त्व' अस्मस्थाने 'म' (त्वमौ) आदेशौ भवतः विभक्तिपरे। ततः टिलोपे प्राप्ते, तं बाधित्वा। (८) द्वितीयायां (अम् औट् शस्) विभक्तिपरे अनयोः = युष्मद् अस्मद् शब्द को आत् = आकारअन्तादेश हो। सवर्णदीर्घे। त्वाम् माम्। (९) शसो नः आभ्याम् = युष्मद् अस्मद् शब्द से परे शस्विभक्ति के स्थान में नकार आदेश हो। 'ङे प्रथमयोरम्' से प्राप्त अम् आदेश को बाधकर। यह सूत्र परके स्थान में नकार विधान किया। 'अत आदेः' परस्य = पर (शस्) के स्थान में विधान किया गया कार्य परके आदि के स्थान में हो।

(३२०) अनादेशे = यदि कोई आदेश न हुआ। ऐसे अचि = अजादि विभक्ति परे। तृतीयैकवचने युष्मद्+आ, अस्मद्+आ, इत्यवस्थायां 'त्वमावेकवचने' इति त्व-'म' आदेशे 'अतोगुणे' पररुपे 'योऽचि' यकारादेशे त्वया मया। (१) युष्मद् अस्मदोः = युष्मद् और अस्मद् शब्द के अङ्ग के अन्त्यअल् के स्थान में आत्व हो। अनादेश = जिसको कोई आदेश न हुआ। ऐसी हलादिविभक्तिपरे तृतीयाद्विवचने भ्यामि (द्विवचने) मपर्यन्तभागस्य 'युव आव' आदेशे पररुपे, युष्मद् अस्मदोः इति आत्वे सवर्णदीर्घे युवाभ्याम्। एवं बहुवचनेभिस्, हलादिविभक्तिपरे युस्मद्—अस्मदोः आत्वे सवर्णदीर्घे रु० वि०। युष्माभिः। चतुर्थीविभक्तौ एकवचने। युस्मद्+ङे, अस्मद्+ङे। ङेप्रथमयोः, अम्आदेशे। (२) युष्म के स्थान में तुभ्य, अस्म को मह्यआदेश। टिलोपे तुभ्यं मह्यम्। (३) आभ्याम् = युष्मद्, अस्मद्से परे भ्यस् को अभ्यम् आदेशे अतोगुणे पररुपे। 'शेषे लोप' इति टिलोपे (अत्रमकारस्य लोपो न भवति। (न विभक्तौ) इति

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

४ एकवचनस्य च ७।१।३२। आभ्यां ङसेरत्। त्वत्। मत्। ३२५ पञ्चम्या अत् ७।१।३१। आभ्यां पञ्चम्या भ्यसोऽत् स्यात्। युष्मत्। अस्मत्। ६ तव-ममौ ङसि ७।२।९६। अनयोर्मपर्यन्तस्य तव-ममौ स्तो ङसि। ७ युष्मदस्मद्भ्यां ङसोऽश् ७।२।९७। तव। मम। युवयोः। आवयोः। ८ साम आकम् ७।१।३३। आभ्यां परस्य साम आकं स्यात्। युष्माकम्। अस्माकम्। त्वयि। मयि। युवयोः। आवयोः। युष्मासु।

---

निषेधात्। (४) युष्मद् अस्मद शब्द से परे पञ्चमी के एकवचनङस्-विभक्ति को 'अत्' आदेश हो। त्वत्, मत्। पञ्चम्यैकवचने युष्मद्+ङसि अस्मद्+ङसि इति दशायाम् एकवचने मपर्यन्तस्य 'त्व' 'म' आदेशे। अतोगुणे पररुपे 'एकवचनस्य च' ङसिस्थाने अत् आदेशे, टिलोपे, अत्र योऽचि इति न, यकार-आदेशः, अनादेशाभावात्। त्वत्, मत्। (३२५) युष्मद् अस्मद्शब्द से परे पञ्चमी के भ्यस् विभक्ति के स्थान में अत् आदेश हो। युष्मत् अस्मत्। पञ्चमीबहुवचने युष्मत्+भ्यस् अस्मद्+भ्यस्। अत्र पञ्चम्याः अत्। टिलोपे, अत्र अनादेशविभक्तिर्नास्ति, अतो न यत्वम्।

(६) युष्मद् तथा अस्मद् इन दोनों के मपर्यन्त युष्म के स्थान में 'तव' अस्म के स्थान में 'मम' आदेश हो। ङस् विभक्ति परे। (७) युष्मद् अस्मद् शब्द से परे ङस् विभक्ति के स्थान में अश् आदेश हो। तव। मम। षष्ठयाः एकवचने ङस्विभक्तौ, युष्मभागस्य 'तव' आदेशे अस्मभागस्य च 'मम' आदेशे कृते सति, युष्मदस्मद्भ्याम् ङस्स्थाने अश्-अ कृते टिलोपे। षष्ठी-द्विवचने ओस् विभक्तिपरे युवावौ द्विवचने सुत्रेण 'युव' 'आव' आदेशेअतोगुणे पररुपे, अनादेशविभक्ति परे 'योऽचि' इति यकारादेशे रुत्वे विसर्गे युवयोः आवयोः। (८) आभ्यां परस्य = युष्मद् अस्मद् शब्द से परे साम के स्थान में आकम् आदेश हो। यद्यपि षष्ठी बहुवचने आम् विभक्ति के आने पर युष्मद् = आम् अस्मद्+आम् में सुट्सहित आम् न होने से आकम् कैसे? सामपढना व्यर्थ है। वही सुट्सहित सामशब्द व्यर्थ होकर कहता है कि 'शेषेलोपः' सूत्र से अन्यलोप भी होता है। इस पक्ष में अकारान्त अङ्ग से सुट्सम्भव है। उसकी निवृति के लिये साम शब्द पढ़ा। भाविनः सुटोनिवृत्यर्थं ससुट्क निर्देशः। अत्र आम् स्थाने साम बुद्धि कृत्वा 'साम आकम्' सूत्रेण आकम् आदेशे। टिलोपपक्षे-रुपम्। अन्त्यलोपपक्षे सवर्णदीर्घे युष्माकम् अस्माकम्। त्वयि। मयि। सप्तम्येकवचने ङिविभक्तौ युष्मद्+ङि। अस्मद्+ङि एकवचने 'त्व' 'म' आदेशे। अतोगुणे, पररुपे, योऽचि इति यकारे। युष्मासु अस्मासु। अत्र केवलम् युष्मदस्मदोरनोदेशे इत्यात्वम् भवति।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्मासु । ९ युष्मदस्मदोः षष्ठी-चतुर्थी-द्वितीयास्थयोर्वां - नावौ ८।१।२० । पदात् परयोरपादादौ स्थितयोः षष्ठ्यादिविशिष्टयोर्वां नौ इत्यादेशौ स्तः ।

३३० बहुवचनस्य वस्-नसौ ८ । १ । २१ । उक्तविधयोरनयोः षष्ठ्यादि-बहुवचनान्तयोर्वस्-नसौ स्तः । १ तेमयावेकवचनस्य ८ । १ । २२ । उक्त-विधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः । २ त्वामौ द्वितीयायाः ८ । १ । २३ द्वितीयैकवचनान्तयोस्त्वा मा, इत्यादेशौ स्तः ।

"श्रीशस्त्वाऽवतु मापीह दत्तात्ते मेऽपि शर्म सः ।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः ।
सोऽव्याद्वो नः शिवं वो नो दद्यात् सेव्योऽत्र वः स नः" ॥

१ ( एकवाक्ये युष्मदस्मदादेशा वक्तव्याः ) । २ ( एकतिङ् वाक्यम् )

---

( ९ ) पदात्परयोः—किसी पद से परे हो, अपादादौ=किसी पाद चरण या श्लोक के आदि में न हो तथा षष्ठीचतुर्थीद्वितीया के किसी विभक्ति से जुड़े हुए युष्मद् अस्मद् शब्द के स्थान में क्रम से वां तथा नौ आदेश हो । युष्मद् को 'वाम्' अस्मद् को 'नौ' । यह नियम सामान्य है तीनों विभक्तियों में लगता है । इसको बाधकर अन्यकार्य वस् नस् आदि भी होते हैं ।

( ३३० )उक्तविधयोः=पद से परे हो किसी पाद ( चरण ) मन्त्र के आदि में स्थित न हो । षष्ठ्यादि=षष्ठी, चतुर्थी द्वितीया के बहुवचनान्त में अनयोः= युष्मद् तथा अस्मद् के स्थान में वस् तथा नस् आदेश हो । ये वाम् नौ के बाधक हैं ।

( १ ) तेमयौ=ते, मे, एकवचनस्य । उक्तविधयोः—पद से परे अपा-दादिस्थ हो, षष्ठी चतुर्थी के एकवचनविशिष्ट युष्मद् अस्मद् शब्दों के स्थान में क्रम से 'ते, मे' ये दोनों आदेश हो ।

( २ ) त्वामौ=द्वितीया विभक्ति के एकवचन से विशिष्ट युष्मद् को 'त्वा' अस्मद् को 'मा' आदेश हो प्रत्येक का क्रमशः श्लोकबद्ध उदाहरण प्रस्तुत करते हैं । यथा—श्रीश इति । इह=संसारे श्रीशः=लक्ष्मीपतिः ( भगवान् विष्णुः ) त्वा ( त्वाम् ) तुम्हारी अवतु=रक्षा करें, मां=मामऽपि ( मेरी भी ) रक्षतु ( रक्षा करें । ) यहाँ द्वितीयाविभक्तिविशिष्ट त्वाम् माम् के स्थान में त्वा मा आदेश हुआ । वां नौ को बाधकर । श्रीशः विष्णुः, ते=तुभ्यम् । मे—मह्यम्, शर्म=सुखम्, दत्तात् ( भगवान् तेरे मेरे लिए सुख दें ) अत्र चतुर्थ्याः एकवचनस्य तुभ्यं शब्दस्य मह्यं शब्दस्य च, स्थाने क्रमशः 'ते' 'मे' आदेश

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तेनेह न—ओदनं पच तव भविष्यति। इह तु स्यादेव—शालीनां ते ओदनं

---

होते हैं। हरिः ते (तव) में (मम) अपि स्वामी अस्ति। भगवान् तुम्हारे और मेरे भी स्वामी हैं। यहाँ षष्ठीविभक्ति के एकवचन **तव, मम** के स्थान में 'ते' 'मे' आदेश क्रम से हुए। द्विवचन का उदाहरण—**विभुः**=समर्थः सर्वशक्तिमान् भगवान् **वां**=युवाम्, **नौ**=आवां, **पातु**=रक्षतु। (ईश्वर तुम दोनों की, हम दोनों की भी रक्षा करें।) अत्र द्वितीयाद्विवचने **युवां** स्थाने **वाम्**, **आवां** स्थाने **नौ** आदेशौ। चतुर्थीद्विवचने **ईशः** (हरिः) **वाम्**=युवाभ्यां; **नौ**=आवाभ्याम्, **सुखम्**=आनन्दं ददातु। षष्ठीद्विवनस्य उदाहरणम्—हरिः भगवान् **वाम्**=युवयोः **नौ**=आवयोः पतिः स्वामी अस्ति। अत्र **युवयोः आवयोः** स्थाने क्रमेण **वः नौ** आदेशौ भवतः। स (हरिः) **वः** (युष्मान्) **नः** (अस्मान्) **अव्यात्**=पायात् (भगवान् तुम लोगों, हम लोगों की रक्षा करें।) बहुवचन उदाहरण में **युष्मान् अष्मान्** को क्रम से **नस् वस्** आदेश हुए। एवं **अस्मभ्यम् युष्मभ्यम्** इति चतुर्थी बहुवचनस्थाने **वस्, नम्** आदेशे। एवं **युष्माकं** स्थाने **वः**। **अस्माकं** स्थाने '**नः**' आदेशे। भगवान् तुम सबके लिए हम सबके लिए भी कल्याण करें। वही हम लोगों के तुम लोगों के भी **सेव्य**=सेवा के योग्य हैं।

(वा०) **एकवाक्ये**-युष्मद् अस्मद् शब्द के स्थान में जो आदेश कहे गये हैं वे एक ही वाक्य में सम्भव हैं। यदि दो वाक्य हों तो नहीं होते। जिसमें **एकतिङ्** हो उसे **वाक्य** कहते हैं। जिसमें तिङन्तपद आवश्यक है। **तेनेह**=उक्त नियम से यहाँ नहीं हुआ। **ओदनं**=भात को, **पच्**=पकाओ। (वह) **तव** (तुम्हारा) **भविष्यति** होगा। यहाँ दो तिङन्तपद अलग-अलग वाक्य में होने से एकवाक्य नहीं रहा। अतः **तव** के स्थान में 'ते' आदेश नहीं हुआ। **पश्य मृगो धावति'** यहाँ दो क्रिया होने पर भी एक ही वाक्य है। **इहतु**=जहाँ एक वाक्य है। वहाँ तो **स्यादेव**=होता ही है। **यथा—शालीनां**=तण्डुलानाम् **ओदनम्**=भक्तम् 'ते' तुभ्यं दास्यामि—तुझे चावल का भात दूँगा। यहाँ एक वाक्य है। एकतिङन्त पद होने से। शालीनां पद से परे तुभ्यम् के स्थान में 'ते' आदेश हो गया।

(वा०) **एते इति**: ये (वां नौ) इत्यादि आदेश **अनन्वादेशे**=अन्वादेश के अभाव स्थल में विकल्प से हों। जहाँ अन्वादेश है, वहाँ उक्त आदेश नित्य होते हैं। अनन्वादेश का उदाहरण—**धाता ते भक्तोऽस्ति**। ब्रह्मा तुम्हारे भक्त हैं। यहाँ **तव** के स्थान में विकल्प से 'ते' आदेश हुआ। इसलिए धाता 'तव भक्तोऽस्ति' यह भी बनता है। अन्वादेश का उदाहरण—**कार्यान्तरविधान ही अन्वादेश**

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दास्यामि । ३ ( एते वां नावादयोऽनन्वादेशे वा वक्तव्याः ) अन्वादेशे तु नित्यं स्युः । धाता ते भक्तोऽस्ति धाता तव भक्तोऽस्ति वा । तस्मै ते नम इत्येव । सुपात् सुपाद् । सुपादौ ।

३ पादः पत् ६ । ४ । १३० । पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः । सुपदः । सुपदा । सुपाद्भ्याम् । अग्निमत्, अग्निमद् । अग्निमथौ । अग्मिथः ।

---

है । वहाँ नित्य आदेश होने से ( तस्मै ते नमः इस वाक्य में तुभ्यम् के स्थान में 'ते' आदेश नित्य है । अत्र 'तस्मै तुभ्यं नमः' इति कथनम् अशुद्धं भविष्यति ।

शोभनौ पादौ यस्य स, सुपात् । सुन्दर पैरोंवाला अर्थ से अर्थवान् सुपाद्शब्दात् प्रथमायाः एकबचने सु=स् अपृक्तसकारस्य हल्ङ्यादिलोपः अवसानेपरे दकारस्य विकल्पेन चर्त्वे सुपात् सुपाद् । औविभक्तौ वर्णसम्मेलने सुपादौ । सुपादः । सुपादं सुपादौ सुपदः ।

( ३ ) पाच्छब्दान्तं=पाद्शब्द हो अन्ते में जिसके ऐसा भसंज्ञकअङ्ग उसके अवयव पादशब्द को पद् आदेश हो । प्रातिपदिकात् सुपाद्शब्दात् द्वितीया बहुवचने शसि अनुबन्धलोपे । अजादिविभक्तिपरे भसंज्ञा भवति । भसंज्ञको अङ्गः पादः पत् सूत्रेण पद् आदेशे सस्य रुत्वे वि० सुपदः । एवं सुपदा । अजादि विभक्ति परे ही पद् आदेश होता है । अन्यत्र नहीं । सुपाद्भ्याम् सुपाद्भिः । सुपद् सुपाद्भ्यां सुपाद्भ्यः । सुपदः सुपदोः सुपदाम् । सुपदि सुपदोः सुपात्सु । अग्निं मथ्नाति ( शमी आदिकाष्ठघर्षणेन वह्निमुत्पादयति स अग्निमत् । जो मन्थन से अग्नि पैदा करे वह अग्निमद् है । अत्र सु विभक्तिः तस्य लोपे । अवसाने थकारस्य वा चर्त्वे रुपद्वयम् । अजादिविभक्तिपरे जश्त्वचर्त्वविशेष है । अग्निमथः अग्निमथोः अग्निथाम् । अग्निमथि, अग्निमथोः, अग्निमत्सु ।

( ४ ) अनिदितां हलन्तानां=हलन्तशब्द हो, अनिदिताम्=इकारइत् न हुआ हो, ऐसे अङ्गसंज्ञक शब्द की उपधा ( अन्त्यवर्ण के पूर्व के ( न ) का लोप हो क्किति ङिति परे । नुम्=उगिदचां सर्वनामस्थानेऽधातोः इति नुम् । संयोग के अन्त का लोप हो । न स्थाने कुत्व होने से 'ङ्' भवति । प्राङ्=प्रकर्षेण अञ्चति ( पूजयति ) प्रशस्तो भवति । पूर्वदिशा, देश, काल, प्रशस्त हैं । प्र पूर्वकअञ्च्धातोः 'ऋत्विग्'—सूत्रेण क्विन् । सर्वापहारिलोपे कृदन्तं मत्वा प्रातिपदिकसंज्ञा, सुविभक्तिः 'अनिदितामिति' नलोपे प्र अच् + स् उगिद्चामिति नुम्=न् आगमे कृते, प्र+अ=आ दीर्घे । प्रान् च स् इति स्थिते सस्य हल्ङ्यादिलोपे चकारस्य संयोगान्तलोपे नकारस्य क्विन्प्रत्ययस्येति कुत्वे, प्राङ् । एवं प्राञ्चौ प्राञ्चः । प्राञ्चं प्राञ्चौ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

३३४ अनिदितां हल उपधायाः क्ङिति ६ । ४ । २४ । हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः किति ङिति । नुम् । संयोगान्तस्य लोपः । नस्य कुत्वेन ङः । प्राङ् । प्राञ्चौ । प्राञ्चः । ३३५ अचः ६।४।१३८ । लुप्तनकारस्याञ्चतेर्भस्याऽकारस्य लोपः । ६ चौ ६ । ३ । १३८ । लुप्तकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः । प्राचः । प्राचा । प्राग्भ्याम् । प्रत्यङ् । प्रत्यञ्चौ । प्रतीचः । प्रत्यग्भ्याम् । उदङ् । उदञ्चौ । ७ उद ईत् ६ । ४ । १३९ । उच्छब्दात् परस्य लुप्तनकाराञ्चतेर्भस्याकारस्य

---

( ३३५ ) अचः=लुप्तनकारस्य = लुप्त हो नकार जिसका ऐसे भसंज्ञक अञ्च के अकार का लोप हो ।

( ६ ) लुप्त हो अकार और नकार ऐसे अञ्चकेपरे रहते पूर्वअण् को दीर्घ हो । प्राचः = प्रपूर्वक अञ्चधातोः क्विन् सर्वापहारिलोपे प्रा० सं० शस् अङ्गसंज्ञा भसंज्ञा च । अनिदितमिति नकारलोपे भसंज्ञकस्य अकारस्य 'अचः' इतिसूत्रेण लोपे, 'चौ' इतिपूर्व-अणः दीर्घे रू० वि० । एवं प्राचा प्राग्भ्याम् । अत्र नकारलोपे सवर्णदीर्घ इति विशेषः । प्राग्भिः । प्राचे प्राग्भ्यां प्राग्भ्यः । प्राचः प्राचोः प्राचाम् । प्राचि प्राचोः प्राक्षु । दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यङ्ङादयः । प्राञ्चशब्द पूर्वदिशादेश या काल अर्थ में प्रयुक्त है । प्राङ् प्राचीनश्च । एवं पश्चिम दिग्देशकाले भवः प्रत्यक्प्रतीचीनश्च, प्रत्यक् तथा पराक्शब्द क्रम से अन्दर और बाहर के वाचक हैं । पश्चिमदिशा, देशकाल, अर्थ में प्रसिद्ध प्रतिपूर्वक अञ्च्धातोः 'ऋत्विग्' से क्विन् सर्वापहारिलोपे । प्रातिपदिकसंज्ञा सु 'अनिदितां' न लोपे ) उगिदचाम् इति नुम्=न् । सस्य हल्ङ्यादिलोपे, चकारस्य संयोगान्तलोपे क्विन्प्रत्ययस्य नकारस्य कुत्वेनङ् यणि, प्रत्यङ् । प्रतीचः = प्रति अञ्च्धातोः क्विन् सर्वापहारिलोपे 'भ' संज्ञायाम् अचः' इसि अकारलोपे, ततो नकारलोपे, चौ इतिदीर्घे अकृतव्यूहपरिभाषया यण् न भवति । प्रत्यग्भ्याम् । अत्र भसंज्ञा भवति, अतो अकारस्य लोपो न भवति । चकारस्य जश्त्वे चर्त्वे । उत्तरदिशादेशकाल अर्थ में उदङ् उदीचीनश्च । प्राङ् की तरह, उदङ् उदञ्चौ उदञ्चः उदञ्चम् उदञ्चौ उदीचः । उद्पूर्वक अञ्चधातोः क्विन्, सर्वापहारिलोपे । अनिदितामिति नकारलोपे भसंयाम् ।

( ७ ) उद शब्द से परे लुप्त नकारक भसंज्ञक अङ्ग अञ्चके अकारको ईत्व हो । इत्यनेन अकारस्य ईकारे रू० वि० । भसंज्ञास्थल में ईत्व अवश्य होता है । उदीचा उदग्भ्याम् उदग्भिः । नलोप जस्त्वं विशेषः उदीचः उदीचोः दीउचाम् । उदीचि उदीचोः उदक्षु ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ईत्। उदीचः। उदीचा। उदग्भ्याम्। ८ समः समिः ६।३।९३। वप्रत्ययान्तेऽञ्चतौ। सम्यङ्। सम्यञ्चौ। समीचः। सम्यग्भ्याम्। ९ सहस्य सध्रिः ६।३।९५। तथा। सध्र्यङ्। सध्रीचः।

३४० तिरसस्तिर्यलोपे ६।३।९४। अलुप्ताकारेऽञ्चतौ वप्रत्ययान्त-तिरसस्तिर्यादेशः। तिर्यङ्। तिर्यञ्चौ। तिरश्चः। तिर्यग्भ्याम्। १ नाञ्चेः पूजायाम् ६।४।३०। पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न। प्राङ्।

---

(८) व (क्विन्) प्रत्यय हो अन्त में जिसके ऐसे अञ्चपरे समशब्दको समिआदेश हो। समपूर्वक अञ्च्से क्विन् आदि नलोपे, नुमि, सुलोप, संयोगान्त-लोपे। सम स्थाने समि आदेशे यणि कुत्वे। सम्यङ् सम्यञ्चौ। सम्यञ्चः। सम अञ्चशब्दात् द्वितीयाबहुवचने शसि=असि नकारलोपे ईत्वे, समः समि आदेशे दीर्घे समीचः। अचः।

(९) वप्रत्यान्त अच्परे सहशब्द के स्थान में संध्रि आदेश हो। सह अञ्चति गच्छति इति सध्र्यङ्—सहगामी। सहपूर्वक अञ्चधातोः क्विन्। सम्पूर्णलोपे प्रातिपदिकसंज्ञा 'सु'। सहस्य सध्रि आदेशे, यणि, नकारलोपे, नुमिकृते संयोगान्तलोपे रूपम्। सध्र्याञ्चौ, सध्र्याञ्चः। सध्रीचः। सध्रीचा, सध्र्यग्भ्याम्, सध्र्याग्भिः। सध्रीचः, सध्रीचोः सध्रीचाम्।

(३४०) तिरसः तिरि, अलोपे। अलुप्त=न लुप्त हुआ हो अकार जिसका ऐसे क्विन्प्रत्ययान्त अञ्च्धातु परे रहते। वप्रत्ययान्ते वचासौ प्रत्ययश्च क्विपप्रत्ययः अन्ते यस्य स। तस्मिन्परे तिरस्शब्द के स्थान में तिरिआदेश हो। तिर्यङ्=तिरोअञ्चति=कुटिलं गच्छति। सर्पः पक्षी, पशुर्वा। तिरस्पूर्वक-अञ्च्धातु से क्विन्, सर्वापहारिलोपे, तिरसःस्थाने तिरिआदेशे, यणि अत्र सर्वनामस्थानपरत्वेन भसंज्ञा न भवति, अतः अकारलोपोऽपि नभवति। हलादिविभक्तावपि अकारलोपो न भवति। सकारस्य हल्ङ्यादिलोपे वकारस्य-संयोगान्तलोपे च। कुत्वेन ङ्। तिर्यङ्। तिर्यञ्चौ तिर्यञ्चः। हेतिर्यङ्। तिर्यञ्चं, तिर्यञ्चौ तिरश्चः—तिरस्पूर्वक अञ्चधातोः क्विन् प्रत्यये सम्पूर्णलोपे, प्रातिपदिक संज्ञायां शस्। श इत्। अनदितामिति नलोपे भसंज्ञायाम् 'अच' इति अकारलोपे, सस्य श्चुत्वेन शः, विभक्तिसकारस्य रुत्वे वि० रूपम। तिरश्चा तिर्यग्भ्याम्=अत्र तिरस्स्थाने तिरि आदेशे 'अनिदितां' नलोपे, हलादिविभक्तौ भसंज्ञा न भवति। अतः अकार लोपोऽपि न भवति। यणि कुत्वे जश्त्वे। तिर्यग्भिः। तिरश्चे, तिर्यग्भ्याम, तिर्यग्भ्यः। तिरश्चः तिरश्चोः तिरश्चाम्। तिरश्चि तिरश्चोः तिर्यक्षु। अत्र तिरिआदेशे तकारलोपे कुत्वे षत्वे क, ष संयोगे क्षकृते यणि।

(१) अञ्चेः पूजायां न। पूजा अर्थ मे अञ्च्धातुके उपधा नकार का

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्राञ्चौ। नलोपाभावादलोपो न। प्राञ्चः। प्राङ्भ्याम्। प्राङ्क्षु। एवं पूजार्थे प्रत्यङ्ङादयः। क्रुङ्। क्रुञ्चौ। क्रुङ्भ्याम्। पयोमुक्। पयोमुग्।

---

लोप नहीं होता। अञ्चधातु के दो अर्थ हैं गति (अर्थ) पूजा अर्थ। गति अर्थ में न लोप होता है, पूजा अर्थ में नहीं। प्रकर्षेण अञ्चति (पूजयति) इति प्राङ् (विधि से पूजा करनेवाला) प्रपूर्वकअञ्चधातोः 'ऋत्विग्' आदि सूत्रेण क्विन् सर्वापहारिलोपे अनिदितां सूत्रेण नस्य लोपेप्राप्ते अञ्चेः पूजायां। पक्षे न लोपो न भवति (अञ्चेः पूजायां न) दीर्घप्राञ्च्शब्दात् प्रातिपदिकात् सु=स्। तस्य हल्ङ्यादिलोपे, पदसंज्ञायां चकारस्य संयोगान्तलोपे। कार्यस्य अभावे कारणस्य अभावः। चकारस्यलोपे अनुस्वारपरसवर्णौनिवर्तेते। नकारो दृश्यते। क्विन् प्रत्ययस्य सूत्रेण नकारस्य कुत्वेन ङकारे प्राङ्। एवं प्राञ्चौ प्राञ्चः। अत्र नलोपस्य अभावात्=नाञ्चेः पूजायाम् इति नकारलोपस्य निषेधेसति। अचः इतिसूत्रेण अलोपो नभवति। प्राञ्चं, प्राञ्चौ, प्राञ्चः। प्राञ्चा प्राङ्भ्याम्=अत्र हलादिविभक्ति 'भ्यां' परे स्वादिष्वसर्वनामस्थाने इतिपद संज्ञा चकारस्य संयोगान्तलोपे। नकारस्य कुत्वेन ङकारे प्राङ्भिः। प्राञ्चे, प्राङ्भ्याम्, प्राङ्भ्यः। प्राञ्चः प्राञ्चोः प्राञ्चाम्। प्राञ्चि प्राङ्खषु प्राङ्क्षु प्राङ्सु प्राञ्च=शब्दात् प्रातिपदिकात् सप्तमीबहुवचनेसुप्। पदसंज्ञायां चकारस्य संयोगान्तलोपे, नकारस्य कुत्वेन ङकारे, ततः ङणोकुक्टुक् शरि इति कुक्=क् आगमें, विकल्पेन कस्थाने चयोद्वितीया इति इति वार्तिकेन द्वितीयोऽक्षरः 'ख' कृते, एकरूपम्। 'क्' स्थिते द्वितीयं रूपम्। कुक् अभावे तृतीयं रूपम्। एवम्=अनेनप्रकारेण प्रत्यङ्ङादयः=पूजाअर्थ में प्रत्यञ्च, उदञ्च, सम्यञ्च, सध्र्यञ्च, तिर्यञ्च आदि के रूप भी 'पूजार्थक प्राङ्की तरह चलेगा। अर्थ में अन्तर होगा। प्रत्यङ्का सर्वपूजकः। उर्ध्वं गमनाय अञ्चति उदङ्। सविध्यञ्चति इतिसम्यङ्। साथ में मिलकर पूजक सध्र्यङ्। वक्रपूजकः तिर्यङ्। वकजातीय पक्षि विशेष क्रुङ् (क्रौंचपक्षी) क्रुञ्चधातोः 'ऋत्विग्' आदि सूत्रेण क्विन्प्रत्ययान्तः निपात्यते। नकोरलोपस्य अभावेऽपि निपात्यते। कृदन्तं मत्वा प्रातिपदिकसंज्ञा सुविभक्तिः सोर्लोपे, पदसंज्ञायां संयोगान्तलोपे कुत्वेन ङकारे रूपम्। क्रुङ्कुञ्चौ क्रुञ्चः। क्रुञ्चा क्रुङ्भ्याम् कुङ्भिः। कुञ्चे कुङ्भ्याम् क्रुङ्भ्यः क्रुञ्चः क्रुञ्चोः क्रुञ्चाम्। क्रुञ्चि क्रुञ्चोः क्रुङ्खुषु क्रुङ्क्षु क्रुङ्षु। पयांसि मुञ्चति इति पयोमुक् (जल वर्षानेवालाबादल) क्विन्प्रत्यान्तात् पयोमुच्शब्दात् सु=स्तस्य हल्ङ्यादिलोपे, चकारस्य जश्त्वेन जकारे कृते, 'चोः कुः' कुत्वे 'वाऽवसाने' विकल्प चर्त्वे। पयोमुक् पयोमुग्। पयोमुचौ पयोमुचः। अजादिविभक्तौवर्णसम्मेलने पयोमुचम् पयोमुचः। पयोमुचा पयोमुग्भ्याम्, हलादिविभक्तौ जश्त्वे कुत्वे च

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पयोमुचौ। पयोमुग्भ्याम्। उगित्वान्नुम्। २ सान्त-महतः संयोगस्य। ६।४।१०। सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने। महान्। महान्तौ। महान्तः। हे महन्! महद्भ्याम्। ३ अत्वसन्तस्य चाधातोः ६।४।१४। अत्वन्तस्योपधाया दीर्घो धातुभिन्नासन्तस्य चासम्बुद्धौ सौ परे। धीमान् धीमन्तौ। धीमन्तः। हे धीमन्!।

---

पयोमुग्भिः। पयोमुचः पयोमुचोः पयोमुचां पयोमुक्षु।

उगित्वात्=उक्=उ ऋ ऌके इत् होने उगित् अचां सर्वनामस्थाने सूत्र से नुम्=न्। (२) सान्त (लुप्तषष्ठीक है) संयोगस्य=सकार हो अन्त में जिसके ऐसा संयोग विद्वस् इत्यादि, महतश्च=महत्शब्द का जो नकार, तस्योपाधायाः=उसकी उपधा=अन्त्य अक्षर के पूर्ववर्ण को दीर्घ हो। सम्बुद्धिभिन्नसर्वनामस्थानविभक्तिपरे। महान्=दिव्य या श्रेष्ठ, अर्थसे अर्थवान् प्रातिपदिकसंज्ञकमहत् शब्द से सु। यहाँ उगित् मानकर उगिद्चाम से नुम्=न् शतृवद्भावसे उगितधर्म महत्शब्दमें आया। प्रमाण। वर्तमाने, त्रिशंत्, महत्, बृहत्, जगत्, शतृवच्च। सान्तमहत्संयोगस्य इति नकारस्य उपधायाः दीर्घे, सुलोपे, संयोगान्तलोपे च महान्। महान्तौ=अत्र नुम् उपधादीर्घश्च अनुस्वारपरसवर्णौ तथैव महान्तः हे महन्। अत्र न सम्बुद्धिपरे दीर्घः। महान्तम् महान्तौ महतः। महता महद्भ्याम् महद्भिः। महतः महतोः महत्सु।

(३) अत्वन्तस्य=अतुप्रत्यय अन्त में हो, उसके उपधा को दीर्घ हो। असन्तस्य=धातु से भिन्न जो असन्त उसके अन्त उपधा को भी दीर्घ हो, सम्बुद्धिभिन्नसुपरे। उत्सृष्टानुबन्धग्रहणे। यहाँ अतु सानुबन्धग्रहणम् मतुप्, वतुप्, आदिप्रत्यय जाने। यथा—धीः=(प्रशस्ताबुद्धिः) अस्तिअस्य। प्रशंसामें मतुप् धीमत्शब्दात् प्रातिपदिकात् 'सु' उगित्वात् 'उगिद्चाम्' सूत्रेण नुम्, अनुबन्धलोपे अपृक्तसञ्ज्ञकसकारस्य लोपे। संयोगान्तलोपे च। प्रत्ययलोपे प्रत्ययलक्षणेन अत्वसन्तस्य इति उपधायाः दीर्घे। धीमान्, धीमन्तौ, धीमन्तः। हे धीमन् शसादौ=शस् टा इत्यादि विभक्तियों में महद्वत्='महत्' शब्द की तरह रूप समझे। भातेर्डवतुः=दीप्ति, प्रकाश अर्थ में भा धातु से डवतु। डकारस्य चुटूसूत्रेण उकारस्य उपदेश अजनुनासिक इत्संज्ञा। लोपश्च। भा+अवत्। यहाँ भसंज्ञा यचिभम् से नहीं होती क्योंकि उसकी सीमा चतुर्थ, पञ्चम अध्याय के कप् प्रत्यय पर्यन्त तक है तब टि लोप कैसे हो, डित्वसामर्थ्यात्। ड पढने के सामर्थ्य से अभस्यापि=बिना भ संज्ञा के भी—

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शसादौ महद्वत्। भातेर्डवतुः। डित्वसामर्थ्यादभस्यापि टेर्लोपः। भवान्। भवन्तौ। भवन्तः। शत्रन्तस्य-भवन्। ४ उभे अभ्यस्तम्। ६।१।५। षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः।

३४५ नाभ्यस्ताच्छतुः ७।१।७८। अभ्यस्तात् परस्य शतुर्नुम् न। ददत् ददतौ। ददतः। ६ जक्षित्यादयः षट् ६।१।६। षट् धातवोऽन्ये जक्षितिश्च सप्तम एते अभ्यस्तसंज्ञाः स्युः। जक्षत्, जक्षद्। जक्षतौ। जक्षतः। एवं जाग्रत्, दरिद्रत्, शासत्, चकासत्। गुप्, गुव्। गुपौ। गुपः।

---

टिका लोप होता है। अन्यथा डित्करण व्यर्थ होगा। 'भा' में आका लोप हुआ। भवत्शब्दात् प्रथमायाः एकवचने 'सु' नुम्। सुलोपे। संयोगान्त लोपे। अत्वसन्तस्य इति उपधायाः दीर्घे। भवान्। तथैव भवन्तौ भवन्तः। भवन्तं भवन्तौ भवतः। भवता भवद्भ्याम् भवद्भिः। भवति भवतोः भवत्सु। शत्रन्तस्य = शतृप्रत्यय अन्त में हो ऐसे भवेत् शब्द को नुम् आदि करके भवन् रूप बनता है। अतु अन्त में न होने से दीर्घ नहीं होता। संयोगान्त लोप के असिद्धि के भय से नान्तउवधा को दीर्घ नहीं हुआ।

( ३४४ ) उभे षाष्ठ = अष्टाध्यायी में 'एकाचो द्वे प्रथमस्य' छठे अध्याय के इस सूत्र से किये गये द्वित्व। प्रसङ्ग में जो दो कहे गये हैं, वे समुदिते = दोनों मिलकर अभ्यस्तसंज्ञक हो। अलग-अलग नहीं। ( ३४५ ) अभ्यस्तात् = अभ्यस्तसंज्ञक से परे शतृ = अत् को नुम् नहीं होता। निरन्तरदान करता हुआ अर्थ में ददत् = ( शतृप्रत्ययान्तप्रातिपदिकसंज्ञक ) से सु उगिदचाम् से प्राप्तनुम् का निषेध हुआ। क्योंकि अभ्यस्तसंज्ञक से नुम् प्राप्त था। अभ्यस्तसंज्ञा 'उभेऽभ्यस्तम्' से हुई। हल्ङ्यादिलोपे। ददता दददभ्याम् दद्भिः। ददतः ददतोः ददताम्। ददति ददतोः ददत्सु।

( ६ ) जक्षित्यादयः = जक्षि, जागृ, दरिद्रा, शास्, देधीङ्, वेवीङ्, चकासृ, अभ्यस्तसंज्ञं विज्ञेयं ( मुन्युक्तं धातुशप्तकम् ) छ धातु, अन्य जक्ष मिलकर सात धातु की अभ्यस्तसंज्ञा है। यक्षधातु भक्षण और हसने अर्थ में है, उसकी निरन्तर क्रिया से जक्षत् को अभ्यस्तसंज्ञा 'नाभ्यस्तात् से' नुम्का निषेध। रुप साधारण है। इसी प्रकार जागरणं कुर्वन्। जागरण की निरन्तर क्रिया अर्थ में जाग्रत् शब्द को अभ्यस्तसंज्ञा, नुम् निषेध। दुर्गति दयनीयं वा प्राप्नुवन् दरिद्रत् = दुर्गति की निरन्तर क्रिया। शासनं कुर्वन्। शासत् भगवान्, चकासत् = निरन्तर प्रकाशन क्रिया। इन सभी को अभ्यस्तसंज्ञा नुम्निषेध। गोपायति इति गुप् ( रक्षकः ) प्रथमायाः एकवचने सु = स् अपृक्तसकारस्य लोपे, जश्त्वे विकल्पेन चर्त्वे गुप् गुव्

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

गुब्भ्याम् । ७ त्यदादिषु दृशोऽनालोचने कञ् च ३ । २ । ६० । त्यदादिषूपपदेषु अज्ञानार्थाद् दृशेः कञ् चात् क्विन् । ८ आ सर्वनाम्नः ६ । ३ । ९१ । सर्वनाम्न आकारोऽन्तादेशः स्याद् दृग्-दृश् वतुषु । तादृक्, तादृग् । तादृशौ । तादृशः । तादृग्भ्याम् । व्रश्चेति षः । जश्त्वचर्त्वे । विट्, विड् । विशौ । विशः । विड्भ्याम् । ९ नशेर्वा ८ । २ । ६३ । नशेः कवर्गोऽन्तादेशो वा पदान्ते । नक्, नग्, नट्, नड् । नशौ । नशः । नग्भ्याम् नड्भ्याम् ।

३५० स्पृशोऽनुदके क्विन् ३ । २ । ५८ । अनुदके सुप्युपपदे स्पृशेः क्विन् । घृतस्पृक्, घृतस्पृग् । घृतस्पृशौ । घृतस्पृशः । दधृक्, दधृग् । दधृषौ ।

---

इति । भ्यामादिहलादिविभक्तौ पदान्ते झलां जश्त्वे गुब्भ्याम् इत्यादि ।

( ७ ) त्यदादिषु=त्यद्, तद्, यद्, ये उपपद हों तो अनालोचने चाक्षुषज्ञानभिन्ने । अज्ञानार्थात् चाक्षुष् ज्ञान अर्थ से रहित दृश् धातुसे कञ् तथा क्विन् प्रत्यय हो । (८) सर्वनाम्नः—सर्वनामशब्द के अन्त्य अल्वर्ण को आकार हो । दृग्, दृश्, वतु, शब्द परे रहते । तदपूर्वक दृश्धातु से कञ् सर्वापहारि लोपः । आसर्वनाम्नः इति दकारस्य आकारे । दीर्घे । प्रातिपदिकत्वात् सु — स् तस्य लोपे 'व्रश्चेति' शकारस्य षत्वे षस्थाने झलांजशोऽन्त इति ड कृते । क्विन् प्रत्ययस्य कुत्वेन गकारे । विकल्पेन चर्त्वे । तादृक् । स इव पश्यति ज्ञानविषयो भवति । अचाक्षुष् ज्ञानवाला ( तैसा ) तादृग् । इस प्रसङ्ग में ष, ड, ग, क की प्रक्रिया श के स्थान में समझे । तादृशा, तादृग्भ्याम् । अयम् इव पश्यति ईदृक्ाय इव पश्यति यादृक् । तादृग्भिः । तादृशि तादृशोः तादृक्षु । वैश्य अर्थ में प्रसिद्ध विश्शब्दात् सु — स् । तस्य लोपे 'व्रश्चभ्रस्ज' सूत्रेण शस्थाने षे कृते तस्य जश्त्वे चर्त्वे विकल्पे विट् विड्, विशौ, विशः । विशम्, विशौ, विशः । विशा विड्भ्यां विड्भिः । विशे, विड्भ्यां, विड्भ्यः । विशि, विशोः, विट्त्सु-विट्सु । ( ९ ) नश्-धातु के कवर्ग अन्तादेश विकल्प से हो, पदान्त में । नश्यतीति नग् नक् नश्वर अर्थ में नश् शब्द से सु, स् लोपे नशेर्वा सूत्रसे श के स्थान में ग् हुआ विकल्प चर्त्वे नक्, नग् । पक्ष में व्रश्चेति षः तस्य जश्त्वे चर्त्वे विकल्पे नट्, नड् नशौ नशः । नशा नग्भ्याम्, नड्भ्याम् नग्भिः नड्भिः । नशि नशोः नक्षु नटत्सु नट्सु ।

( ३५० ) अनुदके=उदक=जल अर्थ न हो, ऐसे सुबन्तशब्द उपपद रहते स्पृश्धातुसे क्विन्प्रत्यय हो । घृतं स्पृशति घृतस्पृक् — घी का स्पर्शकरनेवाला । यहाँ घृत उदक् नहीं है । अतः स्पृश् से क्विन् सर्वापहारिलोपे । प्रातिपदिक आदि कार्ये । शस्थाने ष, ड, ग, क कृते घृतस्पृक् घृतस्पृग् । घृतस्पृशा घृतस्पृग्भ्याम् घृतस्पृग्भिः । घृतस्पृशः घृतस्पृशोः, घृतस्पृशाम् । घृतस्पृक्षु । तिरस्कर्ता अर्थ में



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दधृग्भ्याम् । रत्नमुट्, रत्नमुड् । रत्नमुषौ । रत्नमुड्भ्याम् । षट्, षड् । षड्भिः । षड्भ्यः । २ । षण्णाम् । षट्सु, षट्त्सु । रुत्वं प्रति षत्वस्यासिद्धत्वात् ससजुषोरुरिति रुत्वम् । १ र्वोरुपधाया दीर्घ इकः ८।२।७६ । रेफवान्तयोरुपधाया इको दीर्घः पदान्ते । पिपठीः । पिपठिषौ । पिपठीर्भ्याम् । २ नुम् विसर्जनीयशर्व्यवायेऽपि ८ । ३ । ५८ । एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः । ष्टुत्वेन पूर्वस्य षः । पिपठीष्षु, पिपठीः

---

प्रसिद्ध दध्रिष्, 'ऋत्विग्दधृष्' इति क्विन्, सर्वापहारिलोपे निपातनाद्द्वित्वादिः प्रथमायाः एकवचने 'सु' पूर्वं षस्थाने जश्त्वेन ड् तस्य कुत्वे चर्त्वविकल्पे दधृक् ग् रत्नं मुष्णाति रत्नमुट् रत्न चुराने वाला । यहाँ षको जश्त्व चर्त्वविकल्प, रत्नमुषि, रत्नमुषोः रत्नमुट्सु, रत्नमुट्त्सु । क्विप्प्रत्ययान्त शब्द है, अतः कुत्व नहीं हुआ । षट्शब्द नित्य–बहुबनान्त है । छ सङ्ख्या-अर्थवाचकात् षष्शब्दात् जसि शसि च 'ष्णान्ताः षट्' इति षट्संज्ञा । षड्भ्यः परयोः जश्शसोर्लुक् कृते षकारस्य जश्त्वे चर्त्वविकल्पे षट् षड् । भिस् भ्यस् विभक्ति में जश्त्वेन डकारे । षड्भिः षड्भ्यः । आमि विभक्तौ षट्चतुर्भ्यश्च इति नुट् (न्) षष् + नाम षस्थाने झलां जश्त्वे, नुट् नकारस्य ष्टुत्वेन णकारे षड्णाम् । "प्रत्ययेभाषायां नित्यम्" । नित्यम् अनुनासिके परसवर्णे । षण्णाम् । षट्सु षटत्सु । डःसि धुट् ।

पिपठीः—पठितुम् इच्छति पिपठिषति इति पिपठीः । पिपठिष् शब्द से सु=स् हल्ङ्यादिलोपे । यहाँ दन्त्य स नहीं है । रु० वि० कैसे ? तब बोले 'रुत्वं प्रति ससजुषोरुः रूत्व की दृष्टि में आदेशप्रत्ययोः से कृतः षकारः असिद्ध । इसलिए बोले कि षत्वस्यासिद्धत्वाद्=षत्वके असिद्ध होने पर 'स' दिखाई पड़ा, इसलिए रुत्व हुआ तब ( १ ) र्वो=रेफ तथा व अन्तमें हो उसकी उपधा के इक् को दीर्घ हो पदान्त में । इति दीर्घे खरवसानयोः विसर्जनीयः' इति विसर्गे पिपठीः, पिपठिषौ पिपठिषः । पिपठिषा पिपठीर्भ्याम् पिपठीर्भिः । पिपठिषः पिपठिषोः पिपठिषाम् । पिपठिषि पिपठिषोः पिपठीःषु । अत्र पिपठिष्शब्दात् सप्तमी बहुवचने सुपि अनुबन्धलोपे । स्वादिष्वसर्वनामस्थाने पदसंज्ञायाम् 'पूर्वत्रासिद्धम्' इति षत्वस्य असिद्धत्वात् सकारस्य ससजुषोरुः, इति रुत्वे ( र्वो ) र्वोरुपधायाः दीर्घे । 'रोः सुपि' इति रोरेव विसर्गः इति नियमेन रेफस्य विसर्गे । 'वाशरि' इति विकल्प सकारादेशः पिपठीःसु । ( २ ) नुम्, विसर्ग, शर्=शषसर्, व्यवायेऽपि= इनके व्यवधान में भी । इण्कवर्ग से परे स को 'ष' मूर्धन्यादेश हो । पूर्व स को ष्टुत्व होने से ष हुआ । पिपठीष्षु । चिकीः=कर्तुमिच्छति चिकीर्षति । चिकीर्षशब्दात् सु स् लोपादिकार्यें । अत्र न संयोगान्तलोपः । रेफात् परस्य सकारस्यैव लोपात् । इति सकारस्य संयोगान्तलोपे, रेफस्य विसर्गे । चिकीः चिकीर्षौ चिकीर्षः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

षु। चिकीः। चिकीर्षौ। चिकीर्भ्याम्। चिकीर्षु। विद्वान्। विद्वांसौ। हे विद्वन्!। ३ वसोः संप्रसारणम् ६।४।१३१। वस्वन्तस्य भस्य संप्रसारणं स्यात्। विदुषः। (२६२) वसुस्रंस्विति दः। विद्वद्भ्याम्।

४ पुंसोऽसुङ् ७।१।८९। सर्वनामस्थाने विवक्षितेऽसुङ् स्यात्। "पुमान्। हे पुमन्!। पुमांसौ। पुंसः। पुंभ्याम्। पुंसु। (२०४) ऋदुशने-

---

चिकीर्ष् = भ्याम् षत्वस्य असिद्धत्वात् सकारस्य संयोगान्तलोपे रेफस्य विसर्गे प्राप्ते 'रोः सुपि' इति नियमात् निषेधे। चिकीर्षु। अवशिष्टाः शब्दाः पूर्ववत्। ज्ञानार्जन की निरन्तर क्रिया का कर्ता विद्वान् विद्धातु से शतृ। उसके स्थान में वसु। विद्वस्=शब्दात् प्रातिपदिकात् सु हल्ङ्यादिलोपे 'उगिदचाम्' नुमि 'सान्त महतः' इति दीर्घे। सकारस्य संयोगान्तलोपे। विद्वान्। अत्र संयोगान्त लोपस्य असिद्धत्वात् नान्तस्य उपधायाः दीर्घो न भवति। इस प्रकार औ विभक्ति परे 'नुम्' 'नश्चापदान्तस्य' झलि इति अनुस्वारे। विद्वांसौ विद्वांसः। हे विद्वन् अत्र सान्तमहत् इति दीर्घो न। विद्वांसम्, विद्वांसौ विदुषः (३) वसोः = वस्प्रत्ययाना ऐसे भसंकशब्द को सम्प्रसारण हो। शसि विभक्ति से लेकर अजादिविभक्तिपरे। भसंज्ञा भवति। तत्रैव सम्प्रसारणम्। विद्वस् शब्दात् प्रातिपदिकात् द्वितीयाबहुवचने शस्=अस्, भसंज्ञायां वशोः सम्प्रसारणे व स्थाने उकृते पररूपे विदुस्+अस्, सकारस्य रु० वि०। आदेशप्रत्ययोः इति-षत्वे विदुषः। विदुषा–विद्वस्+भ्याम्, "वसुस्रंसु" इति सस्थाने दकृते। विद्वद्भ्यां, विद्वद्भिः। विदुषे विद्वद्भ्यां विद्वद्भ्यः। विदुषः विदुषोः विदुषाम्। विदुषि विदुषोः विद्वत्सु।

(४) पुंसः सर्वनामस्थानकी विवक्षामें पुंसशब्द के अन्त्य अल् सको असुङ् हो। ङित्वात् अन्त्यस्य अलः सस्य स्थाने आदेशः। पुरुष अर्थवाचक पुंस शब्दात् सु 'पुंसोऽसुङ्' सूत्रेण सस्थाने असुङ्आदेशे अनुबन्ध लोपे निमित्तापाये नैमित्तिकस्याप्यपायः। कारणके हटजानेसे कार्य भी हट जाता है। स् के हटनेसे अनुस्वार हट गया। म् के रूपमें हो गया। पुमस् स् 'उगिदचाम' नुम् अपृक्त-सकारस्य लोपे, सान्त महत् इति दीर्घे पुमान्। पुमांसौ पुमांसः। हे पुमन्। अत्र सम्बुद्धिपरे दीर्घनिषेधः। शसि विभक्तौ पुंसः पुंसा पुम्भ्याम् संयोगान्तलोपमात्रम्। मकारस्य पुनः अनुस्वारे परसवर्णे च) पुंसु (सुप् - विभक्तिपरे) सकारस्य संयोगान्तलोपे मकारस्य अनुस्वारे।

शुक्राचार्य अर्थमें प्रसिद्ध उसनस् शब्दात् सु 'ऋदुशनस् पुरुदंशो अनेहसाञ्च' सूत्र से अनङ् आदेश के ङित् होने से 'ङिच्च' सूत्रसे अन्त्य स् के स्थान में हुआ। अनुबन्धलोपे। नान्त-उपधायाः दीर्घे, हल्ङ्यादिलोपे, प्रातिपदिकान्तनकारस्य

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्यनङ्। उशना। उशनसौ। ( अस्य संबुद्धौ वाऽनङ् नलोपश्च वा वाच्यः ) हे उशन !, हे उशनन् !, हे उशनः ! हे उशनसौ। उशनोभ्याम्। उशनस्सु। अनेहा। अनेहसौ। हे अनेहः !। वेधाः। वेधसौ। हे वेधः। वेधोभ्याम्।

३५५ अदस औ सुलोपश्च ७। २। १०७। अदस औत् स्यात् सौ परे सुलोपश्च। ( ३१० ) तदोरिति सः। असौ। त्यदाद्यत्वम्। पररूपत्वम्। वृद्धिः। ६ अदसोऽसेर्दादुदो मः ८। २। ८०। अदसोऽसान्तस्य दात् परस्य

---

लोपे। उशना ( भार्गवः कविः ) उशनस् + औ = उशनसौ, अशनसः। सम्बोधनमें तीनरूप ( वा. ) अस्य—उशनस् शब्द के सम्बुद्धिपरे रहते अनङ् आदेश विकल्पसे हो। नकारका लोप भी विकल्प से। हे। उशनस् + सु अत्रसम्बुद्धि-संज्ञा, वार्तिकसे अनङ् होने से उशनन्। न लोप विकल्प से हे उशन। अनङ् नहीं हुआ सकारस्य रु० वि०। हे उशनः। उशनसम् उशनसौ उशनसः। उशनसा उशनोभ्याम् उशनोभिः। उशनसः उशनसोः उशनसाम्। उशनसि उशनसोः उशनःसु उशनस्सु। काल ( समय ) अर्थ मे अनेहस् शब्दात् सु ऋदुशनस् इति अनङ् अनुबन्धलोपे। नान्त उपधायाः दीर्घे पुनः सवर्णदीर्घे। सुलोपे न लोपे च कृते। अनेहाः अनेहसौ पूर्ववत्। ब्रह्मा अर्थ में वेधस् शब्दात् सु। यह धातु भिन्न असन्त है, अतः 'अत्वसन्तस्य चाधातोः' इति दीर्घे, सकारस्य हल्ङ्यादिलोपे रु० वि० वेधाः। सम्बुद्धिमें दीर्घ न होने से हे वेधः। वेधसौ वेधसः। वेधसा, वेधोभ्यां, वेधोभिः। वेधसे वेधोभ्याम्, वेधोभ्यः। वेधसः वेधसोः वेधमाम्, वेधसि वेधसोः। वेधस्सु। इसी प्रकार दिवौकस्, वनौकस् ( बन्दर ) चन्द्रमस् सुमनस् आदि शब्द का रूप समझें।

( ३५५ ) अदस् शब्द के अन्त्य अल् ( वर्ण ) के स्थान में औ हो। सु परे, और सुका लोप भी। तदोः सः सावनन्त्योः से दको स होता है। असौ। अदस् शब्दस्य प्रातिपदिकसंज्ञायां ततः सुविभक्तिः। सकारस्य 'त्यदादीनाम' अकारे प्राप्ते तं बाधित्वा 'अदस् औ सुलोपश्च' सूत्रेण सकारस्य औकारे। सुलोपे च कृते, 'वृद्धिरेचि सूत्रेण' अ, औ स्थाने औ वृद्धिः। 'तदोः सः' सूत्रेण अनन्त्यदकारस्य सकारे। असौ। अदस् + औ इतिदशयां 'त्यदादीनामः' सकारस्य अत्वे ( इसी को त्यदादत्वम् कहा ) पररूपत्वम्, अतोगुणे इति पररूपे अद + औ 'वृद्धिरेचि' 'इतिप्राप्तां वृद्धिं बाधित्वा प्रथमयोः पूर्वसवर्णः प्राप्तः, तस्य नादिचि' निषेधे। पुनः वृद्धिः अदौ इति स्थिते। ( ६ ) असेः—असन्तस्यः अदसः। अदस् शब्द यदि सान्त न हो तो द से परे अ आ औ कोई भी वर्ण हो ह्रस्व के स्थान में उ हो तथा द को 'म' हो जाय। आन्तरतम्यात् = वाह्यप्रयत्न देखनेपर ह्रस्वके स्थान में 'उ' दीर्घ के स्थानमें 'ऊ' होता है। प्रसङ्ग में द को म औ को बड़ा ऊ,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उद्तौ, दस्य मश्च। आन्तरतम्याद् ह्रस्वस्य–उः, दीर्घस्य–ऊः। अमू। (१५२) जसः शी। गुणः।

३५७ एत ईद् बहुवचने ८।२।८१। अदसो दात् परस्यैत ईद् दस्य च मो बह्वर्थोक्तौ। अमी। (३१) पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक्, पश्चादुत्वमत्वे। अमुम्। अमू। अमून्। मुत्वे कृते घिसंज्ञायां 'ना''–भावः। ८ न मु ने ८।२।३। "ना"–भावे कर्तव्ये कृते च 'मु'–भावोनासिद्धः।

---

इसीसूत्र से हुआ। 'अमू' प्रातिपदिकसंज्ञक अदसशब्दात् बहुवचने जस् तस्य स्थाने शी अनुबन्ध लोपे, गुणे 'अदे' इतिस्थितम्।

(७) अदस् शब्द के द से परे एत्=एके स्थान में ईकार हो। द स्थाने म' भवति। बहुवचन अर्थ हो। 'एत ऐ' इत्यनेन अदे इत्यत्र एकारस्य ईकारे। दकारस्यच मकारे अमी। एवम् अन्यत्रापि एत्वे कृते उकारमकारौ भवतः। पूर्वत्रासिद्धम् सूत्रत्रिपादी (उत्वमत्व) को असिद्धकरके पहले विभक्तिकार्य पश्चात् उत्व मत्व कार्य हो। अदस्+अम् अत्वे पररूपे अद्=अम् अत्र उत्वे मत्वे प्राप्ते च पूर्वत्रासिद्धम् इति कृत्वा विभक्तिकार्यम् 'अमि' पूर्वरूपं कृत्वा तत् उत्वमत्वे क्रियेते। अमुम् अमू, अमून् यहाँ प्रथम पूर्वसवर्णदीर्घ, नत्व, पश्चात् उत्वमत्व। तृतीया एकवचने अदस्+टा अत्वे पररूपे उत्वे मत्वे च कृते अमु+आ। शेषोध्यसखि' घिसंज्ञायाम्, 'आङोना' इति न आदेशे अमुना न च 'ना' आदेशः सपादसप्ताध्यायी, तद्दृष्ट्या त्रिपादी उत्वे मत्वे असिद्धे भवतः। कथं घिसंज्ञा कथं ना आदेशः। इति शङ्कानिवारणाय।

(८) जहाँ ना आदेश कर्तव्ये=करना हो, कृते च=या ना आदेश हो गया हो, मुभावः=उत्व मत्व आदेश असिद्ध नहीं होता। इति निषेधे। अमूभ्याम्= अदस्+भ्याम् अत्वे पररूपे सुपिचेति दीर्घे। ततः उत्वे मत्वे दीर्घस्थाने दीर्घं रु० वि०। अमीभिः=अदस्+भिस् अत्वे पररुपे अङ्गसंज्ञायां बहुवचने झलि एकारे एत ईद्बहुवचने इति ईत्वे दस्थाने मकारे रुत्वविसर्गौ अमीभिः। अत्र अतोभिस् ऐस् न भवति। 'नेदमदसोरकोः' इति निषेधात्। अमुष्मै= अदस्+ङे अत्वे पररूपे अङ्गसंज्ञायाम् सर्वनाम्नः 'ङे' स्थाने स्मै आदेशे 'अदसोः' इति प्रत्ययसकारस्य 'आदेशप्रत्यययोः' इति षत्वे। अमूभ्याम् अमीभ्यः। अमुष्मात्= ङसि स्थाने 'स्मात्' आदेशे। विशेषः। अन्यत् सर्वं पूर्ववत्। अमुष्य=अदस्+ङस् अत्वे पररूपे अङ्गसंज्ञायां 'टाङसि' सूत्रेण ङस् स्थाने 'स्य' आदेशे मुत्वे प्रत्ययसकारस्य षत्वे। अमुयोः=अद+ओस् इति स्थिते 'ओसिच' इति एकारे तस्य स्थाने अय् आदेशे उत्वे मत्वे। अमीषाम्=अदस्+आम् अत्वे पररूपे अङ्गसंज्ञायां आमि सर्वनाम्नः सुट् अनुबन्धलोपे, बहुवचने झलि, एकारे। अदेसाम्। ततः एत

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अमुना । अमूभ्याम् । अमीभिः । अमुष्मै । अमीभ्यः । अमुष्मात् । अमुष्य । अमुयोः २ । अमीषाम् ।

इति हलन्ताः पुंलिङ्गाः

---

**ईद्बहुवचने** ईत्वे मत्वे च, षत्वे रूपम् । **अमुष्मिन्** अत्र ङिस्थाने स्मिन् इति विशेषः । अन्यत् सर्वं पूर्ववत् **अमीषु**=अत्वादि कार्यम् पूर्ववत् । अदेसु इति जाते एत **'ईद्बहुवचने'** ईत्वेमत्वेमूर्धन्यादेशे च । इति प्राभाकरी टीकायाँ हलन्तपुलिङ्गाः ।

## अथ हलन्ताः स्त्रीलिङ्गाः

३५९ नहो धः ८ । २ । ३४ । नहो हस्य धः स्यात् झलि पदान्ते च । ३६० नहि वृति-वृषि-व्यधि-रुचि-सहि-तनिषु क्वौ ६ । ३ । ११४ । क्विबन्तेषु पूर्वपदस्य दीर्घः । उपानद् । उपानहौ । उपानत्सु । क्विन्नन्तत्वात् कुत्वेन

---

## अथ हलन्तस्त्रीलिङ्गाः

( ३५९ ) नहधातु के ह को ध हो झलि परे या पदान्त में । ( ३६० ) नहवृत्, वृष, व्यध् रुच् सह, तथा तनधातु क्विप् प्रत्ययान्त हो । इनके पूर्वपद को दीर्घ हो उपसमीपे चरणयोः नह्यति–धत्ते वध्यते इति उपानत् चरणत्राणकर्त्री । उपपूर्वक नह धातोः क्विप् तस्य सर्वापहारलोपे 'नहि वृति' पूर्वपदस्य दीर्घे 'नहोधः' हकारस्य धकारे, धकारस्य जश्त्वेन दकारे तस्य अवसानसंज्ञायां, विकल्पेन चर्त्वे ; उपानद् उपानद, उपानहौं, उपानहः । उपानहि उपानहोः उपनत्सु । अन्य उदाहरण नी+वृत्=नीवृत् ( देश, प्रान्त, ग्राम ) प्रावृट् ( वर्षाऋतु ) मर्मावित्—( हृदयविदारक ) नीरुक ( निस्तेज ) । अभिरुक् ( चतुर्दिक् ) प्रकाशक । दुःखासह = कष्ट सहनेवाला । परीतत्= फैलनेवाला । उष्णिह् ( वेद में उपलब्ध छन्द विशेष का नाम 'उ' उपसर्गक स्निहधातुः । 'ऋत्विक्' सूत्र से क्विन् सर्वापहारलोपे । क्विन् प्रत्ययस्य इति कुत्वेन घकारे ( महाप्राण सम्बारादि प्रयत्नदर्शनात् ) चर्त्वे । प्रातिपदिकसंज्ञा सु=स् तस्य हल्ङ्यादिलोपे उष्णिक् ग् उष्णिहौ उष्णिह । अजादि विभक्तिपरे साधारणं । हलादिविभक्तौ उष्णिह+भ्याम् हकारस्य कुत्वेन घकारे कृते तस्य जश्त्वेन गकारे ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कारस्य लोपो वा म्वोः परयो। शृण्वः। शृणुवः। शृण्मः, शृणुमः। शुश्राव। शुश्रुवतुः। शुश्रुवुः। शुश्रोथ। शुश्रुवथुः। शुश्रुव। शुश्राव, शुश्रव। शुश्रुव। शुश्रुम। श्रोता। श्रोष्यति। शृणोतु। शृणुतात्। शृणुताम्। शृण्वन्तु। ३ उतश्च प्रत्ययादसंयोगपूर्वात् ६।४।१०६। असंयोगपूर्वात् प्रत्ययादुतो हेर्लुक्। शृणु। शृणुतात्। शृणुतम्। शृणुत। गुणावादशौ। शृणवानि। शृणवाव। शृणवाम। अशृणोत्। अशृणुताम्। अशृण्वन्। अशृणोः। अशृणुतम्। अशृणुत। अशृणवम्। अशृण्व, अशृणुव। अशृण्म, अशृणुम।

---

शृण्म। आप्नुमः में संयोगपूर्व होनेसे उकारलोपो न भवति। यह सकर्मक धातु है, सुननाफल है; उसकी जननीक्रिया कर्ण इन्द्रियके साथ शब्दका संयोग है। देवदत्तः वेदं शृणोति। सुननाफल वेदमें हैं। उसके अनकूलक्रिया देवदत्तमें है। शुश्राव = श्रवणके अनुकूलक्रियावाचकपरोक्षे अर्थे लिट् तिप् णल्, द्वित्व, श्रु श्रु अ, अभ्यासकार्ये वृद्धिः आवादेशे। शुश्रु अतुस् उस्। यहाँ केवल उवङ् आदेशे शुश्रुवतुः। थल्के पित् होनेसे उसे आर्धधातुक मानकर गुण कृ सृ भृ आदिपाठमें श्रुके न होनेसे इट् न भवति। उ० पु० एकवचने 'णलुत्तमो वा' वस् मस्में भी क्रादि नियमसे इट् न। परश्वः पुराणं श्रोता। सदा श्रुतिं ( वेदं ) श्रोष्यति = श्रवणं करिष्यति। शृणोतु— श्रवणार्थकश्रुधातोः सुनना क्रियाके विषय में विधि, आज्ञा, प्रेरणा (सत्कार, निश्चय, अर्थ की सम्भावना हो, तथा आशीर्वाद अर्थ हो तब लोट् तिप्। यहाँ शप् प्राप्त है। उसे बाँधकर श्नु श्रु आदेशे उकारस्य गुणे। इकारस्य 'उ'। णत्वे। तुस्थाने विकल्पेन तातङ् शृणुतात्। तातङ् पक्षे गुणो न भवति। क्ङिति च इति गुणनिषेधात्। शृणुताम्। तस् स्थाने ताम्, अपित्सार्वधातुकं ङिद्वत्। तेन गुणनिषेधे। शृण्वन्तु— हुश्नुवोः इतियण्, मध्यमपुरुषस्य एकवचने सिप्। श्नुप्रत्यय शृआदेशश्च 'सि' स्थाने 'हि' आदेशे णत्वे। शृणुहि।

( ३ ) असंयोगपूर्वात् = संयोगसंज्ञक पूर्वमें न हो ऐसे प्रत्ययके उकारसे परे हिका लुक् हो। इति हेर्लुक्। यदा हिस्थाने तातङ् आदेशः तदा शृणुतात्। शृणवानि—मिस्थाने नि आदेशे। आट्आगमे नु, इति उकारस्य गुणे अयादेशे च। एवं वस्, मस्परे आट्, गुणे अवादेशे। नित्यं ङितः इति सलोपे. ङित् भावात् न गुणः। अशृणोत्। अत्र पूर्वदिने अनद्यतने समभूत्श्रवणक्रिया ( भूतकाले ) अर्थे लङ् शृनु आदेशे शप्, गुण, णत्वे ह्यः श्रवणमकरोत्। द्विवचने गुणो न भवति अशृणुताम् बहुवचने हुश्नुवोः इति यण् अशृण्वन्। अशृणोः सि इकारलोपे, सकारस्य रु० वि०। अशृणुतम् अशृणुत उ० पु० में मिप्को अम् अशृणवम् वस् मस् परे 'लोपश्चास्यान्यतरस्याम्' विकल्पेन उकारलोपे। अशृण्व, अशृणुव। अशृण्म; अशृणुम। श्रवणक्रियाके विषयमें आशीर्वाद श्रु + लोट शृनुयासत् णत्वे

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शृणुयात् । शृणुयाताम् । शृणुयुः । शृणुयाः । शृणुयातम् । शृणुयात् । शृणुयाम् । शृणुयाव । शृणुयाम । श्रूयात् । अश्रौषीत् अश्रोष्यत् । गम्लृ गतौ । २० । ७ इषु-गमि-यमां छः ७ । १ । ७७ । एषां छः स्यात् शिति । गच्छति । जगाम ।

५०५ गम-हन-जन-खन-घसां-लोपः क्ङित्यनङि ६ । ४ । ९८ । एषामुपधाया लोपोऽजादौ क्ङिति न त्वङि । जग्मतुः । जग्मुः जगमिथ, जगन्थ । जग्मथुः । जग्म । जगाम, जगम । जग्मिव । जग्मिम । गन्ता । ६ गमेरिट्

---

सकारलोपे शृणुयात् शृणुयुः शृणुयाः शृणुयातम् शृणुयात शृणुयां अर्थमें लिङ् यासुट् इत्यादि । श्रूयात् । अकृतसार्वधातुकयोः दीर्घः । श्रवणं क्रियात् । भूतकाले समाप्तश्रवणक्रिया अर्थे लुङ् आट तिप् सिच् वृद्धौ । अश्रौषीत् अश्रौष्टाम् अश्रौषुः । अश्रौषीः अश्रौष्टम् अश्रौष्ट । अश्रौषम् अश्रौष्व अश्रौष्म । सभी कर्तामें श्रवणक्रिया समाप्ति आवश्यक है । यदि कथामुश्रोष्यत् तदा पारम् अगमिष्यत् । उपसर्ग श्रुधातुके भी अर्थ बदलते हैं । यथा—संशृणोति ( ठीकसे सुनता है ) प्रतिशृणोति । प्रतिज्ञां करोति । उपसर्ग हठात् धातुका अर्थ बदल देते हैं । (२०) लृकार इत्संज्ञक गम् धातुका गति-गमन, ज्ञान, प्राप्ति, मोक्षजनक क्रिया अर्थ है सकर्मक है । परन्तु अनुदात्त अनिट् अकर्मक भी हैं । फल तथा क्रियाके आधार अलग-अलग होनेसे सकर्मक है । ( ४ ) इष् ( इच्छा करना ) गम् = गमन करना, यम् = निवृत्त होना, इन धातुओंके अन्त्य अल् ( वर्ण ) को 'छ' आदेश हो, शित् प्रत्ययपरे । गम्धातुमें जहाँ शप् वहाँ छ आदेश । गच्छति = गमनार्थक गम्धातोः वर्तमान-गमनक्रिया अर्थेलट्, तिप् शप् अनुबन्धलोपे गम्धातुके अन्त्यअल् म् को छ हुआ । छेच सूत्रेण छ परे तुक् = त् आगमे, तस्य श्चुत्वेन 'च' । गच्छतः गच्छन्ति । जगाम = भूतकालिकगमनक्रिया परोक्ष हो; लिट् तिप् णल् द्वित्व, गम, गम, अ हलादिशेष अतोपधायाः वृद्धिः । कुहोश्चुः । जग्मतुः=जगम + अतुस् ।

(५०५) गमनार्थक गम्, हिंसार्थकहन्, प्रादुर्भावार्थक जन, खननार्थकखन् भोजनार्थक घस् इन धातुओं की उपधाका लोप हो, अजादिकिति ङिति परे नत्वङि = अङ् परे न हो । इति उपधाया अकारस्य लोपे । जग्मतुः जग्मुः जग्मिथ । अत्र इट् विकल्पेन भवति । क्योंकि गम्धातु अकारवान् होते हुए तास्प्रत्ययमें नित्य अनिट् है । अतः थलिपरे विकल्पेन इट् जग्मिथ । इट् अभावपक्षे मकारस्य अनुस्वारे परसवर्णे जगमिथ । वस् मस् परे इट् भवति । उपधालोपश्च । जग्मिव, जग्मिम । गन्ता—गमनक्रिया कल परसों भावी हो । अस्मिन् अर्थे लुट् तास् ति; डा आदि । अनुदात्तधातु है । एकाच् उपदेशे सूत्रेण इट् निषेधः । गन्तारौ गन्तारः अनुस्वार-परसवर्णे । (६) गम् धातुसे परे सादेः = स हो आदिमें ऐसे आर्धधातुकसंज्ञक

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

परस्मैपदेषु ७ । २ । ५८ । गमेः परस्य सादेरार्धधातुकस्येट् स्यात् परस्मैपदेषु । गमिष्यति । गच्छतु । अगच्छत् । गच्छेत् । गम्यात् । ७ पुषादि-द्युताद्य्लृदितः परस्मैपदेषु ३ । १ । ५५ । श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् परस्मैपदेषु । अगमत् । अगमिष्यत् । इति परस्मैपदिनः । अथ आत्मनेपदिनः—एध वृद्धौ । १ । ८ टित आत्मनेपदानां टेरे ६।४।७९ ।

---

को इट् हो । परस्मैपद प्रत्ययपरे । गमनक्रियाका भविष्यकाल हो, तब गमिष्यति । स्यको आर्धधातुकसंज्ञा सकारादिः गमेरिट् इट् इण्से परे स्य के सको ष हुआ । गच्छतु । श्रुतेरिवार्थं स्मृतिरन्वगच्छत्, वेदके पीछे जैसे शास्त्र है । गम् + लङ्, अट्, ति, छ, तुक आदि गच्छेत् गमनक्रियाकी सम्भावना आशीर्वाद अर्थमें गम्यात् ।

( ७ ) पुषादि—जहाँ शप्के स्थानमें श्यन् विकरण हो ऐसे पुषादि = पुष पुष्टौ आदि द्युतादि द्युत् दीप्तौ इत्यादि तथा ऌदित ऌकार इत् धातु इनसे परे च्लिके स्थानमें अङ् हो । परस्मैपद परे । यथा—गम् धातोः समाप्त-उत्तरदेशसंयोग जनक क्रिया अर्थे लुङ् तिप् इकारलोपे च्लि, तस्य सिच् प्राप्ते, पुषादि द्युतादि सूत्रेण च्लिस्थाने अङ् = अ आदेशे अडागमे । अगमत् अगमताम् अगमन् । क्लैब्यं मा स्मगमः पार्थ नैत्त्वय्युपपद्यते । यदा विद्यालयम् अगमिष्यत् तदा ज्ञानम् अभविष्यत् । गम् बहुतके अप्रसिद्ध अर्थ हैं । जो उपसर्ग लगनेसे प्रसिद्ध होते हैं । जैसे—आगच्छति आ उपसर्गसे 'आना' अर्थ प्रकाशित है । अवगच्छति, अधिगच्छति=अधिकार-पूर्वक जानता है । उद्गच्छति=ऊपर उठता है । निर्गच्छति=निकलता है, अभिगच्छति= सन्मुख आता है प्रतिगच्छति = विपरीत चलता है । इति परस्मैपदिनः ।

अथ आत्मनेपदिनः = परस्मैपदीके पश्चात् आत्मनेपदीधातुओंका प्रारम्भ । वृद्ध्यर्थक एध् धातुसे करते हैं । तङ् प्रत्याहार शानच् कानच्, अनुदात्तेत्, ङित्; धातुसे आत्मनेपद होता है । एध धातुमें अकारके अनुदात्त तथा इत्संज्ञक होनेसे आत्मनेपदसंज्ञक त, आतां, झ आदि आदेश हो ।

( ८ ) टितोऌस्य=लट् लिट् लुट् ऌट् लेट् लेट् लोट् ये टिल्लकार हैं । इनके स्थानमें आत्मनेपद प्रत्ययके टिको एकार हो । एधते-माङ्गलिक अर्थमें वृद्धिके अनकूलक्रियावाचक एधधातोः वर्तमानकालिकवर्धनक्रिया अर्थे लट्, तस्य स्थाने आत्मनेपदे प्रथमपुरुषस्य त आदेशे, तिङ्, शित् सार्वधातुकौ भवति । कर्तरिशप्=अ । एधत 'अचोन्त्यादिति' अन्त्य अच्, तकारस्य अकारः तस्य टिसंज्ञा । ततः टित् आत्मनेपदानामटेरे इति सूत्रेण टिल्लकारस्य आत्मनेपदतकारस्य टिसंज्ञकस्य अकारस्य एकारे एधते ( बढ़ता है ) उपैधते ( समीपमें पहुँचता है ) समेधते । वर्धनार्थक एध् धातोः द्विवचने आताम् शप्=अ । अपित्सार्वधातुकम् ( आताम् ) ङिद्वत्

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

टितो लस्यात्मनेपदानां टेरेत्वम्। एधते। १ आतो ङितः ७।२।८०। अतः परस्य ङितामाकारस्य इय् स्यात्। एधेते। एधन्ते।

५१० थासः से ३।४।८०। टितो लस्य थासः से स्यात्। एधसे। एधेथे। एधध्वे। "२७४ अतो गुणे"। एधे। एधावहे। एधामहे। १ इजादेश्च गुरुमतोऽनृच्छः ३।१।३६। इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि। २ आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य १।३।६३। आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः। आम्प्रकृत्या तुल्यमनु-

---

भवति। तस्यफलम्। (१) आतोङित् अदन्त अङ्गसे परे ङित्प्रत्यय (जिसको ङिद्वत्भाव हुआ हो) के आको इय् हो। इतिसूत्रेण आताम् आकारस्य 'इय्' आदेशे। आद्गुणः इति गुण एकादेशे बलिपरे, यलोपे, टिसंज्ञकस्य आमः स्थाने एकारे आदेशे एधेते एधन्ते। अनेककर्तामें वृद्धिकी क्रिया वर्तमान हो, तब एध् धातोः वर्तमाने लट्, आत्मनेपदे बहुवचने झप्रत्यये तस्य अन्त आदेशे शप् टिसंज्ञकस्य एकारे शप अकारस्य अन्त्य अकारेण सह पररूपे एकादेशे। यदा वर्धन क्रिया म० पु० त्वम् इत्यत्र तिष्ठति। वर्तमाना भवति। तदा वर्तमाने लट् स्थाने थास् आदेशे, शप्। एधथास् अत्र टेरेत्वम् प्राप्नोति तं बाधित्वा।

(५१०) टित् = लकारके थास् स्थाने 'से' आदेश हो। इति सूत्रेण थासः 'से' आदेशे। एधसे। म० पु० आथाम् परे शप्, ङित्, आकारस्य इय् एकादेश गुणे टिसंज्ञक-आमः स्थाने एकारे एधेथे। तुम दोनों बढ़ते हो। यूयं एधध्वे। टेः (अम्) स्थाने एत्वे। अहं प्रतिदिनम् एधे। एध् धातोः वर्धनक्रिया त्वम्' इत्यत्र वर्तमाने भवसि, तदा उ० पु० एकवचनम् इट्=इ। टिको एकार। अतो गुणे, पररुप, एधे। आवां एधावहे। वयं एधामहे। हम लोग पूरा बढ़ रहे हैं। अतो दीर्घे एत्वे। (१) इजादेः=इच् इ उ लृ ऋ ए ओ ऐ औ ये अक्षर आदि में हों तथा गुरुमान् (दीर्घश्च गुरुसंज्ञः) ऋच्छधातु न हो, ऐसे धातुको आम् हो लिट् परे।

(२) आम्प्रत्ययवत्=आम्प्रत्यय हुआ हो जिस धातुसे, उस प्रकृतिभूत धातुके समान ही अनुप्रयोग किया हुआ कृञ् धातुसे भी आत्मनेपद हो। आम्प्रत्ययवत् पद में बहुव्रीहि समासका विचार करते हैं। वत् का इव सदृश अर्थ है, आम् प्रत्ययके सदृश कृञ्से (अर्थ नहीं बैठता) इसलिए बहुव्रीहि समास करते है कि आम्प्रत्ययो यस्मात् आम्प्रत्यय हुआ हो जिससे, वह धातु आम्प्रत्यय है। उसके सदृश परस्मैपदी कृधातु भी अनुप्रयोग दशामें आत्मनेपदी हो। गोपायश्चकारकी तरह परस्मैपदी न रहे। क्योंकि वहाँ गुप्धातुके परस्मैपदी होनेसे कृञ् भी परस्मैपदी है। परन्तु आत्मनेपदी एध के समान कृधातु भी हों। यहाँ बहुव्रीहि अतद्गुण है।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रयुज्यमानात् कृञोऽप्यात्मनेपदम्। ३ लिटस्तझयोरेशिरेच् ३।४।८१। लिडादेशयोस्तझयोरेशिरेजेतौ स्तः। एधाञ्चक्रे। एधाञ्चक्राते। एधाञ्चक्रिरे। एधाञ्चकृषे। एधाञ्चक्राथे। ४ इणः षीध्वं लुङ्लिटां धोऽङ्गात् ८।३।७८। इणन्तादङ्गात् परेषां षीध्वंलुङ्लिटां धस्य ढः स्यात्। एधाञ्चकृढ्वे। एधाञ्चक्रे। एधाञ्चकृवहे। एधाञ्चकृमहे। एधाम्बभूव। एधामास। एधिता।

---

आम् और प्रत्यय ये ( गुण ) विशेषण हैं। इनसे धातुका बोध होगा, आम् और प्रत्ययका नहीं। जैसे दृष्टसागरम् आनय। यहाँ सागर रहित सागरदृष्टव्यक्ति लाया जाता है दृष्टः सागरो येन विशेषणसे प्रधानका अन्वय क्रियामें है। तस्य प्रधानस्य अन्यपदार्थस्य गुणाः विशेषणानि संविज्ञायन्ते क्रियादर्शनेन प्रतीयते यत्र तद्गुणसंविज्ञानम्। यहाँ विशेषण अन्यपदार्थमें देखे जाते हैं जैसे— लम्बोदरम् आनय लम्बं तुन्दिलम् उदरं यस्य तम् आनय। यहाँ लम्बीतोंद विशेषण सहित विशेष्यव्यक्ति आता है। एवं लम्बौ कर्णौ यस्य स लम्बकर्णः ( खरगोश ) पीतम् अम्बरं यस्य स पीताम्बरः। विष्णुः विशेषण सहित विशेष्यका ज्ञान होता है। आम्प्रकृत्या = आम्प्रत्ययकी प्रकृति ( एधधातु ) के तुल्य = समान अनुप्रयोग किया गया। 'कृ' से भी आत्मनेपद हो। यह अन्वय आत्मनेपद होनेकी दिशामें विशेषण आम् तथा प्रत्यय नहीं मिलते।

( ३ ) लिटः = लिट्के स्थानमें आदेश हुए तझयोः = तत था झ को क्रमसे एश् इरेच् हो। त के स्थान में शित्वात्सर्वादेश, झ के स्थानमें अनेकाल्त्वात् इरेच् भवति। एधाञ्चक्रे = बढ़नेकी समाप्तक्रिया परोक्ष हो। एध लिट् आम् इजादिः गुरुमान्धातुः। ततो लिट्, लुक्। कृञ्चानुप्रयुज्यते कृ लिट् इति अनुप्रयोगे लिट् स्थाने त, द्वित्वादिकार्ये कृ कृ कर् कृ क कृ च कृ त, स्थाने एश् सर्वादेशे। मकारस्य अनुस्वारे परसवर्णे राम्। द्विवचने एधाञ्चकृ आताम् यण्। झ स्थाने इरेच्। एधाञ्चकृषे तुम परोक्षकालमें पहले ही बढ़ चुके हो। थास्को 'से' षत्व। कृ सृ भृ आदि से इट् निषेध। ( ४ ) इण् प्रत्याहारके अक्षर हो अन्तमें ऐसे अङ्ग से परे षीध्वं लुङ् लिट् सम्बन्धी ध को ढ़ हो। एधां कृ ध्वम्। कृ द्वित्वे उरत् इति अत्। हलादिशेषे श्चुत्वे यण्। मकारस्य अनुस्वारपरसवर्णौ। टिस्थाने एत्वे इणः षीध्वं सूत्रेण लिट् सम्बन्धी ध्वम् धकारस्य ढकारे। इणन्त अङ्ग कृ। एधाञ्चकृढ्वे एधाञ्चकृध्वे। अनेककर्तामें वृद्धिजनक क्रियाका समाप्त परोक्षकाल। अहं एधाञ्चक्रे। इट् प्रत्ययमें इको टित् मानकर एत्वे। मैं न जाने कब बढ़ा। वहि महि परे क्रादि नियम से इट् निषेध। टि को एत्व। हम लोग कब बढ़े थे। एधाम्बभूवे। कृ की जगह भू लिट् का अनुप्रयोग होनेसे सिद्ध हुआ। प्रक्रियापूर्ववत्। एधिता (कल बढ़नेवाले हैं) वृद्ध्यर्थक एधधातुसे अनद्यतन आगामी भविष्यकालमें भविताकी

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एधितारौ । एधितारः । एधितासे । एधितासाथे ।

५१५ धि च ८ । २ । २५ । धादौ प्रत्यये परे सस्य लोपः । एधिताध्वे । ६ ह एति ७ । ४ । ५२ । तासस्त्योः सस्य हः स्यादेति । परे । एधिताहे । एधितास्वहे । एधितास्महे । एधिष्यते । एधिष्येते । एधिष्यन्ते । एधिष्यसे । एधिष्येथे । एधिष्यध्वे । एधिष्ये । एधिष्यावहे । एधिष्यामहे । ७ आमेतः ३ । ४ । ९० । लोट एकारस्याम् स्यात् । एधताम् । एधेताम् । एधन्ताम् । ८ सवाभ्यां वामौ ३ । ४ । ९१ । सवाभ्यां परत लोडेतः क्रमाद् वामौ स्तः । एधस्व । एधेथाम् । एधध्वम् । ९ एत ऐ ३ । ४ । ९३ । लोडुत्तमस्य एत

---

तरह अनेककर्ता बढ़नेवाले हों तब एधितारः । एधितासे । तुम कल बढ़नेवाले हो । थासः से तासः ( स्त्योः ) सकारस्य लोपः । ऐधितास्+आथाम् । टेः (आम्भागस्य) एत्वे एधितासाथे । एधितास् ध्वम् ।

( ५१५ ) धादौ धकार आदिमें हो ऐसाप्रत्ययपरे हो तो 'स' का लोप हो । इति सूत्रेण तास् सकारस्य लोपे धकारादिप्रत्ययः ध्वम् आदौ अस्ति । एधिताध्वे ( तुमसब बढ़ोगे ) । ( तास् और असधातुके स को ह हो, एकारपरे । इट्को टित् एत्व करनेपर तास् के सको ह हुआ एधिताहे सामान्य भविष्यकालमें बढ़नेकी क्रियाका सूचक लृट् ( वह बढ़ेगा ) एधिष्यते ( वे दोनों बढ़ेंगे ) । एधिष्यन्ते = वे सब बढ़ेंगे । इसी प्रकार अन्यकर्तामें भी भविष्यकालिकवर्धनक्रियाका प्रयोग समझे । ( ७ ) एत आम् । लोट् सम्बन्धी एकारको आम् हो । वर्धन क्रियाकी प्रेरणा या आशीर्वादको कहना हो एध लोट् त शप् एत्वे एधते । आमेतः एकारस्य आम् कृते एधताम् । तुम सदा बढ़ो । आताम् इत्यस्य ङिद्वद्भावे कृते अतो ङितः इति आकारस्य इय आदेशे एकादेशगुणे एत्वे आम् आदेशे एधेताम् । वे दोनों सदा बढ़ें । सर्वे छात्रा एधन्ताम् ।

( ८ ) सवाभ्याम् सकार वकारसे परे लोट् सम्बन्धी एकारको क्रम से 'व' 'अम्' हों । आमेतः को बाधकर । थासः से ।, एध से यहाँ स से परे एको व । एधस्व एधध्वम् । अत्र ध्वम् को एत्व करने पर ( व ) से परे एको अम् । आमेतः को बाधकर । उ० पु० में टिको एत्व होनेपर उस एकारको ( ९ ) लोट लकारके उ० पु० के ए को ऐ हो एधै एधावहै हम, सब सदा बढ़ें । आडुत्तमस्य पिच्च से आट् आगम शप् एध+आ+ए । सवर्णदीर्घे । टितात्मनेपदानाम् एत्वे ( एकारको आमेतः से प्राप्त आम् को बाधकर ) एतऐ से ऐ आदेशे । ऐधत = कल बढ़ा था । वृद्धिजनक क्रियावाचक एध् धातोः समाप्तअनद्यतनवर्धन क्रियाकाले लङ् आट्, अजादीनां सूत्रेण एध् इत्यस्य आट् टित् आदि को । आटश्चेतिवृद्धिः । लङ्स्थाने आत्मनेपदे त प्रत्यये शप् ऐधत ऐधेतां रामलक्ष्मणौ । छात्राः ऐधन्त । बढ़ने की समाप्त

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ऐ स्यात् । एधै । एधावहै । एधामहै । (१९७) आटश्च । ऐधत । ऐधेताम् । ऐधन्त । ऐधथाः । ऐधेथाम् । ऐधध्वम् । ऐधे । ऐधावहि । ऐधामहि ।

५२० लिङः सीयुट् ३ । ४ । १०२ । सलोपः । एधेत । एधेयाताम् । १ झस्य रन् ३ । ४ । १०५ । लिङो झस्य रन् स्यात् । एधेरन् । एधेथाः । एधेध्वम् । २ इटोऽत् ३ । ४ । १०६ । लिङादेशस्य इटोऽत् स्यात् । एधेय । एधेवहि । एधेमहि । ३ सुट् तिथोः ३ । ४ । १०७ । लिङस्तथोः सुट् । यलोपः । आर्धधातुकत्वात् सलोपो न । एधिषीष्ट । एधिषीयास्ताम् ।

---

क्रिया का कर्ता म० पु० । उ० पु० ऐधे एध लङ् आट् आटश्च वृद्धिः इट् प्रत्यये शप् गुणे । ऐधामहि अतोदीर्घो यञि । हम लोग बढ़े थे ।

( ५२० ) लिङ्के स्थान में आत्मनेपदसंज्ञक प्रत्ययों को सीयुट् आगम हो । उट् इत् । सीय् अंशः शिष्यते । लिङः सलोपो अनन्त्यस्यसे सलोप । वृद्धिक्रिया के विषय में जहाँ आशा, अनुरोध, निवेदन, स्वागत, निश्चय, प्रार्थना की संभावना हो वहाँ लिङ् एध् लिङ् तस्य स्थाने आत्मनेपदे त शप् लिङः स्थाने आत्मनेपदस्य तकारस्य सीयुट् आगमः । सार्वधातुकसंज्ञकः । यदागमपरिभाषया अनन्त्य-सकारस्य लोपः । लोपोव्योर्वलि वल-परे यकारस्य लोपः । एध इत गुणे । एधेत । एधेयाताम्—एध अ सीय आताम् । सकारलोपे, गुणे, कृष्ण राम बढ़े । बहुवचने एध अ ईय् झ ( १ ) लिङ् के स्थान में आदेश झ को रन् हो । गुणे यलोपे एधेरन् ( धार्मिकस्य धनानि ) अकर्मकधातु में फल, क्रिया दोनोंका आधार एक ही है । धन में ही वृद्धिरूप फल है । बढ़ना क्रिया भी । त्वम् एधेथाः युवाम् एधेथाम । यूयं एधेध्वम् । तुम सब बढ़ो । उ० पु० एक व० एध् अ इ य् इ ( २ ) लिङ्के स्थान में हुए आदेश इट्के स्थान में अत् = अ हो । वर्णसम्मेलने हम बढ़े । तुम दोनों सदा बढ़े ( ३ ) लिङ्के स्थान में त या थ हो उसको सुट् हो, य लोप । अर्धधातुकसंज्ञा होने से लिङः सलोप नहीं होता । बढ़नेके लिए शुद्ध आशीर्वाद अर्थ के अनुकूल क्रिया उ० पु० का कर्ता हो, तब एध+इट्, सीयुट् सुट् ( लिङ् ) त अनुबन्ध लोपे लिङ्ः सीयुट् त परे सुट् लिङाशिषि आर्धधातुकसंज्ञा वलादिइट् । सकार लोपो न । सार्व । षत्वेष्टुत्वे एधिषीष्ट । द्विवचने आताम्, एधिषीयास्ताम्, तत्र तकारपरे सुट् । बहुवचने झस्यरन् यकारलोपः । एधिषीरन् । वे लोग सदा उन्नति करें । थास् को सुट् षत्व ष्टुत्व एधिषीष्ठाः । तुम सदा उन्नति करो । तव लोकपरलोको एधिषीयास्थाम् एधिषीध्वम् । ए ध इ षीयध्वम् । यहाँ इट् सीयुट होनेसे इणन्त अङ्ग नहीं है । इसलिए इणः षीध्वमसे ध को ढ नहीं हुआ । उ० पु० में इट्को अत्=‘अ’ होने से एधिषीय । हम सदा बढ़ें । यहाँ वर्धन क्रिया पूर्ण रूप से किसी समय समाप्त हुई हो उस भूतकाल में लुङ्, आत्मनेपते त, आट्

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एधिषीरन् । एधीषीष्ठाः । एधिषीयास्थाम् । एधिषीध्वम् एधिषीय । एधिषीवहि । एधिषीमहि । ऐधिष्ट । ऐधिषाताम् । ४ आत्मनेपदेष्वनतः ७।१।५ । अनकारात् परस्यात्मनेपदेषु झस्य अदित्यादेशः स्यात् । ऐधिषत । ऐधिष्ठाः । ऐधिषाथाम् । ऐधिढ्वम् । ऐधिषि । ऐधिष्वहि । ऐधिष्महि । ऐधिष्यत । ऐधिष्येताम् । ऐधिष्यन्त । ऐधिष्यथाः । ऐधिष्येथाम् । ऐधिष्यध्वम् । ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि । कमु कान्तौ । २ ।

५२५ कमेर्णिङ् ३ । १ । ३० । स्वार्थे ङित्वात्तङ् कामयते । ६ अयामन्ताल्वाय्येत्निविष्णुषु ६ । ४ । ५५ । आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् । कामयाञ्चक्रे । ( ४६९ ) आयादय इति णिङ् वा ।

---

वृद्धिः । च्लि, सिच्, इट्, षत्वष्टुत्वे । ऐधिष्ट । रावणः । इदानीं देवनामुनी ऐधिषाताम् । ( ४ ) अनतः अनकारात् = अकाररहित वर्ण से परे आत्मनेपद झ को अत् आदेश हो । झोन्तः को बाधकरके । एध्, इट्, सिच्, झ अनुबन्ध लोपे 'आत्मनेपदेष्वनतः' अकार भिन्नएधि का इ, या सिच् का स् उससे परे झ स्थाने अत् ( अ ) आदेशे षत्वे ऐधिषत् धार्मिकाः । थास् परे सिच् सकारस्य षत्वे ष्टुत्वे ऐधिष्ठाः ऐधिढ्वम् । एध् लुङ् आट् वृद्धिः ध्वम् च्लि, सिच् इट्, सकारलोपे 'धिच' सूत्रेण । इणः षीध्वम् सूत्रेण ढत्वं प्रत्यय परे इणन्त अङ्ग एधि इत्यतःपरे धस्य ढ़कारे । क्योंकि सिच् प्रत्यय धातु से होता है सिच् को इट् । इट् सहित सिच्को तदादि मानकर अङ्गसंज्ञा । वर्धनक्रिया के कार्यकारणभाव में लृङ् । यदा पिता ऐधिष्यत, पितरौ ऐधिष्येताम् तदा पुत्राः ऐधिष्यन्त, यदा अहम् ऐधिष्ये ( बढ़ेंगे ) तदा वयम् ऐधिष्यामहि ( २ ) उकार इत्संज्ञक कम् धातु का कान्ति=इच्छानुकूल क्रिया अर्थ है । यहाँ कामनारूप फल अलग रहता है, उसके अनकूल क्रिया अन्यत्र, होने से सकर्मक धातु है ।

( ५२५ ) कम् धातु से णिङ्=इ प्रत्यय हो स्वार्थः वही अर्थ णिङ् का भी है । दोनों अभिन्न हैं णिङ् में ण 'इत्' का फल वृद्धि है । और ङ् इत् का फल भी कम् इ इति दशायां णितिपरे उपधायाः अकारस्य वृद्धिः कामि शब्दस्य सनाद्यन्ताः धातवः इति धातुसंज्ञा । ततः लकाराः उत्पद्यन्ते ङित् होने से तङ् आत्मनेपदे त, शप, इकारस्य गुणे अय् टित् आत्मने टेरे, एकारे कामयेत । इच्छा करता है बालकः मोदकं कामयेते, कामयन्ते । कामयेसे कामयेथे, कामयध्वे । अहं पुस्तकं कामये, आवां कामयावहे, वयं कामयावहे ।

( ६ ) आम् अन्त् आलु आलु आय्यइत्नु, इष्णु, ये प्रत्यय एक भी परे हो तो णिको अय् आदेश हो भूतकालिक परोक्ष कामनाक्रिया अर्थमें कम् धातुसे लिट्, स्वार्थमें णिङ्, सनाद्यन्ता धातुसंज्ञा कासनेकाच् 'आम्' वक्तव्यः । आम् परे णि

CC-O. Vasishtha Tripathi Collection. Digitized by eGangotri

चकमे। चकमाते। चकमिरे। चकमिषे। चक्रमाथे। चकमिध्वे। चक्रमे। चकमिवहे। चक्रमिमहे। कामयिता, कमिता। कामयितासे। कामयिष्यते, कमिष्यते, कामयताम्। अकामयत। कामयेत। कामयिषीष्ट। ७ विभाषेटः ८।३।७९। इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा ढः।

---

स्थाने अय् आदेशे, आम् अन्त आलु, सूत्रेण। कामयाम् लिट्। आमः इति लिट् लुक्। कृ लिट् इति अनुप्रयोगे लिट् स्थाने 'त' तस्य एश् आदेशे। द्वित्वादिकार्ये कामयाञ्चक्रे कामयाञ्चक्राते कामयाञ्चक्रिरे अत्र झ स्थाने इरेच् आदेशे लिटस्त-झयोरेशिरेचि। कामयाञ्चकृषे कामयाञ्चक्राथे कामयाञ्चकृढ्वे कामयाञ्चक्रे काम-याञ्चकृवहे, कामयाञ्चकृमहे। आयादयः इति। आयादयः आर्धधातुकेवा सूत्रसे वा का अधिकार आनेपर णिङ् विकल्पसे होता है। आय् आदि गण पठित है। अतः आय् नहीं होगा। तो कम् त, तस्य एश्, द्वित्वादिकार्ये कम-कम ककम् चकम् टित् लकारों में सर्वत्र टिको एत्व होता है। कदा चकमे ( कवि इच्छा किया ) चक्रमाते—आतां विभक्तिपरे। चकमिरे—उन लोगों ने काम किया। त्वम् चकमिषे। यूवां परीक्षां दातुं चकमाथे। चकमिढ्वे। चकमे, चकमिवह चकमिमहे। कामयिता—कामना, दीप्ति, प्रकाश, अर्थवाचक कम् धातोः आगामिदिनभविष्यकाले अर्थे लुट्। कर्णेणिङ् विकलपसे होनेपर, अय् तास, झ, आदि। पक्षे कमिता। दोनों रुपोंमें भविष्यकालिक कामना क्रियाकी शक्ति है। उसका प्रकाशक विकल्प है। सामान्य भविष्य कालमें कामना, दीप्ति, प्रकाशके अनकूल क्रिया हो. तब कामयिष्यते। उक्त अर्थ णिङ् के विना भी दृष्ट है कमिष्यते=कामना करेंगे। कामयताम्= कामना, कान्ति, इच्छाके अनुकूल क्रियामें, प्रेरणा आज्ञा, आशीर्वाद आदि की विवक्षामें, लोट् 'आमेतः' एकारस्य आम् ' आप कामना करें। कामयेतां कामयन्ताम्। कामयस्व कामयेथाम् पठनाय कामयध्वम्। पढ़नेके लिए पूरी कामना करो। कामयै, कामयावहै, कामयामहै। हम सब अध्ययन करना चाहते हैं। अकामयत्=पढ़नेकी इच्छाकी थी। गुरुशुश्रुषां कामयेत् कम् णिङ् ( उपधा वृद्धिः ) कामि सनाद्यन्ताः धातुसंज्ञकाः। इच्छाकी सम्भावना अर्थमें लिङ्, तिप् सीयुट्, शप् अनुबन्धलोपे गुणे आयादेशे। पुनः गुणे। कामयेत्। कामयेयातां कामयेरन्। कामयेथाः कामयेयाथां कामयेध्वम्। कामयेय, कामयेवहि। कामयिषीष्ट। कामना विषयक आशीर्वाद अर्थमें लिङ्=मेरा आशीर्वाद है कि तुम सदा प्रगतिकी कामना करो। ( ७ ) इटः विभाषा। इण् प्रत्याहार अक्षरसे परे जो इट् उससे परे सीध्वम् और लुङ् लिट् सम्बन्धी 'ध' को ढ हो; विकल्पसे। कामि इट् सीयुट् ध्वम् अनुबन्धलोपे। यहां इण् कामिमें इ है उससे परे इट् है उससे भी परे सीध्वम् का ध उसको ढ़ हुआ। कामयिषीढ़्म्। णिङ् के अभाव पक्षमे कम् इट् सीयुट् सुट् त

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कामयिषीढ्वम्; कामयिषीध्वम्। कमिषीष्ट। कमिषीध्वम्। ८ णि-श्रि-द्रु-स्रु-भ्यः कर्तरि चङ् ३।१।४८। ण्यन्ताच्छ्र्यादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुङि परे। कामि अ त इति स्थिते। ९ णेरनिटि ६।४।५१। अनिडादावार्धधातुके परे णेर्लोपः स्यात्।

५३० णौ चङ्युपधाया ह्रस्वः ७।४।१। चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात्। १ चङि ६।१।११। चङि परे अनभ्यासस्य धात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेर्द्वितीयस्य। २ सन्वल्लघुनि चङ्परेऽनग्लोपे ७।४।९३। चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः

---

षत्वे ष्टुत्वे कमिषीयास्तां कमिषीरन् कमिषीष्ठाः कमिषीयास्थां कमिषीध्वम्। कमिषीय कमिषीवहि कमिषीमहि। इच्छार्थक कम् धातोः स्वार्थे णिङ् उपधावृद्धिः। भूतार्थे=प्रमाप्तकामनाजनकक्रिया अर्थे लुङ्। आत्मनेपदे 'त' अट् आगने च्लि इट्। अकाम इ च्लि त। सिच् प्राप्ते तं बाधित्वा। (८) णि=ण्यन्तधातु, श्रि सेवा, द्रु गति स्रु-प्रस्रवणे, इन धातुओंसे परे च्लि के स्थानमें चङ् हो कर्त्रर्थे=कर्तृवाच्य लुङ् परे। यदि कर्मवाच्य लुङ् हो तब च्लि को चङ् नहीं। चङ् च् ङ् इत् 'अ' शिष्यते। कामि अत इति दशायां चङ् आकारको आर्धधातुकसंज्ञा। (९) णेः=णिस्थाने, अनिट्–न इट्, अनिडादौ=इट् आदिमें हुआहो ऐसे आर्धधातुक परे णिलोप हो। अनिट् आर्धधातुकचङ् का अ है, उसके परे णि का लोप। अकाम अत इति स्थिते।

(५३०) णौ, चङि, उपधाया, चङ् परक णिपरे जो अङ्ग उसकी उपधाको ह्रस्व हो। अङ्गसंज्ञक काम् उसकी उपधा 'आ' को ह्रस्व। अकम् अत। (१) चङ् परे हो तब अनभ्यासस्य=जिसको अभ्याससंज्ञा न हुई हो, द्वित्व न हुआ हो, ऐसे धातुका अवयव प्रथम एकाच को द्वित्व हो। अजादि धातु हो तो, द्वितीय एकाच् को द्वित्व हो। द्वित्वे, कम्-कम् ककम् चकम् अत्। (२) चङ्परे णौ यदङ्ग=चङ् परक णिपरे जो अङ्ग, उसका अवयव लघुनि–लघुपरक, लघु हो परे जिससे ऐसा अभ्याससंज्ञक, उसको सन्वद् ( सन इव कार्यम् )। सन् परे रहते जो कार्य होना हो उसके समान कार्य यहाँ भी हो। अनग्लोपे=अक=इ, उ, ऋ लृ का लोप न हुआ हो तो। णौ=णि परे रहते। प्रसङ्ग में स्थानिवद्भाव से चङ् परक णि अ है उसके परे अङ्गसंज्ञक अच् का है, उसका अवयव अभ्यास च है च में अ लघु होनेसे अभ्यास अच्कथत् में णिच् होनेपर अकार लोप हुआ है वहाँ सन्वद्भाव इत्व नहीं होवे। च है, च में अ लघु होनेसे लघुपर भी है। आगे कम् का 'क' भी लघुसंज्ञक है। यहाँ सन्वद्भाव होनेसे आगे कार्य होगा। यहाँ अक् अकारका लोप णि परे मानकर नहीं हुआ है। इस सन्वद्भावके दोफल-अभ्यासको इकार, उसीको दीर्घ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति। ३ सन्यतः ६। ४। ७९। अभ्यास-स्यात् इत् स्यात् सनि। ४ दीर्घो लघोः ७। ४। ९४। लघोरभ्यासस्य दीर्घः स्यात् सन्वद्भावविषये। अचीकमत। णिङभावपक्षे (कमेश्च्लेश्चङ् वाच्यः) अचकमत। अकामयिष्यत। अकमिष्यत। अय गतौ।३। अयते।

५३५ उपसर्गस्यायतौ ८। २। १९। अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात् प्लायते। पलायते। ६ दयायासश्च ३। १। ३७। दय् अय् आस् एभ्य आम् स्याल्लिटि। अयाञ्चक्रे। अयिता। अयिष्यते। अयताम्। आयत। अयेत। अयिषीष्ट। (५२७) विभाषेटः अयिषीढ्वम्,

---

(३) सनि अतः। अभ्यासके अ को इ हो सनिपरे। इससे स में अ को 'इ' हुआ। (४) दीर्घोलघोः अभ्यासके लघुसंज्ञक को दीर्घ हो, सन्वद्भावके विषयमें। चङ् के अ को सन्वद्भाव हुआ। अभ्यासका लघु चि में इ को दीर्घ अचीकमत्। अचीकमेताम् अचीकमन्त। अचीकमथाः अचीकमेथाम अचीकमध्वम् अचीकमें अचीकमावहि अचीकमामहि। स्वार्थिक प्रत्यय णिङ्के अभाव पक्षमें, सन्वद्भाव इत्व दीर्घ नहीं होते। तब च्लि को चङ् करनेके लिए वार्तिक कामसे परे च्लि के स्थानमें चङ् बोलना चाहिए। अचकमत्। द्वित्वादिकार्यें रुपम्। कान्तिः इच्छा जनक भूतकालिक क्रिया अर्थ सभी कर्तामें है यदा अकामष्यत् तदा प्रयत्नेन फलमभविष्यत्। णिङ् अभावे अकमिष्यत्। ३ अय् धातुका गति जाना, उत्तर देशसंयोगके अनकूल क्रिया अर्थ है। गत्यर्थक अय् धातुसे गति क्रियाके वर्तमान रहनेपर, लट् त शप् एत्व अयते। यदि प्र या परा उपसर्ग जोड़ दिया जाय (जोड़ने वाली सन्धि सवर्णदीर्घ होगी।) प्रायते परायते इति दशायाम्।

(५३५) अयति परस्य = अय् धातु परे उपसर्गके रेफको 'ल्' हो। र को ल होनेसे प्लायते, पलायते। प्राण बचाकर तेज अनद्यतन भूतकाल, गत्यर्थक अय् धातोः लिट्। (६) दय् अय् आस् इन धातुओंसे आम् हो लिट् परे। इति आम्। दयाम् लिट्। लिट्, लुक्, लिट् परक कृ अनुप्रयोगे त, स्थाने लिटस्त झयो रेशिरेच् इति एश् आदेशे कृ इत्यस्य द्वित्वादिकार्यें अनुस्वारपरसवर्णौ। गतसम्वत्सरे स अयाञ्चक्रे आयाञ्चक्राते अयाञ्चक्रिरे (जग्मुः। अद्यभिन्न भविष्यकालिक क्रिया-वाच्ये लुट् अयिता = गन्ता। अयिष्यते (गमिष्यत) अयताम् (व्रजतु) आयत (अव्रजेत्) अयेत्=गच्छेत्। अय शप् सीयुट् त। अयिषीष्ट = अय् इट् सीयुट् सुट् षत्व ष्टुत्व। अयिषीयास्ताम् अयिषीरन्। अयिषीष्ठाः अयिषीयास्थाम्। अयिषीध्वम्। अत्र विभाषेटः सूत्रेण ढत्वविकल्पे। यहाँ इण् 'य' से परे इट् उससे भी परे इट् उससे भी परे षीध्वम्के ध को ढ़ हुआ। अयिषीढ्वम् गत्यर्थक क्रिया समाप्त हो भूतकालवाचक लुङ् आट् आत्मनेपदे 'त' सिच् आर्धधातुकसंज्ञा, इट्, वृद्धिः,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अयिषीढ्वम्। आयिष्ट। आयिढ्वम्, आयिढ्वम्। आयिष्यत। द्युत दीप्तौ। ४। द्योतते। ७ द्युति-स्वाप्योः संप्रसारणम् ७। ४। ६७। अभ्यासस्य। दिद्युते। ८ द्युद्भ्यो लुङि १। ३। ९१। द्युतादिभ्यो लुङः परस्मैपदं

---

षत्वे ष्टुत्वे। आयिष्ट। आयिषाताम् आयिषत। आयिष्ठाः, आयिषाथाम् आयिढ्वम्। आयिषि आयिष्वहि आयिष्महि। आयिष्यत आयिष्यन्त। आयिष्यथा आयिष्येथाम् आयिष्यध्वम् ढ्वम्। आयिष्ये आयिष्यावहि आयिष्यामहि।

( ४ ) द्युत धातुका दीप्ति—चमकना, प्रकाश करनेके अनकूल क्रिया अर्थ। विशेषकर विद्युत् विद्योतते। ( बिजली चमकने ) अर्थमें प्रसिद्ध है। यह चमकना विद्योतनक्रिया वर्तमान रहे तब वर्तमाने लट् द्युत् + लट् आत्मनेपदे प्र० पु० एक वचने त शप् = अ, लघूपधगुणे ओकारे। टेरे = टि को एकार। द्योतते। द्योतेते द्योतन्ते। यदा विद्योतन क्रिया ( अनद्यतन परोक्षकालमें ) समाप्त हो उस अर्थमें लिट् आत्मनेपदे 'त' तस्य स्थाने एश् ( लिटस्तझयोरिति सूत्रेण ) द्वित्वे द्युत् द्युत् हलादिशेषे द्यु धुत् ए। ( ७ ) द्युत ओर स्वप् धातुके अभ्याससंज्ञकको सम्प्रसारण हो इति अभ्यास द्यु इत्यत्र यकारस्य सम्प्रसारणे इकारे। सम्प्रसारणाच्च पूर्वरुपे। दिद्युते दिद्युताते दिद्युतिरे। दिद्युतिषे। दिद्युताथे दिद्युतिध्वे। दिद्युते, दिद्युतिवहे दिद्युतिमहे। सभी पुरुषके कर्तामें अनद्यतनभूतकालिक चमकना क्रिया रहेगी। द्योतिता = श्वः विद्युत् प्रकाशयिता द्योतयिष्यते। प्रकाशं करिष्यति। द्योतताम् ( चाक चिक्यमे वर्धतां ) पहले ही दीप्तिक्रिया समाप्त हो। लङ् अद्योतत्। चमकनेके अनकूलक्रियाकी प्रेरणा हो विधिलिङ्। द्योतेत्। प्रकाशित होना चाहिए। प्रकाशित होनेके लिए आशीर्वाद कहना हो तो तब द्योतिषीष्ट। ( ८ ) द्युद्भ्यो=द्युतादिगण पठित धातुओंसे परे लुङ्के स्थानमें परस्मैपद तिप् तस् झि आदि विकल्पसे हों। बिजली चमकी। इस अर्थमें लुङ् अट् त च्लि। अद्युत्, च्लित्। लुङ् स्थाने विकल्पेन परस्मैपदप्रत्यये परे। पक्षमें पुषादिसूत्रसे च्लि के स्थानमें सिच् को बाधकर अङ् हुआ। ङित होनेसे क्ङितच गुणनिषधें।

अद्युतत्। परस्मैपदके अभाव में आत्मनेपद सिच् इट् गुण षत्वे ष्टुत्वे। अद्योतिष्ट, अद्योतिषाताम्, अद्योतिषत। अद्योतिष्ठाः अद्योतिषाथाम् अद्योतिढ्वम्। अद्योतिषि अद्योतिष्वहि अद्योतिष्महि। द्युत् धातुकी प्रक्रिया शैली की तरह श्विता, वर्णे इत्यादि १४ धातुओं को समझें। यथा—( ५ ) आकार इत्संज्ञक श्वित् धातुका सफेद रङ्ग रङ्गने के अनुकूल क्रिया अर्थ। श्वेतते। रागकरणं प्रसादम् ( महल ) श्वेतते = शुभ्रादिभिः ( चूना आदि से ) श्वेतं करोति ( सफेदी करता है ) शिश्विते= न जाने कब रङ्ग दिया। श्वेतिता = कल या परसों रङ्ग करेगा। श्वेतिष्यते। ( मैं भी मकान को सफेद करुँगा )। श्वेतताम् ( वे भी स्वच्छ करें )। त्वमपि



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वा स्यात्। (५०७) पुषादीत्यङ्। अद्युतत्। अद्योतिष्ट। अद्योतिष्यत। एवं श्विता वर्णे।५। ञिमिदा स्नेहने।६। ञिष्विदा स्नेहनमोचनयोः।७। मोहनयोरित्येके। ञिक्ष्विदा चेत्येके। रुच दीप्तावभिप्रीतौ च।८। घुट परिवर्तने।९। शुभ दीप्तौ।१०। क्षुभ संचलने।११। णभ तुभ हिंसा-

---

श्वेतस्व। अश्वितत। वह कल ही सफेदी कर लिया। श्वेतेत्। यदि चूना छूते तो बहुत अच्छा होता। श्वेतिषीष्ट। तुम सदा सफाई करते रहो। अश्वेतिष्ट। वे स्वच्छता कर चुके। यदि गृहम् अश्वेतिष्यत् तदा आकर्षणमभविष्यत्। (६) ञि इत् आकार इत्। मिद् धातुका स्नेहन, स्निग्धत्वकरणम्, चिकना होनेके अनुकूल क्रिया अर्थं। मेदते (उपानहौ) (जूता चिकना करता है) मिमिदे। पहले ही चिक्कन कर चुके। प्रत्येक लकारों में उपर्युक्त दृष्टि से अर्थ करना चाहिए। (७) स्विद् धातु का स्नेहन, गीला, पसीना, मोचनम्, त्यागः, होने की क्रिया अर्थ। स्वेदते गीला होता है या पसीजता है। शरीर पसीना छोड़ रहा है। शरीरं स्वेदं स्वेदते। सिस्विदे। पहले ही पसीना छोड़ चुका। स्वेदिता = कल छोड़नेवाला है। स्वेदताम् (पसीझते रहो) अस्वेदत् (चू चुका) स्वेदेत्। स्वेदिषीष्ट। अस्विदत् अस्वेदिष्ट। अस्वेदिष्यत् जब पसीना होगा तब आराम आवेगा। कोई कोई मोचनयोः की जगह मोहनयो (मोहित होना अर्थ) कहते हैं। कोई स्विद्का पाठ करते हैं।

(८) रुच् धातुका दीप्ति, प्रकाश, चमकना, अभिप्रीती, इच्छा का विषय होना पसन्द आना, रोचते बालकाय कन्दुकं, मोदकंवा। (रुचि अर्थ में चतुर्थी) रुरुचे। चमका या पसन्द आया। श्वः उत्सवः रोचिता। सदा स्वाध्यायः मह्यं रोचिष्यते तुभ्यमपि रोचताम् अरोचत। यदि छात्रान् रोचेत। तदा आशीर्वादे अरोचिषीष्ट। अतएव अरुचत्-अरोचिष्ट। यदि अरोचिष्यत् तदा कल्याणमभविष्यत् (९) घुट् परिवर्तने। घुट् धातुका परिवर्तन (एकस्यैव वस्तुनः सर्वप्रकारेण घर्षणं (घोटना) घोटते भङ्गं, जुघुटे। अनद्यतनपरोक्षकालिकसमाप्तसंघर्षण क्रिया। स श्वः घोटिता। सदा घोटिष्यते। भङ्गं घोटताम्। यथा स अघोटत। यथा ते घोटेरन्। घोटिषीष्ट। अघुटत् अघोटिष्ट (१०) शुभ धातु का भी दीप्ति प्रकाशक अर्थ है। शोभतेशुशुभे, शोभिष्यते अशोभत अशोभिष्ट (११) क्षुभ् धातुका संचलन स्वभावत्यागेन वर्तनम्। विचलित, व्याकुल, या क्षुब्ध होना। सभी लकारों का अर्थ अनुसंधान कर धातुरूपों को समझें। णभ् धातु हिंसा-प्राण वियोग के अनकूल क्रिया। किसी आत्मा को कष्ट की क्रिया अर्थ। नभते=भयानक भय पैदा करता है। नेभे (परोक्षहिंसा करचुका) नभिष्यते। हिंसा करेगा। अनभिष्यत् (१२) तुभ् धातु का भी हिंसा, प्राण वियोग, कष्ट प्रदानजनक

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

याम् । १३ । स्रंसु भ्रंसु ध्वंसु अवस्रंसने । १६ । ध्वंसु गतौ च । १७ । स्रम्भु विश्वासे । १८ । वृतु वर्तने । १९ । वर्तते ववृते । वर्तिता । ९ वृद्भ्यः स्यसनोः १ । ३ । ९२ । वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्यात् स्ये सनि च ।

५४० न वृद्भ्यश्चतुर्भ्यः ७ । २ । ५९ । वृतु-वृधु-शृधु-स्यन्दुभ्यः सकारा-

---

क्रिया अर्थः । तोभते ( तोड़ाई करता है ) हस्तपादौ तोभते । तोभिता = हाँथ पाँव तोड़ने वाला है । यथा—युद्धे अतोभत् । हिंसा की क्रिया समाप्त हो तो अतुभत् अतोभिष्ट ( १४ ) स्रंस् भ्रंस् तथा ध्वंस् इन धातुओं का अवस्रंसन, स्खलन, लड़खड़ाना । खिसकना गिरना, नाश होना के अनुकूल क्रिया अर्थ । स्रंसते, बभ्रंसे, दध्वंसे, ध्वसिता । स्रंसिषीष्ट अस्रसत अभ्रंसीष्ट । अस्रंसीष्ट । एवं अध्वसत अध्वंसीष्ट ।

( १८ ) उकार इत् स्रम्भ धातुका विश्वासानुकूल क्रिया अर्थः । प्रायः वि उपसर्गक ( विश्वास होता है ) । स्रम्भते, सस्रम्भे = विश्वास क्रिया, स्रम्भिता= विश्वास करेगा । अस्रम्भत् विस्रम्भताम् । विस्रम्भेत् विस्रम्भिषीष्ट । अस्रभत अस्रम्भिष्ट । उकार इत् वृत् धातुका वर्तन, सत्ता, होना, उपस्थित रहना, विद्यमान, व्यवहारजनक क्रिया अर्थः । इस धातुमें फल और क्रिया इतने सूक्ष्म रुपसे रहते हैं कि उनको अलग-अलग समझना कठिन है । वर्तते त, शप्, गुण, टित् एत्वे । यहाँ कर्ता से क्रिया, क्रियासे फल अनुमित है । ववृते अत्र न गुणः अपित् लिट् कित् भवति । गुणनिषेधे, परोक्षे वर्तनव्यवहारे अर्थे लिट् द्वित्वे वृत् वृत्, ववृत् 'उरत्' वर्वृत् ववृत्त । एश् ववृते = न जाने कब उपस्थितथे । वर्तिता । आगामिदिनमें व्यवहार कर्ता अर्थे लुट् ( ६ ) वृतादिभ्यः = वृतुवर्तने, वृधु ( वृद्धौ ) शृधु ( शब्द, कुत्सायाम् ) अत्र कुत्सितशब्दः = अपानवायुः । स्यन्द प्रस्रवणे, कृप् सामर्थ्ये, इन पाँच धातुओंसे परस्मैपद हो विकल्पसे । स्य या सन्का विषय हो तब । वर्त्स्यति 'ठहरने वाला है । इस अर्थ में "वृत् स्यति" गुणे, वृद्भ्यः स्यसनोः' इस सूत्रसे स्य का विषय होने पर परस्मैपद 'ति' इट् प्राप्ते निषेध सूत्रम् ।

( ५४० ) वृत् वृध शृध स्यन्द इन धातुओंसे सकारादि आर्धधातुक "स्य' या 'सन्' को इट् न हो । तङ् = आत्मनेपदे आन = शानच् कानच्के अभावमें इट् निषेध नहीं होता । आत्मनेपदमें इट् हो जाता है । गुणे, वर्तिष्यते । वर्ताव करेगा । अवर्तत्, अवर्तेताम् अवर्तन्त । कल वर्ताव किया । वर्तेत वर्तेयाताम् वर्तेरन् । वे रहैं, व्यवहार करें । वर्तिषीष्ट, वर्तिषीयास्तां वर्तिषीरन् । आपको वर्ताव करना चाहिए । सो अवर्तिष्ट, उसने व्यवहार किया । अवर्तिषाताम् अवर्तिषत । अवर्त्स्यत् । यहाँ स्य परे विकल्पसे परस्मैपद पक्षमें इट् निषेध । अवर्ति-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

देरार्धधातुकस्येण्न स्यात् तङानयोरभावे। वत्स्यंति, वर्तिष्यते। वर्तताम्। अवर्तत। वर्तेत। वर्तिषीष्ट। अवर्तिष्ट। अवत्स्र्यंत्, अवर्तिष्यत। दद दाने। २०। ददते। १ न शस-दद-वादि-गुणानाम् ६।४।१२६। शसेर्ददेर्वकारादीनां गुणशब्देन विहितो योऽकारस्तस्य च एत्वाभ्यासलोपौ न। ददते। ददाते। ददिरे। ददिता। ददिष्यते। ददताम्। अददत्।

---

ष्यत्। आत्मनेपद पक्षमें इट् निषेध नहीं होता। यह धातु उपसर्गोंसे बहुत प्रभावित है। अनेक अर्थोंमें दृष्ट है। प्रवर्तते = कार्यमें प्रवृत्त होता है। परावर्तते = लौटता आवर्तते=दुहराना। प्रत्यावर्तते = लौटता है। परिवर्तते=बदलना। अनुवर्तते= अनुगच्छति। निवर्तते=लौटना, निवृत्त होना। निर्वर्तते=सिद्ध करना या समाप्त करना। विवर्तते=फैलता है। वृधु=वृद्धि अर्थमें प्रसिद्ध है वर्धते। ववृधे = न जाने कब बढ़ा। परश्वः धनं वर्धिता = परसों बढ़ेगा। वत्स्र्यंति। अत्र परस्मैपदम्, इट् निषेधश्च। वर्धिष्यते = ज्ञान बढ़ेगा। वर्धतां तव गोत्रम्। यथा सूर्यवंशो अवर्धत=बढ़ा। तुम्हारी आयु ( वर्धेत ) बढ़े। तुम्हारे पुत्र वर्धिषीष्ट, यथा— रामो अवर्धिष्ट। लवकुशौ अवर्धिषाताम्। यदि मनुष्य बढ़ेंगे युद्ध भी बढ़ेगा। अवर्धिष्यत। शर्धते, शशृधे। स्यन्दते घृतं, सस्यन्दे तुषारः। स्यन्दिता स्यन्ता मधु। स्यन्दताम् = पिघल जाइये। यथा—सूर्यं दृष्ट्वा सूर्यकान्ता अस्यन्दत (पसीजी, पिघली)। कड़ी धूप हो तब वर्फ स्यन्येत ( पिघले )। तुम्हारा हृदय स्यन्दिषीष्ट द्रवीभूत हो। स्यन्त्सीष्ट। पर्णकुटी अस्यन्दत्। परस्मैपदे इट् अभावः। अस्यन्दिष्ट आत्मनेपद इट्। स्वरतिसूति इति विकल्पेन इट्। इट् अभावे अस्यन्त। ( २० ) दद्धातुका दान-देयवस्तु पर अपना अधिकार समाप्तकर दूसरेका अधिकार होनेके अनुकूल क्रिया अर्थ है। यह दानक्रिया वर्तमान रहे तब 'ददते' सुखम्। फल अन्य में रहे, क्रिया अन्यमें। वह सकर्मक है। ददते ददन्ते। ददसे ददेथे, दद्ध्वे। तुम सब दान देते हो। ददे ददावहे ददामहे। हम लोग चार लड़कियोंको ज्ञान देते हैं। ( १ ) हिंसार्थक शस् दानार्थक दद्, व, आदिमें हो ऐसे धातुओंको गुण शब्दसे विधान किये गये अकारको एकार और अभ्यासका लोप न हो। ददते=दानके अनुकूल क्रियावाचक दद् धातो दानक्रिया पहले हो अप्रत्यक्ष समाप्ति हो तब लिट् आत्मनेपद त स्थाने एश् द्वित्व, दद् दद् ददद् ए, इति दशायाम् 'अत् एक हल् मध्ये' सूत्रेण एत्व अभ्यास लोपे च प्राप्ते, 'न शस् दद्' सूत्रेण निषेधे। आत्मनेपदके सभी प्रत्यय अपित् होनेसे कित् होते हैं। ददाते ददिरे। परोक्षभूतकालिक दान क्रिया। श्वः गां ददिता। नित्यं ज्ञानं ददिष्यते। त्वं पुस्तकं ददताम्। यथा— कृष्णः गुरुवे पुत्रम् अददत् द्वापरे। ददेत्, गां दद्यात्, ददिषीष्ट। फलम् अददिष्ठ =दान किया। यदि अन्नम् अददिष्यत् तदा परलोकम् अप्राप्स्यत्। ( २१ ) त्रपूष्

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ददेत । ददिषीष्ट । अददिष्ट । अददिष्यत । त्रपूष् लज्जायाम् । २१ । त्रपते । २ तॄ-फल-भजत्रपश्च ६।४।१२२। एषामत एत्वमभ्यासलोपश्च स्यात् किति लिटि सेटि थलि च । त्रेपे । त्रपिता, त्रप्ता । त्रपिष्यते, त्रप्स्यते । त्रपताम् । अत्रपत । त्रपेत । त्रपिषीष्ट, त्रप्सीष्ट । अत्रपिष्ट, अत्रप्त । अत्रपिष्यत, अत्रप्स्यत । इत्यात्मनेपदिनः ।

अथ उभयपदिनः ।

श्रिञ् सेवायाम् । १ । श्रयति । श्रयते । शिश्राय, शिश्रिये । श्रयिता । श्रयिष्यति, श्रयिष्यते । श्रयतु, श्रयताम् । अश्रयत्, अश्रयत । श्रयेत्, श्रयेत ।

---

ष ऊ इत् त्रप्धातुका लज्जाजनक क्रिया अर्थ है। ष् इत्का प्रयोजन षिद्भिदादिभ्यो अङ्से अङ् होना। ऊदितका फल इट् विकल्प अकर्मकधातुः। लज्जा फल, उसकी क्रिया एकमें रहनेसे। यथा—देवदत्तः त्रपते। लज्जितो भवति। यहाँ अलग कर्म नहीं है। (२) तैरने अर्थमें तॄ, फलने अर्थमें फल, सेवार्थक भज्। लज्जार्थक त्रप्धातुओंके अत् = ह्रस्व अकारको एत्व और अभ्यासलोप हो, कित् लिट् हो, और सेट् थलपरे हो। अनद्यतनपरोक्षभूतकालसमाप्तलज्जित क्रिया। तब त्रप् लिट्। तस्य स्थाने त तस्य एशकृते द्वित्वादिकार्ये, तत्रप् अत्र त्रिफलभजत्रपश्च सूत्रेण अकारस्य एत्वे अभ्यासस्य लोपे। असंयोगात् लिट् कित् परे अस्ति। त्रेपे त्रेपाते त्रेपिरे। त्रेपिषे त्रेपाथे त्रेपिध्वे ढ्वे। त्रेपे त्रेपिवहे त्रेपिमहे। ऊदित होनेसे स्वरति सूति इति इट् विकल्पे पक्षे त्रेप्वहे त्रेप्महे। श्वः न्यायालये त्रपिता। ऊदितको इट् विकल्प। त्रप्ता। त्रपिष्यते (लज्जित होंगे) त्रपताम् (लज्जित होना चाहिए। अत्रपत् (कल शर्मिन्दा हुआ) त्रपेत् = लज्जा आवे। त्रपिषीष्ट = भगवान् उसे लज्जित करें। अत्रपिष्ट। इत्यात्मनेपदिनः।

अथ उभय पदिनः—१ श्रिञ्-ञ् इत् सेवा के अनकूल क्रिया अर्थः। ञित् होने से स्वरितञित् कर्त्रभिप्राये क्रियाफले क्रिया और फल कर्ता में हो, अतः आत्मनेपदं, अकर्मकः। वह फल परगामी हो तब परस्मैपदं सकर्मकः एवं उभयपदी धातुः। श्रयति (सेवा, स्वामि प्रसन्नता फल दूसरे में है। श्रयते—सेवाफलं स्वयं कर्ता में हो। शिश्राय। कर्ता परोक्ष काल में सेवा क्रिया का फल पूर्वदिनों में, अन्यके लिए सिद्ध कर चुका हो। श्रि लिट्, परस्मैपदे 'ति' णल् द्वित्वे, अभ्यासहलादि शेषकार्ये णित्परे 'अचोञ्णिति' वृद्धिः। कर्ता में ही फल भी हो तब आत्मनेपदे त—एश् शिश्रिये शिश्रियाते। कषयः रामं शिश्रियिरे। शिश्रियिषे शिश्रियाथे शिश्रियिध्वे। परस्मैपदमें। शिश्रयिथ। उदृदन्तै इति कारिकायां 'श्रि' इति उदात्तः। इट् निषेधो न भवति। सिप् स्थाने थल् पिदस्ति न कित्। तेन गुणअयादेशौ। शिश्रियिव अत्र लिट् कित् गुण निषेधः। इयङ्। सेवा क्रिया पर दिनोंमे भावी हो।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

श्रीयात्, श्रयिषीष्ट। चङ्। अशिश्रियत्, अशिश्रियत। अश्रयिष्यत्। अश्रयिष्यत॥ भृञ् भरणे। २। भरति, भरते। बभार। बभ्रतुः। बभ्रुः। बभर्थ। बभृव। बभ्रे। बभृषे। भर्तासि, भर्तासे। भरिष्यति, भरिष्यते। भरतु, भरताम्। अभरत्, अभरत। भरेत्, भरेत। ३ रिङ् श-यग्-लिङ्क्षु ७।४।२८ शे यकि यादावार्धधातुके लिङि च ऋतो रिङ् आदेशः स्यात्। रीङि प्रकृते रिङ् विधानसामर्थ्याद्दीर्घो न भ्रियात्। ४ उश्च

---

तब श्रयिता श्रयितारौ श्रयितारः। श्रयितासि श्रयितासे श्रयितासाथे। श्रयिताध्वे। श्रयिताहे श्रयितास्वहे श्रयितास्महे श्रयिष्यति = दूसरेके लाभके लिए सेवा करेगा। श्रयिष्यते अपने लाभके लिए। युधिष्ठिर इव श्रयतु, श्रयताम् = स्वार्थके लिए सेवा करो। यथा—दिलीपः अश्रयत्। श्रीयात्, आशीर्वादार्थे लिङ् अकृत सार्वधातुकयोः दीर्घः। श्रयिषीष्ट=सदा सेवा करें। सेवार्थक श्रिधातोः कर्तृगामि फल जनकभूते ( समाप्तसेवाक्रिया ) अर्थे लुङ् आत्मनेपदे 'त' सेवाफलपरगामी स्यात्। तदा परस्मैपदे 'ति' इकारलोपे अडागमे च्लि तत्स्थाने णिश्रिद्रुकर्तरि चङ्कृते, अनुबन्धलोपे द्वित्वे, चङि अभ्यासादि कार्ये, इयङ् लुङि रूपम्। अशिश्रियत यदा भगवन्तम्। अश्रयिष्यत् यदा भवन्तम् अश्रयिष्यत् तदा जीवनफलम वाप्स्यत्।

२ भृञ् ञ् इत् भृ धातुका भरणं-वस्त्रेण अन्नादिना साहाय्यकरणम्। पालनञ्च। अन्नवस्त्र आदि सहायताके अनुकूल पालनक्रिया अर्थ है जिससे क्रिया फल ( सहायता भरणपोषण ) कर्ताको लब्ध हो। तब आत्मनेपद, अकर्मकः वह फल दूसरेको लब्ध हो परस्मैपद सकर्मकधातु। भृ लट्, तिप् शप् भरति ( धार्मिकः ) भरते ( अधार्मिकः ) पहले ही ( अद्यभिन्न ) पालन-पोषणक्रिया अप्रत्यक्षकालमें समाप्त हो। बभार। वस्त्रादिना पालनं चकार, भृ अतुस् भृ भृ, द्वित्वे, भरभृ भभृ अभ्यासे चर्चः। बभृ अतुस् यणादिः। बभ्रतुः। थल् व म परे कृ सृ भृ वृ इति इट् निषेधः। भृ 'त' तस्य स्थाने एश्, द्वित्वे, उरत हलादिशेष अभ्यासचर्त्वे यण् बभ्रे बभ्राते, दीनान् बभ्रिरे। त्वम् आश्रितान् बभृषे। यूवां मित्राणि बभ्राथे। यूयं धर्मं बभृध्वे। तुम लोगोंने न जाने कब पालन किया। अहं बभ्रे आवां बभृवहे। वयं धर्मान् बभृमहे। त्वं धर्मं श्वः भर्तासि। सदा 'तं' भरिष्यति ऋद्धानोः स्ये इट् अन्न वस्त्रसे पालन करेंगे त्वम् भरतु। तुम गरीबोंका रक्षण करो। यथा—पूर्वजाः अभरन्त। स लोकान् भरेत। ( ३ ) शयग्लिङ्क्षु = शप्रत्यय, यक्आगम, यकारादि आर्धधातुक लिङ् परे ऋ को रिङ् हो। रीङि प्रकृते=प्रकृतप्रसङ्ग प्राप्त रीङ् ऋतः' सूत्रसे रीङ की अनुवृत्ति संभव थी, पुनः ह्रस्व रिङ् का विधान सामर्थ्यसे सिद्ध है कि रिङ् विधान स्थलमें 'अकृत सार्वधातुकयोः' से दीर्घ नहीं होता।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

१।२।१२ ऋवर्णात् परौ झलादी लिङ्सिचौ कितौ स्तस्तङि। भृषीष्ट। भृषीयास्ताम्। अभार्षीत्। अभार्ष्टाम्। अभार्षुः। अभार्षीः।

५४५ ह्रस्वादङ्गात् ८।२।२७। सिचो लोपो झलि। अभृत। अभृषाताम्। अभरिष्यत्, अभरिष्यत। हृञ् हरणे। ३। हरति, हरते। जहार, जह्रे। जहर्थ। जह्रिव। जह्रिम। जहृषे। हर्ता। हरिष्यति,

---

भ्रियात् भ्रियास्तां भ्रियासुः। यकारादि लिङ् 'यास्त' परे 'रिङ् शयग्लिङक्षु' सूत्रेण ऋस्थाने रिङ् आदेश रुपम्। आप सदा पोषण करें। पालन क्रियाका फल कर्ताको मिले तब आत्मनेपद भृक्षीष्ट भृ, षीयुट् सुट् त अनुबन्धलोपे, षत्वे, ष्टुत्वे, ऋकारस्य गुणे प्राप्ते। (४) उः=ऋकारसे परे झलादि=झल् प्रत्याहारके अक्षर आदिमें हो ऐसे लिङ् सिच् कित् हो, तङि=आत्मनेपद परे। अत्र अनुदात्त धातुः अस्ति। इट् न भवति। तेन झलादि लिङ् कित् भवति। तस्य फलं गुण निषेधः। भृषीयास्ताम्। तुम दोनों सदा पालन करो। अभार्षीत् कर्तामें भरण पालन क्रियाका समाप्त काल अ भृ स् ई त्। सिचि वृद्धिः परस्मैपदेषु। इति आर् वृद्धिः। आत्मनेपदे अभृस् त इति दशायाम्, अयम्, अनिट् धातुः इट् न भवति। झलादि सिच्, उश्च सूत्रेण कित्। तेन न गुणः।

(५४५) ह्रस्वात् अङ्गात्=ह्रस्वान्त अङ्गसे परे सिच्का लोप हो झलिपरे अत्र ह्रस्वान्तम् अङ्गम् अभृ अस्ति। झल् तकारपरे सिचोलोपः। अभृत। अभृषाताम् अभृषत् अभृथा अभृषाथाम् अभृध्वम्। अभृषि अभृष्वहि अभृष्महि। भरणक्रिया के कार्यकारण भावमें लङ्। अभरिष्यत् अत्रापि ऋद्धनोः स्ये इति इट्। धातु अनेक अर्थधारण करते हैं। जिसका प्रकाशक (भेदक) उपसर्ग हैं जैसे—अनुहरति=बराबरी करता है। अभ्यवहरति=खादति। अपहरति आहरति (लाता है) उपहरति (उपहार देता है) उपसंहरति = उपसंहार करता है। उद्धरति = बेड़ापार करता है। संहरति = नाश प्रहरति=चोट पहुँचाता हैं। परिहरति=त्यागता है। ये सब ञकार इत् संज्ञक हृधातुकी विशेषता है। क्योंकि उसका भरण-पोषण स्तेय नाशन स्वीकारश्च, हरण करना पहुँचाना चोरी, विनाश, तथा स्वीकार आदि फलके अनुकूल क्रियावाचक अर्थ है। हृञ्को भृञके समान समझें। केवल कृ श्रु भृ से इट् निषेध नहीं होता। जहार। हरणकालकी परोक्षक्रिया जह्रतुः जह्रुः। जहर्थ तुमने कब चुराया। जह्रथुः जह्र। जहार जहर जह्रिव जह्रिम। जह्रे जह्राते जह्रिरे, अपने लिए हरण किया। हर्ता=कल हरेगा। हरिष्यति=आशीर्लिङ ह्रियात्। अत्र रिङ् विधीयते। अहार्षीत् अहार्ष्टाम् अहार्षुः अहारर्षीः। अहार्ष्टम् अहार्ष्ट अहार्षम् अहार्ष्व अहार्ष्म। (४) धृञ् धातुका धारणके अनुकूलक्रिया अर्थ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हरिष्यते। हरतु, हरताम्। अहरत्, अहरत। हरेत्; हरेत। ह्रियात्, हृषीष्ट। हृषीयास्ताम्। अहार्षीत्, अहृत। अहरिष्यत्, अहरिष्यत। धृञ् धारणे। ४। धरति, धरते। णीञ् प्रापणे। ५। नयति, ययते। डुपचष् पाके। ६। पचति, पचते। पपाच। पेचिथ, पपक्थ। पेचे। पक्ता। भज

---

यह भी क्रियाफलके स्वगामी परगामी भेदसे अकर्मक, सकर्मक आत्मनेपद-धरते, परस्मैपद-धरति। दधार, दध्रे। अनद्यतनपरोक्षसमाप्त धारणक्रिया। धर्ता ( धारणं कर्ता ) धरिष्यति, धरिष्यते। धरतु, धरताम्। अधरत अधरत। धरेत् धरेत ध्रियात् धृषीष्ट। अधार्षीत् अधृत। अत्र ह्रस्वादङ्गात् सिच् लोपः।

( ५ ) णीञ्—ञ इत् नी धातुका प्रापण ( पहुँचाना ) या ले जानेके अनुकूल क्रिया अर्थ है यह सकर्मक है प्रापणफलका आधार, कर्तासे भिन्न है। अजन्त, एकाच्, अनिट् है, ग्रामम् अजां नयाति। यहाँ गाँवमें पहुँच (संयोग) फलका आधार ग्राम है क्रियाकर्ता में है। पहले ही प्रापणक्रिया अप्रत्यक्ष पूर्ण हो, तब लिट्। कृष्ण निनाय मथुरां निन्यतुः द्वारकां निन्युः। निनयिथ निनेथ निन्यथुः निन्य। निनाय निनय। निन्यिव निन्यिम। थलमें विकल्प इट्। वमको क्रादिनियमसे नित्यइट्। दिलीपः नन्दिनीं वनं निन्ये निन्याते निन्यिरे। त्वं प्रसादं निन्यिषे निन्याथे निन्यिध्वे। निन्ये निन्यिवहे निन्यिमहे। ध्वम्, वहि, महि, में क्रादिनियमसे नित्यइट्। नेता = प्रापणकर्ता नेष्यति = नयनं करिष्यति। प्रायण क्रियामें आज्ञाप्रेरणा निश्चय प्रार्थना आशीर्वाद अर्थमें लोट् नयतु नयताम्। अनयत् अनयत। नयेत् नयेत। नीयात् नेषीष्ट अनैषीत् अनैष्ट। अनेष्यत् अनेष्यत। इसके भी अनेक उपसर्ग अनेक अर्थके बोधक हैं। अनुनयति = प्रसन्न करता है अभिनयति = अनुकरण करना, अपनयति = दूर हटाना। अवनयति = नीचा करना। उपनयति = समीप ले जाना। ( समीपं प्रापयति )। प्रणयति = प्रेम करना, परिणयति = विवाह करना, एते धातवः, उभयपदिनः। अथ उभयपदिनः स्वरितेत् धातवः।

(६) डुपचष्—'आदिर्ञिटुडवः' डु इत्, ष् इत्, अकारस्वरित इत्। 'स्वरित ञित्' सूत्रेण उभयपदी। पच् लट् ति, शप्। पचति=पाकानुकूलांक्रियां करोति। पचते कर्तृगामी क्रियाफल होनेसे आत्मनेपद। पच्धातुका विक्लित्ति ( परिपक्वता ) जनकक्रिया अर्थः। परोक्षकालिकपूर्वदिनसमाप्तपाकक्रियाअर्थे लिट्। पच्-पच् पपच्। पपाच पेचतुः पेचुः। एत्व-अभ्यासलोपौ। पपच्थ इतिदशायाम्, अजन्तः अकारवांश्च, अतः थल् परे विकल्पेन इट्। इट्पक्षे थलिचसेट्' इतिएत्वे अभ्यासलोपे च। पेचिथ। यदा न इट् तदा चोः कुः इतिसूत्रेण चकारस्य कुत्वे। पपक्थ, पेचथुः पेच। पपाच पपच, पेचिव पेचिम। अनद्यतनभूतकालिक समाप्तपाकानुकूल-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सेवायाम् । ७ । भजति, भजते । बभाज, भेजे । भक्ता । भक्ष्यति, भक्ष्यते । अभाक्षीत्, अभक्त । अभक्षाताम् । यज देवपूजासङ्गतिकरणदानेषु । ८ । यजति, यजते । ६ लिट्यभ्यासस्योभयेषाम् ६ । १ । १७ । वच्यादीनां ग्रह्यादीनां चाभ्यासस्य सम्प्रसारणं लिटि । इयाज । ७ वचि-स्वपि-यजादीनां किति ६ । १ । १५ । वचिस्वप्योर्यजादीनां च सम्प्रसारणं स्यात् । ईजतुः ।

---

क्रिया सभी कर्तामें हो । ( अपने लिए पहले ही पकाया ) इस अर्थमे पेचे, पेचाते, पेचिरे । पेचिषे, पेचाथे, पिचिध्वे । पेचे, पेचिवहे, पेचिमहे । आगामिदिनभविष्य-कालिकपाचनक्रिया । **पक्ता**, पक्तारौ । कल पकायेगा । पचष्यति, च् स्थाने कुत्वेन, क्, स्यसकारस्य षत्वे कषसंयोगे (क्ष) **पक्ष्यति** । पकायेगा । पचतां पचेतां पचन्ताम् । पचस्व पचेथां पचध्वम् । पचै पचावहै पचामहै । पाकक्रियाविषयकविधि, प्रेरण, प्रार्थना, आशीर्वादअर्थे । **अपचत्** । कलपकाया । **पचेत्**=पाकानुकूलप्रेरणा की संभावना पकाना चाहिए । **पच्यात्**=वह पकाये । **अपाक्षीत्** अपाक्ताम् अपाक्षुः । अपाक्षीः अपाक्ताम् । अपक्त अपक्षाताम् अपक्षत । अपक्थाः अपक्षाथाम् अपग्ध्वम् । अपक्षि अपक्ष्वहि अपक्ष्महि । जहाँ त थास ध्वम् रहे वहाँ झल् परे सिच्सकारस्य लोपः । कत्व षत्व कत्व यथायोग्य । **अपक्ष्यत्** । ( ७ ) भज धातुका सेवायां= सेवाजनक, प्रसन्नतानुकूलक्रिया अर्थः । प्रीतिजनक क्रियावाचक भज्धातोः वर्तमान-क्रियार्थे लट्तिप् शप् **भजति, भजते** । प्रीत्यनुकूलव्यापारः । **बभाज** भेजतुः भेजु । **भेजे** भेजाते भेजिरे । श्वः भगवन्तं **भक्ता** । भक्ष्यति ( सेवा करेंगे ) भजतु । अभजत् : **अभक्त** अभज स त जकारस्य कुत्वेन गकारे, चर्त्वेन ककारे, झलोझलि सिचोलोपे अभज् स् इत् कुत्वेचर्त्वे षत्वे **अभाक्षीत्** । ( ८ ) यज् धातुका देवपूजा, सङ्गतिकरण, दानके अनुकूल ( दान-वस्तुमें स्वत्वका त्यागजनकक्रिया अर्थ । यजति—परोपकाराय देवपूजा, अच्छी सङ्गति, करता है दान देता है । (६) लिटि अभ्यासस्य, उभयेषाम् । वच्: इत्यादिधातु तथा ग्रह्यादी = ग्रहिज्यावयिव्यधि, इन धातुओंके अभ्यासको सम्प्रसारण हो, लिट् परे । **इयाज**—पूजा, दान, यज्ञ जनकक्रियावाचकअर्थे भूतकाले लिट्, तिप, णल् । यज् अ । द्वित्वे अभ्यासहलादिशेषे य यज् अ इति स्थिते, अभ्यासस्य यस्य सम्प्रसारणें । लिटि परे अ । सम्प्रसारणाच्च इति पररुपे । इ यज् अ । उपधावृद्धिः इयाज । **ईजतुः** । इयज् अतुस् इतिदशायाम् ।

(७) वचि ( परिभाषणे बोलना ) स्वप्, शयने, और यज् आदि धातुओंको सम्प्रसारण हो कित् परे । यजादिधातुः—**यजिर्वपि र्वहिश्चैव वसिर्वेञ् व्येञ् इत्यपि । ह्वेञ्वदी श्वयतिश्चेति यजाद्याः स्युरिमे नव** । यजादिगणपठित यज्धातुको प्राप्त द्वित्व बाँधकर, वचिस्वपियजादीनां सूत्रेण यकारस्य सम्प्रसारणे । सम्प्रसारणाच्च पूर्वरुपे । क्योंकि सम्प्रसारणं तदाश्रयञ्च कार्यं बलवत् । सम्प्रसारण तथा उसके

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ईजुः । इयजिथ, इयष्ठ । ईजे । यष्टा ।

८ षढोः कः सि ८ । २ । ४१ । यक्ष्यति, यक्ष्यते । इज्यात्, यक्षीष्ट । अयाक्षीत्, अयष्ट । वह प्रापणे । ९ । वहति, वहते । उवाह । ऊहतुः । ऊहुः । उवहिथ । ९ झषस्तथोर्धोऽधः ८ । २ । ४० । झषः परयोस्तथोर्धः स्यान्न तु दधातेः ५५० ढो ढे लोपः ८ । ३ । १३ ।

---

आश्रितकार्यंपूर्वरुप आदि बलवान् होते हैं । इज् अ । अत्रद्वित्वे अभ्यासादिकार्ये सवर्णदीर्घे ईजतुः इति । ईयुः । प्रथमं सम्पसारणं पश्चात् द्वित्वादिः । सभी आत्मनेपद कित् हों । इयजिथ, इयष्ठ । तुमने पहले ही यज्ञ किया । ( देवपूजा सत्सङ्ग दानके अनुकूल क्रियाअर्थवाचक ) यज्धातोः अप्रत्यक्षसमाप्तक्रियाकाले अर्थे लिट् । यह धातु अनिट् तथा अकारवान् है । भारद्वाजमते इट्, द्वित्वे अभ्यासादि कार्ये ( लिट्यभ्यासस्योभयेषाम् ) अभ्यासस्य सम्प्रसारणे इयजिथ । यदा न इट् तदा ब्रश्च भ्रश्च सृज् मृज् यज् आदि सूत्रेण 'ज' स्थाने 'ष' थस्य ष्टुत्वं ठः इयष्ठ । ईजथुः । इयाज, इयज, ईजिव, ईजिम । अत्र क्रादिनियमात् नित्यम् इट् । जहाँ क्रिया समाप्त हो उस का फल कर्तृगामी हो, आत्मनेपदमें सभी कित् हैं । अतः प्रथमं यजादिसम्प्रसारणं पश्चात् द्वित्वादिकार्यम् । ईजे, ईजाते, ईजिरे । त्वम् ईजिसे, ईजाथे, ईजिध्वे । ईजे, ईजिवहे, ईजिमहे । देवपूजार्थक यज्धातोः आगामिभविष्यकालिके दानार्थे लुट, तास्, तिप् आदि । ब्रश्च भ्रश्च आदि इति सूत्रेण षत्वे ष्टुत्वे यष्टा । यज्ञकर्ता । यष्टारौ यष्टारः ( दानकर्तारः ) । यज्ञक्रियाका सामान्यभविष्यकालमें लृट् यज् स्यति । 'ब्रश्च' इति षत्वे ततः ।

( ८ ) षढोः = षश्च ढ़श्च षढ़ौ तयोः षढोः = ष याढ़के स्थानमें 'क' होसि — सकारपरे । षस्थाने कः । स्य सकारस्य षत्वे क ष संयोगे क्ष । यक्ष्यति । परोपकार के लिए यज्ञ करेंगे । यक्ष्यते । भवान् यजतु, यजताम् (आप यज्ञ करें) । अयजत्= कल कई सत्संग किये । यजेत् — आप भी सत्संग करें । इज्यात् = आप परोपकारी हैं दान करें । यक्षीष्ट — पूजा सत्सङ्ग विषयक आशीर्वाद, यक्षीयास्तां यक्षीरन् । अयाक्षीत् । यज् धातोः समाप्त यजनक्रिया अर्थे लुङ् अट् तिप्, इलोपे, च्लि, सिच्, वद् ब्रज् हलन्तस्याचः । बृद्धिः सकारलोपे, ईट् । ज स्थाने ष तस्य कः सिचः सस्य षत्वे । अयाष्टाम् अयाक्षुः अयाक्षीः । अयाष्टम् अयाष्ट अयाक्षम् । अयाक्ष्व अयाक्ष्म अयक्ष्यत ।

( ९ ) वह धातु प्रापणअनुकूलक्रियाअर्थ, ढोना, पहुँचाना, प्राप्तकरना, आदि । यह सकर्मक है । प्रापणफलका आधार गर्दभः भारं वहतिमें भार शब्द है । प्रापणका जनक व्यापार कर्तामें है । वहति — बोझा ढोता है । वहते । स्वार्थं भारं नयति ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

१ सहिवहोरोदवर्णस्य ६।३।११२। अनयोरवर्णस्य ओत्स्याड्ढलोपे। उवोढ। ऊहे। वोढा। वक्ष्यति। अवाक्षीत्। अवोढाम्। अवाक्षुः। अवाक्षीः। अवोढम्। अवोढ। अवाक्षम्। अवाक्ष्व। अवाक्ष्म।

---

नदी वहति। उवाह वह वह, ववह + अ लिट् परे अभ्यास वकारस्य सम्प्रसारणे, पूर्वरूपे, वृद्धि उवाह, ऊहथुः। पित् भिन्न लिट् कित् भवति। अतः ( द्वित्वसे पहले ) वचिष्वपि यजादीनां प्रथमं सम्प्रसारणे, ततो द्वित्वादिकार्यं, णल्, थल्में कित् नहीं होता। उवहथ अनिट् अकारवान् धातुः भारद्वाजमते इट् उवहिथ। तुमने भार कब ढोया? इट् अभावपक्षमें उवक्थ इति दशायाम्। ( ६ ) झषः, = झष् प्रत्याहारके अक्षरसे परे 'तयोः' त थके स्थानमें 'ध' हो। अधः = जुहोत्यादिका धा धातु न हो।

( १ ) ढका लोपहो ढपरे। ( १ ) अनयोः = सह वह धातुके अवर्णस्य = अकारको ओत् = ओकार हो, ढलोप होनेपर। उवोढ = वह थ द्वित्वादिकार्ये। वह वह, ववह, अभ्यासस्य सम्प्रारणे होढः, हस्थाने ढः ( झषस्तथोर्धोऽधः ) झष् प्रत्याहारे ढकार : तस्मात् परः थकास्य धकारः, उवढ ध। धस्य ष्टुत्वेन ढ ढोढेलोपः इतिढकारेपरे ढस्यलोपः, उवढ इति दशायां सहिवहोरोदवर्णस्य' इति ओकारे। अतः ढलोपे पूर्वस्य अणः दीर्घो न भवति। उवोढ ऊहथुः। उवाह उवह ऊहिव ऊहिम। क्रादिनियम से नित्य इट्। परोक्ष भूतकालिकवहन क्रियाका कर्ता, ऊहे ( ढोयें, पहुँचायें वहन किये ) ऊहाते ( ते ) ऊहिरे। वे सब न जाने कब ढोये। ऊहिषे, ऊहाथे, ऊहिध्वे। तुम लोगोंने कब विवाह किया। मुझे बताया भी नहीं। ऊहे ऊहिवहे ऊहिमहे। हम सबने विवाह किया उत्तरदायित्व ढोये। तुम लोगोंने देखा भी नहीं। वयम्, ऊहिमहे, यूयं न ददर्श। वोढा। परसाल विवाह करनेवाला है। गृहस्थीका बोझा ढोनेवाला है। प्रापणार्थक वह धातुः अनद्यतन भविष्य क्रियाअर्थे लुट् तास् तिप् डा। 'होढ.' हस्थाने ढ, झषस्तथोर्धः तस्य ष्टुत्वं ढः, ढोढे लोपः वह अकारस्य ओकारे वोढा वोढारौ वोढारः। भविष्यकाले प्रापणकर्ता ( बोझा ढोना ) विवाह आदि क्रियाके भविष्यकालविवक्षामें लृट् वक्ष्यति 'ते' वह + स्यति इति स्थिते ढत्वे ( षढोक. सि ) कत्वे, प्रत्यय-अवयव सकारस्य षत्वे कष संयोगे क्षत्वे रुपम्। वह धातु से लोट्। वहतु वहताद् ( कार्यभार सभालो ) अवहत्। अवहत जैसे — रघु सभाले थे। वहेद् वहेत। वैसे आपभी जिम्मेदारी सभालें। वहन क्रिया विषयमें आशीर्वाद अर्थमें लिङ उह्यात् आप ढोयें। यासुट्के कित् होनेसे सम्प्रसारण हुआ। आत्मने पदमें वह सीयुट् सुट् ढत्व कत्व षत्व क्षत्व वक्षीष्ट। वरकन्याका भार ढोये। प्रापण क्रिया समाप्त हो चुकी हो। तब लुङ् अट् तिप् इकार लोप्, सिच् ईट् उपधावृद्धि ढत्व कत्व षत्व क्षत्व अवाक्षीत् अवोढाम्। अवह्

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवक्षाथाम् । अवोढ्वम् । अवक्षि । अवक्ष्वहि । अवक्ष्महि ।

इति भ्वादयः ॥ १ ॥

---

'स' ताम् । होढः तकारस्य झषस्तथोर्धः तस्य ष्टुत्वे सिचः 'झलोझलि' सूत्रेण सलोपे ओकारे । अवाक्षुः झेर्जुस् । ढत्व कत्व क्षत्व हलन्तलक्षणवृद्धिः । अवाक्षीः अवोढम् । अवोढ । अवहस्त । होढः तकारस्य धः । ष्टुत्वेन ढः, ढोढे लोपः, सहिवहोरोद्, अवर्णस्य ओकारे । यहाँ तक शप् विकरण प्रधानधातुः भ्वादिगणः समाप्तः ।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## २—अथादादयः

अद भक्षणे । १ । २ अदिप्रभृतिभ्यः शपः २ । ४ । ७२ ।

लुक् स्यात् । अत्ति । अत्तः । अदन्ति । अत्सि । अत्थः । अत्थ । अद्मि । अद्वः । अद्मः । ३ लिटचन्यतरस्याम् २ । ४ । ४० अदो घस्लृ वा स्याल्लिटि। जघास । उपधालोपः । ४ शासिवसिघसीनां च ८ । ३ । ६० । इण्कुभ्यां परस्यैषां सस्य षः स्यात् । घस्य चर्त्वम् । जक्षतुः । जक्षुः । जघसिथ । जक्षथुः जक्ष । जघास जघस । जक्षिव । जक्षिम । आद । आदतुः ।५५५ ईडत्यर्तिव्यतीवाम् ७।२।६६। अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात् । आदिथ । अत्ता ।

---

अथ अदादिप्रकरणम्—अद् भक्षणे धातु आदि में हो वह समुदाय अदादिगण हैं । १ । अद् धातु का भक्षण, गलविलाधः संयोग, 'खाने के' अनुकूल, क्रिया अर्थः । इसका प्रयोग अतिशीघ्र खाने गलेके विलमें उतारनेवाले जीव, पशु, राक्षस, कुत्तेः आदि के लिए है । भक्षणार्थक अद्धातोः प्रचलित भक्षणक्रिया अर्थे लट् तिप् शप् ततः । २ । अदिप्रभृतिभ्यः=अद् इत्यादि, अदादिगणपठित धातुओंसे परे शप्का लुक् हो । इति शपो लुक् । अद्ति 'खरिच' इति दस्य चर्त्वेन 'त' अत्ति । अत्तः तस् परे, शपः लुक् चर्त्वे रु॰ वि॰ । अदन्ति झस्य अन्तादेशे । अत्सि । दकारस्य चर्त्वे । थस् थ सर्वत्र चर्त्वे मिप् वस्मस् इत्यत्र दकारः तिष्ठति । यह शीघ्र भक्षणक्रिया का वर्तमानकालिक प्रयोग । ३ । लिटि अन्यतरस्याम् । अद्के स्थानमें घस्लृ=घस् आदेश विकल्पसे हो लिट् परे । लृ अनुबन्ध है इत्संज्ञक भी । जघास् भक्षणार्थक अद्धातोः अद्यतनभिन्न परोक्षेसमाप्त भक्षणक्रिया अर्थे लिट् अदस्थाने घस्लृ=घस् आदेशे, घस्लिट् । तिप् णल् द्वित्वादिकार्ये घस् घस् घघस् जघस् । उपधावृद्धिः । कदाफलं जघास । द्विवचने जघस अतुस् 'गमहनखनघसाम् इतिउपधायाः अकारस्य लोपे क्तिपरे अतुस् । ४ । इण्कुभ्यांपरस्य=इण् और कवर्गसेपरे अनुशासनार्थक शास् ) निवासार्थक वस् भक्षणार्थवघस् धातुके अवयव सको ष हो । यद्यपि आदेशप्रत्ययोः से षत्वसम्भव था परन्तु आदेशरुप सकार नहीं है, न प्रत्ययका अवयव ही है । घको चर्त्वेन क् कष संयोगे क्ष जक्षतुः । इसीप्रकार जक्षुः जघसिथ=जघस्थ इति दशायां, नित्यम् इट् । क्योंकि लुङि लिट्में ही घस् आदेश है, तास् में नही, क्रादिनियमसे नित्य इट् । एवं जक्षिव जक्षिम भी जाने यदा न घस्लृ आदेशः तदा अतआदेः दीर्घः । आद आदतुः आदुः । पहले ही परोक्षकालमें खाया । आदिथ अद् अद् 'अअद' अतआदेः दीर्घे, आअद थ इति उपदेशे अकारवान् धातुः अस्ति । विकल्पेन इट् प्राप्तः ।

। ५५५ । इट, भक्षणार्थक अद्, गमनार्थकऋ, और वेञ् धातुओंसे परे थल्को इट् आदिथ, आदिम । अत्ता। अद्यभिन्नभविष्यक लिकभक्षणकर्ता । अत्स्यति । भक्षणं करिष्यति अत्तु, अत्ताम् ( वे भक्षण करें ) अद शप्, लुक् दकारस्य चर्त्वं तकारः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अत्स्यति । अत्तु, अत्तात् । अत्ताम् । अदन्तु । ६ हुझल्भ्यो हेर्धिः ६।४।१०१। होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि,अत्तात् । अत्तम् । अत्त अदानि । अदाव। आदाम। ७ अदः सर्वेषाम् ७।३ । १०० । अदःपरस्यापृक्तासार्वधातुकस्य अट् स्यात् सर्वमतेन । आदत् आत्ताम्, आदन् । आदः,आत्तम् आत्त। आदम्, आद्व, आद्म । अद्यात् । अद्याताम् । अद्युः । अद्यात् । अद्यास्ताम् । अद्यासुः । लुङ्सनोर्घस्लृ २ । ४।३७। अदो-घस्लृ स्याल्लुङि सनि च । लृदित्वादङ् । अघसत् । आत्स्यात् । हन हिंसागत्योः ।२। हन्ति ।९ । अनुदात्तोपदेश-वनति-

---

भोजनविषयक प्रेरणा, अर्थमें, त्वम् अद्धि ( तुम खूब खाओ ) अद् लोट्, सिप् सेर्ह्यपिच्च' इति सिस्थाने हि आदेशे । ६। हवन भोजन अर्थक हुधातु और झलन्तेभ्यः=झल् प्रत्याहारके अक्षर अन्त में हो ऐसे धातुसे परे 'हि' के स्थानमें धि हो । हि को तातङ् पक्षमें । अत्तात् अत्तं यूयम् अत्त । अदानि अद्मिप् मेर्निः आडुत्तमस्य पिच्च इति आड् । हम लोग भक्षणकरें ।७। अद्धातुसे परे अपृक्त एक अल् वर्णरुप प्रत्यय ) सार्वधातुकको अट् आगमन हो, सबके मतमें । आदत् भक्षणार्थक अद्धातोः अद्यभिन्न समास क्रियाकाले अर्थे लङ्, तत्स्थाने तिप् । आडजादीनामिति आट् । शपो लुक् अदः सर्वेषामिति सार्वधातुक् अपृक्ततकारस्य लट् आगमे इत्यादि कलही भक्षण करलिया । आत्ताम्, तस ( ताम् ) दकारस्य चर्त्वं । आदन्=वे लोग-चबैना चबाये । आदः=तुम कब निगलगये । आत्तम्, आत्त । आदम् आद्व आद्म अद्यात्-भक्षणकी विधि, अनुरोध सम्भावना अर्थमें लिङ् अद्-यासुत्-लिङः सलोपो अनन्त्यस्य, इति यासुट् सकारस्य लोपे, शपः लुक् । अकारं विना अतो येयः न प्रवर्तते। अद्याताम् अद्युः । अव झेर्जुस् उस्यपदान्तात् इतिपररुपे । आपलोगोंको भक्षण करना चाहिए । आशीर्लिङ् अद्यात् यासके सकारको 'स्कोः' सूत्रसे लोप । द्विवचने । आद्यास्ताम् । अत्र न सकारलोपः, न पदान्तो अस्ति । न झलरे अस्ति । अद्याः अद्यासम् अद्यास्व, अद्यास्म (८) अद्के स्थानमें घस्लृ=घस् आदेश हो, लुङ् या सन् परे । लृकार इत् होनेसे पुषादिद्युतादि लृदितः से च्लिके स्थाने सिच्को बाधकर अङ् हो । अघसत् भक्षणार्थक अद्धातोः समासभक्षण क्रियाकाले अर्थे लुङ् घस्लृ आदेशे अट्तिप् । इतश्च इकारलोपे च्लि, तस्य स्थाने अङ् आदेशे । आत्स्यत् लृङ् अट्तिप् इकारलोपस्य दस्य चर्त्वेन तः । (२) हन्धातुका हिंसा और गति-गमनके अनुकूल क्रिया अर्थः । इस धातुका हिंसा, परपीडा, अर्थ प्रधान है । जो शब्द वाच्य है । गति अर्थ अप्रसिद्ध है । सकर्मकः । लगुडेन श्वानं हन्ति । यहाँ फल पीडा है जिसका आधार कुत्ता, उसके अनुकूल क्रिया हन्तामें है । हिंसार्थक हन्धातोः हननक्रिया वर्तमाने लट्तिप् शप् 'अदिप्रभृतिभ्यः इतिशपो लुकि । हन्ति । अत्र अपदान्तनकारस्य अनुस्वारे तस्य ययिपरे परसर्णे नकारे, इत्यपि वक्तु शक्यम् । हतः हन् शप् तस् शपोलुक् (९) अनुदात्तोपदेश

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तनोत्यादीनामनुनासिकलोपो झलि क्ङिति ६।४।३७। अनुनासिकान्ताना-मेषां वनतेश्च लोपः स्याज्झलादौ क्ङिति ङिति परे। यमि-रमि-नमि-गमिहनि मन्यतयोऽनुदात्तोपदेशाः। तनु क्षणु-क्षिणु-ऋणु-तृणु-घृणु-वनु-मनु-तनोत्यादयः। हतः। घ्नन्ति। हंसि। हथः। हन्मि। हन्वः हन्मः। जघान। जघ्नतुः। जघ्नुः। ५६० अभ्यासाच्च ७।३।५५। अभ्यासात् परस्य हन्तेर्हस्य कुत्वं

---

अनुदात्त पढ़े गये हो उपदेश अवस्थामें ऐसे वन, तन इत्यादि अनुनासिकान्त धातुका-लोप हो झलादि कित् ङित्परे। अनुनासिकान्त परे हन्का लोप प्राप्त हुआ। अलोन्त्यस्यसे अन्त्य अल् न का लोप हुआ। अतः उपदेश अवस्थामें अनुदात्त अनु-नासिकान्त धातु ६ हैं। यम् उपरमें=विरक्त होना। रम्क्रीडायाम्। णम् प्रह्वत्वे=प्रणाम करना गम्गतौ, हन् हिंसागत्योः। मन्ज्ञाने। तनोत्यादि आठ हैं। तनुविस्तारे क्षण्हिंसायम्। क्षिण्त्र, ऋण्गतौ, तृण्अदने, घृण्दीप्तौ। प्रकाश करना। मनु ववबोधने (ज्ञानकरना) वनु याचने तस् प्रत्यय, अपित् सार्वधातुक होने से ङित् है। तब नलोप हुआ। घ्नन्ति=हिंसार्थकहन्धातोः हननक्रिया वर्तमाने लट् प्रथम पु० बहुवचने झि (झोन्तः) आदेशे, अपित्सार्वधातुकं ङित् भवति। गम्हन्खन् घसां लोपः इति उपधा अकारस्य लोपे, नकारपरे, हकारस्य हो हन्तेर्ञिण्नेषु, इति कुत्वे; आन्तरतम्यपरीक्षायां कवर्गे घकारे। हंसि' नकारस्य नश्चापदान्तस्य झलि इति अनुस्वारे। हथः हथ। झलादिङित् प्रत्ययपरे अनुनासिकलोपः। अहं दुष्टं हन्मि। आवां हन्वः। वयं हन्मः। जघान-परपीडाजनक क्रियावाचकहन् धातोः अद्यभिन्न समाप्तपरोक्षहनन, क्रियाकाले अर्थे लिट्, तिप्, णल्-द्वित्वादि कार्यं हहन्+अ, अभ्यासहकारस्य कुहोश्चुः इति चवर्गे, आन्तरतम्यपरीक्षायां झकारे 'अभ्यासे चर्चः' इति जश्त्वेन जकारे। जहन्+अ उपधायाः घकारे, अनतः। ञ्नामेकी शैलीपूर्ववत्। जघन अतुस् इति दशायां गम् हन् जन् इति कित् अतुस्परे, उपधा अकारस्य लोपे, अभ्यासहकारस्य कुत्वे जश्त्वेन जकारे। अभ्यासे चर्चः' अभ्यास-उत्तर खण्डस्य हकारस्य नकारपरे हो हन्तेर्णि-इतिकुत्वे जश्त्वेन, तुमदोनों ने पापीका हनन् किया जघ्नुः (देवाःदुष्टान्)

(५६०) अभ्यासात्=अभ्याससंज्ञकसे परे हन धातुके ह को कुत्व (कवर्ग) हो। वाह्यप्रयत्नमें ह के स्थानमें घ हो। जघनिथ। जघन्थ। त्वं कर्ता में पूर्वकालिक अप्रत्यक्षहननक्रिया हो, तव हन् लिट् द्वित्वादि कार्ये म० पु० एकवचने सिप्। तस्य स्थाने थल् जहन्थ। भारद्वाजमते इट् न भवति। अन्यमते इट भवति। जहनिथ जहन्थ इति स्थिते 'अभ्यासाच्च' सूत्रेण अभ्याससंज्ञक 'ज' से परे ह को कुत्वं घः। हो हन्तेः न कुत्वम्: ञित् णित् परे नास्ति, जघ्नथुः पापानि यूवां, यूयं अधर्मान् जघ्न। जघान जघन (अहम्-कदा) जघ्निव। उपधालोपे नकारपरे होहन्तेः 'कुत्व'

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्यात्। जघनिथ, जघन्थ। जघ्नथुः। जघ्न। जघान, जघन। जघ्निव। जघ्निम। हन्ता। हनिष्यति। हन्तु, हतात्। हताम्। घ्नन्तु। १ हन्तेर्जः ६।४।३६। हौ परे। २ असिद्धवदत्राभात् ६।४।२२। इत ऊर्ध्वमापादसमाप्ते-राभीयं समानाश्रये तस्मिन्कर्तव्ये तदसिद्धम्। इति जस्यासिद्धत्वान्न हेर्लुक्। जहि। हतात्। हतम्। हत हनानि। हनाव। हनाम। अहन् अहताम् अघ्नन्।

---

से नित्यम् इट। हिंसार्थक हन्। धातोः अनद्यतन भविष्यकालिक लुट् तिप् तास डा आस्लोप बलादि—आर्धधातुक इट प्राप्ते 'एकाच्उपदेशे' अनुदात्तात् इति इट् निषेधे। नकारस्य अनुस्वारपरस-वर्णौ। देवी दैत्यान् हन्ता। दस्यून् हनिष्यति। ऋद्धनोः स्ये' इतीट्। हन्तु हिंसा परपीडाके लिए प्रेरणा आज्ञा अर्थ में लोट्। हन्तु। एरुः इकारस्य उः। नस्य अनुस्वारपरसवर्णे। आशीर्वादे अर्थे, तुस्थाने तातङ् ( अनुदात्तोपदेश वनति ) नलोपे। हतात् हताम्=हन्तस् तस्य स्थाने ताम् आदेशे, नकारस्य अनुतात्तोपदेश इतिलोपे। रामकृष्णौ मुष्टिकचाणूरादीन् हताम्। पाण्डवाः कौरवान् घ्नन्तु हन् + झि उपधा ( अकार ) लोपे नकारपरे हकारस्य हो हन्तेः इति कुत्वेन घकारे, झन्तः। एरुः कृते। ( १ ) हन् धातुके स्थानमें ज आदेश हो हि परे। ( २ ) असिद्धवत्=असिद्धेन तुल्यं। असिद्ध के समान यत्र — यहाँ आभास् = प्रतीत होता है। इट् ऊर्ध्वम्==इस सूत्रके बाद छठे अध्यायके चतुर्थपादके बाइसवें सूत्र के अनन्तर पादसमाप्तिपर्यन्त सभी कार्य अभीयसंज्ञक हैं। आपादसमाप्तेः आभीयम् समानाश्रये — समान है, आश्रय निमत्तिकारण या आधार जिनका उन्हें समानाश्रय कहते हैं। हन्' के स्थान में ज आदेश हेर्लुक् दोनों आभीय कार्य हैं। समानाश्रयभी। 'हनके स्थानमें ज आदेश तथा अदन्तअङ्ग 'ज' उससे हि आदेशकार्य दोनों के होनेपर प्रथम 'ज' आदेश, हेर्लुक् की दृष्टिमें असिद्ध है। इति जस्य असिद्धत्वात् — इस नियमसे 'ज' के असिद्ध होनेपर 'हि' का लुक् नहीं हुआ त्वं पापानि जहि हतात्। हन् शप् सिप् शपो लुक्सि-स्थाने हि हन्तेर्जः आदेश, अदन्ताङ्ग' मत्वा हेर्लुक् प्राप्ते, असिद्धवत् अत्र आभात्' इति जकारस्य असिद्धे ( न ) हेर्लुक्; यदा हिस्थाने तातङ् तदा अनुदात्तोपदेश इति नकारलोपे हतं विघ्नान् यूयं हत उ० पुरुषे आट् आगमे हनानि हनाव हनाम। हम सब वध करें। अहन् हिंसार्थक हन् धातोः अद्यभिन्न समाप्त हननं क्रियाकाले अर्थे लङ्तिप् इलोप शपोलुक् अट् आगमे अहन्त। हल्ङ्याभ्यो सूत्रेण अपृक्त हलः लोपे। कृष्णः कंसम् अहन्। बलरामौ, अहताम् — तस्ताम् हन् नकारलोपे, देव्यः निशुम्भान् अघ्नन्। अहन् + झि झोन्तः, अजादि ङित्प्रत्ययपरे गमहन् इति उपधा ( अकारस्य ) लोपे हो हन्तेः कुत्वे। त्वम् अहन्। सिप् इतश्च इकारलोपे सकारस्य हल्ङ्यादिलोपे अहत। अहनम्, अहन्व, अहन्म। हन्यात् हननसम्भावना अर्थेलिङ् ( आप मारें। ) हन् यास् तिप शपोलुक् लिङि सलोपे। हन्यातम् हन्युः। हन्याः हन्यातं हन्यात। हन्यां हन्याव

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अहन् अहतम्, अहत। अहनम्, अहन्व, अहन्म । हन्यात् । ३। आर्धधातुके २। ४ । ३५ । इत्यधिकृत्य । ४ हनो वध लिङि २।४।४२।५६५ लुङि च २।४। ४३। वधादेशोऽदन्तः । आर्धधातुके इति विषयसप्तमी । तेनार्धधातुकोपदेशेऽकारान्तत्वादतो लोपः । वध्यात् । वध्यस्ताम् । अवधीत् । अहनिष्यत् । यु मिश्रणामिश्रणयोः ।३।६ उतो वृद्धिर्लुकि हलि ७।३।८९। लुग्विषये उतो

---

हन्याम । ( ३ ) आर्धधातुके यह अधिकार सूत्र है। इसमें सभी कार्य होगे। अतः इसका विशेष अर्थ नहीं है । अर्धधातौ भवम् आर्धधातुकम् । अन्य सूत्रोंके साथ मिल कर सार्थक हो। ( ४ ) हन् के स्थानमें वध आदेश हो, लिङ आर्धधातुक है । लिङ का विषय होनेपर बध आदेश हो ।

(५६५) लुङ्के विषयमें भी हन्को वध् हो । जो अदन्त है। 'अर्धधातुके' (शब्द) में विषय सप्तमी है । विषये भवः वैषयिकः आधारः अर्धधातुकका विषय रहे तभी वध आदेश हो आर्धधातुक प्रत्ययपरे अर्थ आवश्यक नहीं है। यदि विषयसप्तमी नहीं होगी तो, पर सप्तमी हो जायेगी । आर्धधातुक परे भी वध आदेश होगा । अतोलोपः से अकारलोप नहीं होगा । उपदेशका अभाव होनेसे, तेन = अर्धधातुकोपदेशे=विषय सप्तमी स्वीकार करनेपर अर्धधातुक उपदेशकालमें अदन्त होनेसे अकारलोप होता है। वध्यात् हन्लिङ् वध् आदेश तिप्, यासुट् इकारलोपे 'अतो लोप' इति अकारलोपे वध्यास्ताम् वध्यासुः । अवधीत् समाप्तहनन् क्रियाका कर्ता अवध् इस् ईत् । हलन्त लक्षणावृद्धिः प्राप्तः । नेटि इति निषेधे । सिचः सकारलोपे, इटः ईटि दीर्घे, अतोलोप अकारलोपे अकारलोपस्य स्थानिवद्भावेन अतोहलादेर्लघोः । इति न विकल्पवृद्धिः । इदमेव अदन्तस्य फलम् । अवधिष्टाम् अवधिषुः । अवधिष्व अवधिष्म । अहनिष्यत् । (३) यूधातुका मिश्रण = मेलनम्=मिलना । तद्विरुद्धम्, अमिश्रणम् = अलगकरना । (६) लुकि=लुक्विषये, शपोलुक् होनेपर धातुके उकारको वृद्धि हो, पित् हलादिसार्वधातुकपरे । अभ्याससंज्ञक न हो तो । यहाँ अभ्यस्तसंज्ञकधातुको वृद्धिनिषेधका फल जुहोत्यादिमें है क्योंकि वहाँ अभ्यस्त होनेपर वृद्धि नहीं होती । यह वृद्धि तिप् सिप् मिप् विभक्तिमें ही होगी । अपित्सार्वधातुकमें वृद्धि नहीं । ङित् होनेसे निषेध होगा । धानायां गुडं यौति = मिश्रयसि । धनियांमें गुण मिलता है । मिश्रणार्थक यूधातोः लट् तिप् सिप् । अत्र लुक् विषयोऽस्ति । धातु उकारस्य वृद्धिः, पित् हलादिसार्वधातुकमपित् । तण्डुलेभ्यः कंकणं यौति पृथक्करोति । यह फल व्यापारका अलग आधार होनेसे सकर्मक है । युतः । अपित् होनेसे न वृद्धि न गुणः युवन्ति । झोऽन्तः अपित्, न वृद्धिः । उवङ् आदेशः । यौसि = मिलाते हो अलग करते हो, युथः युथ । मिश्रणकी वर्तमानकालिक क्रिया । यौमि, युवः युमः । अत्र न वृद्धिः, पितो अभावात् । युयाव, अत्र द्वित्वं णित्परे वृद्धिः आव आदेशे । जहाँ मिश्रण या अमिश्रणकी समाप्त अद्यतन

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वृद्धिः पिति हलादौ सार्वधातुके नत्वभ्यस्तस्य । यौति, युतः, युवन्ति । यौषि युथः, युथ । यौमि युवः युमः । युयाव । यविता । यविष्यति । यौतु, युतात् । अयौत् । अयुताम् । अयुवन् । युयाः ९ । इह उतो वृद्धिर्न । भाष्ये 'पिच्चङिन्न ङिच्च पिन्न इति व्याख्यानात् । युयाताम् । युयुः । यूयात् । यूयास्ताम् । यूयासुः । अयावीत् । अयविष्यत् । या प्रापणे । ४ । याति । यातः । यान्ति ।

---

क्रियाका परोक्षकालिक कर्ता **युयाव**, युयुवतुः युयुवुः युयविथ । उदूदन्तै यौति आदि के शेष कारिकामें पाठ होनेसे उदात्तोपदेश है । अतः थल् व् ममें इट् भवति : युयुवथुः कित् अथुस्परे गुण निषेधः । उवङ्, युयुव । युयाव, युयव युयुविम । **यविता**— मिलाने या अलग करने की श्वः परश्वः परतरश्वः क्रियाका कर्ता । **यविष्यति**— मिश्रणं अमिश्रणंवा करिष्यति । महिषात् गौः यौतु । अत्र हलादिपित् सार्वधातुकं 'तु' तत उकारस्य वृद्धिः तुस्थाने तातङ्-ङित्पक्षे न वृद्धिः न-वागुणः । **युतात्** युतां युवन्तु । अच्परे उवत् । युहि युतात् । हि पक्षे कित् नास्ति न वृद्धिः । ङित् फलं-नगुणः । युवानि युवाव, युवाम । आट्परे गुणावादेशो । अत्र न वृद्धिः । यतः हलादिर्नास्ति । **अयौत्** मिश्रण या अश्रिणके अनुकूल क्रियावाचक युधातोः अनद्यतन समाप्त मिश्रण या अमिश्रण क्रियाकाले अर्थे लङ् तिप् अट् इकारलोपे शप्, लुक् उतोवृद्धिलुकि हलि उकारस्य वृद्धिः । **अयुताम्**, अयुवन् अत्र अच् परे उवङ् विशेषः । त्वं कदा अयौः, अयुतम् अयुत ! अनद्यतन भूतकालिकमिश्रणक्रियाका कर्ता । अयुवम् अयुव अयुम । हमलोगोंने बहुतोंको मिलाया । विधि आज्ञा प्रेरणा यदि मिलानेके विषयमें हो तब **युयात्** इत्यत्र उतोवृद्धिलुंकिहलि इह न वृद्धिः यतः यासुट्ङित् अस्ति । यद्यपि तिप् अपि पित्, अस्ति । वृद्धिः प्राप्नोति तथापि भाष्ये ङिचपन्न=यः ङित् अस्ति, स पित् न मन्यते । यः पित् अस्ति, स ङित् न भवति । इत्थं व्याख्यानं भाष्ये वर्तते । यासुटः ङिद्विशेषविधानेन पितं बाधते । तस्य फलं अहलादिपित् न वृद्धिः । युयाताम् । वे दोनों अलग हो । युयुः—वे सब मिल गये । आशीर्वाद अर्थमें यूयात् अकृत सार्वधातुकयोः दीर्घः । युयास्तां युयासुः—ईश्वर तुम्हें मिलायें । भूतकाले समाप्त क्रिया अर्थे लुङ् अट् अयु इस् ईत् । इटः ईटि सिच्लोपे । सिचोवृद्धिः परस्मैपदेषु । वृद्धिः आव् आदेशे, दीर्घे **अयावीत्** अयाविष्टाम् अयाविषुः । अयावीः अयाविष्टम् अयाविष्ट । अयाविष्व अयाविष्म । अयाविष्यत् । (४) **या** धातु प्रापण—पहुँचना, जाना, फलके अनुकूल क्रिया अर्थः । गम्धातुकी तरह सकर्मक है **याति** (जाता है) तिस्रः कन्यकाः यान्ति । प्रापण—जनकक्रियाका परोक्षभूतकाल अर्थमें **ययौ**—या या, यया, णल् स्थाने आत् अणौलः सूत्रेण अजादि कित् अतुस्प्रत्ययपरे आकारलोपे । ययिथ ययाथ । अयम् धातुः अनिट् । अजन्तस्य थल्परे विकल्पेन इट् । इट्परे आलोपः । इट्अभावेन आलोपो न । याता—श्वः गमनकर्ता मन्दिरं यास्यति । स हाट्कं यातु ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ययौ । याता । यास्यति । यातु । अयात् । अयाताम् । ७ लङः शाकटायनस्यैव ३।४।१११ । आदन्तात् परस्य लङो झेर्जुस् वा स्यात् । अयुः, अयान् । यायात् । यायाताम् । यायुः । यायात् । यायास्ताम् । यायासुः । अयासीत् । अयास्यत् । वा गतिगन्धनयोः । ५ । भा दीप्तौ । ६ । ष्णा शौचे । ७ । श्रा पाके (८) दा कुत्सायां गतौ ( ९ ) प्सा भक्षणे ( १० ) रा दाने ( ११ ) ला

---

तथा स अयात् । कृष्णबलरामौ मथुरां, अयातां ( ७ ) आकारान्तसे लङ्के झिको विकल्पसे जुस् उस् हों । अयुः—प्रापणार्थक या धातोः अद्यभिन्नसमाप्तक्रियाकाले अर्थेलङ् तस्यस्थाने झि, तस्य स्थाने 'लङः शाकटायनस्यैव' इति जुस्—उस् उस्य-पदान्तात् इति अकारस्य पररुपे सकारस्य रुत्वेविसर्गे, अयुः । उस् अभावे झोऽन्तः । इकारलोपे । तकारस्य संयोगान्तलोपे अयान् । विधि, प्रेरणा अर्थे यायात् । वह जाय । यायुः । वे जांय । यायात्—आशीर्वादके अनुकूलगमनजननक्रिया । आयासीत् गृहम् अया स् त् । यमरमनमातांम् सक्च इति सूत्रेण इट्सक् । झल्परे सिच्लोपे रुपम् । अयासिष्ट । अयासिषुः । आयासीः अयासिऽटम् अयासिष्ट । अयासिषम् अयासिष्व अयासिष्म ) ( ५ ) उत्साहेन च, हिंसायाम्, सूचने चापि, गन्धनम् । वाधातु गति-वायुचलने तथा गन्धप्रतीत होने, सूचित करने उत्साहहिंसा, अनुकूल क्रिया अर्थ । वह क्रिया वर्तमान रहे, तब वाति—हवा चलती हैं । गन्धलेकर ( ववौ वायुः सुखस्पर्शः ) या धातुकी तरह रुप होंगे । श्वः वाता, सदा वास्यति, स वातु । यथा-प्रभञ्जन अवात् अवाताम् अवुः अवान् । लङ् शाकटायनस्यैव इति झेर्जुस् विकल्पेन । वायात् ( वायु वहे ) अवासीत् । सूचित किया । अवास्यत् । निर-उपसर्गसे वाधातु अर्थ 'बुझना' या शान्त होना है ( ६ ) भाधातुका दीप्ति, प्रकाश, चमक, जनकक्रिया । सूर्यः भाति । चन्द्रः विभाति तमः अभाति । अर्थ बदलते हैं । प्रकाशका वर्तमानकालिक विधिनिषेध । वभौ रामः सभायाम् । राममें चमकना क्रियाका समाप्तपरोक्षकाल है । परश्वः भाता = भास्यति सदा । हमेशा चमकेगा । स भातु यथा दिलीपः अभात् । अभाताम् अभुः । लङोर्झेर्जुस् । भायात् प्रकाशित हो । अभासीत् = प्रकाशित हुआ । अकर्मक धातुः स अभास्यत् यदा । भा=प्रकाशे रतम् आसक्तं, तत् भारतम् ( ७ ) ष्णा = धात्वादेः षः सः । निमित्त षके अपाये = हट्जानेसे नैमित्तिक णका भी अपाय ( हठना ) होता है । स्नाधातुका शौच अर्थ है । यद्यपि शौचशब्द पवित्रता, शुद्धि, अर्थमें प्रसिद्ध है तथापि स्नान अर्थ ही वाच्य है, अभिप्रेत है । स्नानक्रिया वर्तमान रहे तब स्नाति रामः । नि उपसर्गसे परिपक्व होना अर्थ है निष्णाति, प्रवीण होता है । स गङ्गायां सस्नौ = स्नान क्रिया । दीर्घसूत्री श्वः स्नाता । गुरुः सदा स्नास्यति । चैत्रः स्नातु । यथा—मैत्रः अस्नात् । शिष्यः स्नायात् । आशीर्लिङ 'वान्यस्य' इति एत्वविकल्पे । स्नेयात् स्नायात् । अस्नासीत्=स्नानक्रिया । यदा अस्नास्यत् तदा निर्मलमभविष्यत् । ( ८ ) श्राधातु

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**आदाने (११) दाप् लवने ( १३ ) पा रक्षणे (१४) ख्या प्रकथने (१५) अयं सार्वधातुक एव प्रयोक्तव्यः। विद ज्ञाने (१६) ८ विदो लटो वा ३(४)८३। वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः। वेद, विदतुः विदुः, । वेत्थ, विदथुः, विद । वेद, विद्व, विद्म । पक्षे—वेत्ति । वित्तः । विदन्ति । ९ उष-विद-जागृभ्योऽन्यतरस्याम् ३ (१३७) एभ्यो लिटि आम् वा स्यात् । विदेर-दन्तत्वप्रतिज्ञानादामि न गुणः । विदाञ्चकार । विवेद । वेदिता । वेदिष्यति ।**

सीरा पकाने अर्थमें हैं। श्राति अश्रात् अश्रासीत् ( ९ ) द्राधातु कुत्सा = निन्दित घृणित अर्थ ) द्राति = पतनपथ पर चलता है निद्राता। निदद्रौ। खगः निद्रातु। निद्रायात् ( १० ) प्सा का भक्षण अर्थ है। प्साति, पप्सौ, अप्सात्=भोजन किया। अप्सासीत् = भक्षणकर चुका ( ११ ) रा का देना अर्थ **राति अरासीत्** ( १२ ) लाधातुका आदान ( ग्रहण ) लेना। लाति=लेता है, ललौ=कभी ले चुका। लाता लास्यति ( लेगा ) लातु अलात्, अलासीत् अलास्यत् ( १३ ) दाप्धातु छेदनकर्तन, काटने **लवन** करने अर्थमें **दाति** लवन करता है। **दास्यति**=लवनकरेगा, प्रेरणा अर्थे **दातु** ( छेदनकरो। **अदात्**, लवन किया। अदासीत् ( १४ ) **पाति**=रक्षति। **पपौ**=ररक्ष, **पास्यति**=रक्षिष्यति। पातु, रक्षतु अपात्। अपासीत् ( रक्षण क्रिया ) **अपास्यत्** ( १५ ) **ख्या** धातुका प्रकथन कहना अर्थ है। ख्याति प्रसिद्ध होता है उपसर्गसे प्रख्यात् विख्यात्। व्याख्याति=व्याख्यानं करोति। इसधातुका प्रयोग केवल सार्वधातुकमें ही होता है ( १६ ) विद्धातुका ज्ञानानुकूलव्यापार। वह क्रिया वर्तमान रहे, वेत्ति ( ८ ) ज्ञानार्थक विद्धातुसे परे लट्के स्थानमें परस्मैपदप्रत्ययको णल् आदि विकल्पसे हो।

**वेद** – ज्ञानकी वर्तमानकालिक क्रिया ( जनता है। ) विद्लट्विप् 'विदो लटो-वा' इतिणल्, शपो लुकि अनुबन्धलोपे, गुणे। अत्र द्वित्वं न भवति। लिट् लकारस्य अभवात् विदतुः विदुः ( जानते हैं ) त्वं वेत्थ। तुम जानते हो। विद्व विद्म। हमलोग धर्म जानते हैं। यदा णल् न भवति तदा विद + ति चर्त्वे गुणे। वेत्ति। वित्तः विद्, तस्, चर्त्वे, अपित् सार्वधातुकं ङित् भवति। अतएव न गुणः। ( ९ ) उष् दाहे = जलाना, ज्ञानार्थकविद्, जागरणर्थक जागृ, इन धातुओंसे आम् विकल्पसे लिट् परे रहते, **विदेः** = विवधातुके अकारान्त प्रतिज्ञासे 'अतोलोपः' इति अकारलोपे सति। तस्य स्थानिवद्भावेन उपधायां लघु न मिलति, अतः आमिपरे लघूपधगुणो न भवति, **विदाञ्चकार**=ज्ञानार्थक विद्धातोः अद्यभिन्न समाप्तपरोक्ष-ज्ञानक्रियाकाले लिट् 'उषविद' सूत्रेण आम् प्रत्ययः लिटोलुक, कृलिट् इति अनु-प्रयोग, द्वित्वादिकार्यं, मान्तस्य पदसंज्ञायामनुस्वारपरसवर्णे विदः लुप्तस्य अकास्य स्थानिवद्भावेन लघूपधगुणो **विवेद**। वह पहले ही जान लिया था। विविदतुः विविदुः विवेदिथ, विविदथुः, विविद। विवेद। विविदिव विविदिम। अयं धातुः सेट्। य अनिट 'विद्सत्तायां' दिवादिः। परश्वः समाचारं वेदिता। अद्यतः निरन्तरं धर्म' वेदिष्यति।(२७०) विदांकुर्वन्तु=विद्धातुसे लोट्परे आम् हो, आम् परे गुणका अभाव

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

५७० । विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ३ ।१।४१। वेत्तेर्लोटि आम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न विवक्षिते । १ तनादिकृञ्भ्य उः ३ ।१।७९। तनादेः उः प्रत्ययः स्यात् । शपोऽपवादःविदाङ्करोतु । २ अत उत् सार्वधातुके ६ ।४। ११० । उप्रत्ययान्तस्य कृञोऽत् उत् सार्वधातुके क्ङिति । विदाङ् कुरुतात् । विदाङ्कुरुताम् । विदाङ्कुर्वन्तु । विदाङ्कुरु । विदाङ्करवाणि । अवेत् । अवित्ताम् । अविदुः । ३ दश्च ८ । २ । ५ । धातोर्दस्य पदान्तस्य सिपि परे रुर्वा । अवेः, अवेत् । विद्यात् । विद्या-

---

कार्य विकल्पसे निपातित हैं । पुरूषवचने विदाङ्कुर्वन्ति—शब्दमें प्रथमपुरुष, बहुवचन ही न समझें, अपितु सभी पुरुष सभी वचनमें ये कार्य हो । १ । तनादिगणपठितधातु तथा कृञ्से परे उप्रत्यय हो शप्को बाधकर । ज्ञानजनक क्रियाके विषयमें प्रेरणा, प्रार्थना, निश्चय प्रतीत हो तब विदङ्करोतु=विद्लोट् लोट्परे विद्से आम्, गुणका अभाव, लोट्कालुक् कृलोट्का अनुप्रयोग । कृके आगे 'तनादि कृञभ्यः उः' से उप्रत्यय, शपको बाधकर हुआ । उप्रत्ययः नशित्, नचित् अस्ति । किन्तु धातोः विहित आर्धधातुकसंज्ञकः । तस्य फलम् ऋस्थाने गुणः । तत् सार्वधातुकसंज्ञकः तस्य फलम् उप्रत्ययस्य गुणः । एरुः मान्तस्य अनुस्वारे परसवर्णे 'तु' इत्यस्य तातङ् दशायां ङिति सति उकारस्य गुणनिषेध । ऋकारस्य गुणे विदाङ्करुतात् ततः । २ । उप्रत्यय हो अन्तमें ऐसे कृञधातुके अको उहो, कित् ङित्सार्वधातुकपरे विदाङ्कुरुतात् । ज्ञानके लिए आशीर्वाद । शिष्यौ विदाङ्कुरुताम् । सर्वे धर्मं विदाङ्कुरुताम् । सर्वे धर्मं विदाङ्कुर्वन्तु । त्वं नीति विदाङ्कुरु, उतश्च प्रत्यात् इति हि लोपः अहरहः संध्यां विदाङ्करवाणि । अत्र उ०पु० वचने आडुतमस्य पिच्च । इति आट् भवति । अकारस्य उकारो न भवति । किन्तु उप्रत्ययस्य गुणः आवादेश्च । विदाङ्करवाव विदाङ्करवाम । पक्षे आम् अभावे । वेत्तु, वित्तात् वित्तां विदन्तु । वित्तात् वित्तं वित्त । अहं मनोरमां विदानि । आवां कौमुदीं विदाव । वयं शेखरं विदाम । उत्तमपुरुषस्य आट्पित् भवति । यस्य फलं पुगन्तलघूपधस्य च इति गुण अवेत् । ज्ञानार्थक विद् अद्यभिन्न समाप्तज्ञानक्रियाकाले लङ्तिप् इकारलोपे । शपो लुक् अट्, गुणे, हल्ङ्याादिलोपे । वावसाने इति दकारस्य चर्त्वविकल्पे अवेत्, अवेद् । ( रहस्यम् ) तौ उपनिषदम् अवित्ताम् अपित्सार्वधातुक परे न गुणः अविदुः । झिस्थाने सिच्अभ्यस्त विदिभ्यः च इति जुस् । ३ । धातुके पदान्त 'द' को रुहो सिप्परे । त्वं मन्त्रम् अवेः अवेत् । अविद्सिप् इकारलोपे सकारस्य संयोगान्तलोपे दश्च दकारस्य रु० वि अवेः । यदा न रुः तदा चर्त्वविकल्पे अवेत्द् अवित्तम् अवित्त । अवेदम् अविद्व—अविद्म । शिष्यः विद्यात् । ज्ञानं प्राप्नुयात् । ज्ञानजनकक्रियासमाप्ते ( भूतकाले ) अर्थे लुङ् । अविद् इस् ईट् गुणे सिंजलुकि दीर्घे । अवेदीत् वेदिष्टम् अवेदिष्ट ज्ञानं । अवेदिषम् अवेदिष्व अवेदिष्म । मन्त्रं यदा ब्रह्म अवेदिष्यत् तदा मोक्षो अभविष्यत् । १७ ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्ताम् । अवेदीत् अवेदिष्यत् । अस भुवि ।१७। अस्ति । ४ श्नसोरल्लोपः ६। ४।१११ श्नस्यास्तेश्चातो लोपः सार्वधातुके क्ङिति । स्तः । सन्ति । असि । स्थः । स्थ। अस्मि । स्वः । स्मः ।५७५ उपसर्गप्रादुर्भ्यामस्तिर्यचपरः ८।३।८७ उपसर्गेणः प्रादुषश्चास्तेः सस्य षो यकारेऽचि च परे । निष्यात् । प्रनिषन्ति । प्रादुःषन्ति । यच्परः किम्—अभिस्तः । ६ अस्तेर्भूः २।४।५२ । आर्धधातुके । बभूव । भविता । भविष्यति । अस्तु, स्तात् । स्ताम् । सन्तु । ७ घ्वसोरेद्धाभ्यासलोपश्च ६ । ४ । ११९ । घोरस्तेश्च एत्वं स्यात् हो परे अभ्यासलोपश्च ।

---

हो, आम्से परे लोट्का लुक् हो । लोडन्तकरोति=कृलोट्का अनुप्रयोग हो । ये चार अस धातुका भूकी तरह सत्तानुकूल क्रिया अर्थ है : फल-सत्ता, उपस्थितिः, अस्तित्व, सन्ति । ४ । श्नसो = श्नाप्रत्यय ( विकरण ) और अस् धातुके अकारका लोप हो कित् ङित्सार्वधातुकपरे स्तः । सत्ता अर्थ वाचक अस्धातोः मध्यम पु० द्वि० तस् श्नसोरलोपः इति अकारलोपे । सभी अपित् सार्वधातुक ङित् होते हैं । उसकेपरे अस् अकारका लोप । दोनों हैं । ते सन्ति । हैं । त्वम् असि=तुम हो । तासस्त्योर्लोपः इति अस् सकारस्य लोपे । स्थः तुम दोनों हो, अहं अस्मि, आवां स्वः । वयं स्मः । इस धातुमें सत्ता अस्तित्व विद्यमानता, रूपफल मात्र जान पड़ता है, क्रिया की प्रतीति नहीं होती । वह कर्तासे अनुमित है । अकर्मक धातु ।

५७५ । उपसर्ग इण् और प्रादुस् अव्ययसे परे अस् धातुके स्को षहो । यकार और अच् परे । यथा—निष्यात् ( सिद्ध हो ) निःउपसर्गक स्यात् । यहाँ उपसर्ग नि'का इण् 'इ' है । उससे परे उसके सको 'ष' हुआ । यकारपरे यासुटका या । प्रादुःष्यात् ( प्रकट हो ) प्रनिषन्ति=प्रनिपूर्वक सन्ति । यहाँ उपसर्ग इण् निमे 'इ' उससे परे सको ष हुआ । अच्परे स' में अ है । प्रादुःषन्तिं । यहाँ भी प्रदुस् इस उदयसे परे अस् के सको 'ष' हुआ । अस्परे समें अ हैं । यच् पर किम् । यपरे या अस् परे स को ष हो ऐसा क्यों ? अस्तिः में अभिके इण्से परे असके सको ष न हो । वहाँ न य परे, न अस् है । अतः ( यच् ) पढ़ा । तुम दोनों चारों तरफ हो । ६ । असधातुके स्थानमें भू आदेश हो, आर्धधातुकलकारके विषयमें । आर्धधातुक में सर्वत्र भू आदेश निश्चित है बभूव = परोक्षकालिक सत्ताजनक समाप्तक्रिया । प्रयोगसिद्धः पूर्ववत् । सत्ता, उत्पत्ति या उपस्थितके विषयमें आज्ञा प्रेरणा आशीर्वाद अर्थमें लोट्, अस्तु = अस् धातोः लोट् तिप् शप् लुक् एरुः अस्तु ( तव कल्याण ) तुस्थाने तातङपक्षे ङित् अस्ति । यस्य फलं 'श्नसो' अकारलोपः । स्तात्, स्तां, सन्तु । मेंभी ङित्भाव, अकारलोप, आयुषस्ते सन्तु । म० पु० एकवचने शिप् नस्य 'हुझल्भ्योहेर्धिः' इति हि स्थाने धि आदेशे प्राप्ते त । ७ । घ्वसो — घुसंज्ञक और असको एत् = एकार हो हौ=हिपरे । अभ्यास का लोप भी हो हिपरे । अलोन्त्य परिभाषासे अन्त्यवर्णको एत्व हो, अभ्यासका लोप केवल दाधासे सम्बन्धित है । इति सूत्रेण अस् अकारस्य एत्वे, एत्वस्य असिद्धत्वात् एत्वके ( आभीय

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**एत्वस्यासिद्धत्वाद्धेर्धिः । श्नसोरित्यल्लोपः । तातङ् पक्षे एत्वं न परेण तातङा बाधात् । ⁵एधि, स्तात् । स्तम् । स्त । असानि । असाव । असाम । आसीत् । आस्ताम् । आसन् । स्यात् । स्याताम् । स्युः । भूयात् । अभूत्,अभविष्यत् । इण गतौ । १८ एति । इतः । ८ इणो यण् ६ । ४ । ८१ । अजादौ प्रत्यये परे । यन्ति । ९ अभ्यासस्या सवर्णे ६।४७८ इवर्णोवर्णयोरियङुवङौस्तोऽसवर्णेऽचि ।**

---

कार्य होने से ) असिद्ध होनेपर झल्सेपरे हिको धि हुआ । 'श्नसोः' अकारलोपे । एधि । स्तात्, तातङ्पक्षे = हिके स्थानमें तातङ् आदेशके पहले 'ध्वसोरेद्' से एत्व नहीं होगा । क्योंकि तातङ्पर है, वह एत्वको बाध लेगा । हि न मिलनेसे एत्व नहीं होगा । एधि इन्द्रवर्मन् यूवां स्तम्=तुम दोनों बने रहो । यूयं स्त । अहं असानि, अस्धातुसे आट् आडुत्तमस्य पिच्च से आट् पित् है । ङित् न मिलने से अलोप नहीं होगा । हमलोग सदा रहें । असीत् । अद्यभिन्नभूतकालमें ( थे ) अस् लङ्त् । आट् । अस्तिसिचो, इति ईट् आगमे । आस्ताम् । श्नसोः अकारलोपे । आसन् । आसीः आस्तम् आस्त । आसम् आस्व आस्म । हमलोग पहले थे । स्यात् सत्ताकी संभावना अर्थमें लिङ् । अस् यास्त् । यास्के ङित् होनेसे अकारलोपे । जो ङित् है वह पित् नहीं होता । अन्यत्र भी । स्यातां, स्युः । स्याः स्यातं स्यात् । स्यां स्याव स्याम । आशीर्लिङ् लुङ् लृङ् इन लकारोंमें अस्को भू मानकर रूप समझें ( १८ ) गमनार्थक इण् धातोः गमन क्रिया व० अर्थे लट् शपोलुक् सार्वधातुक गुणे एति । उपसर्ग बलसे यह धातु अनेक अर्थ धारण करता है जैसे उपैति=समीपं गच्छति । अपैति=(अलग) पृथग्भवति । ऐति=आगच्छति । अन्वेति=सम्बन्ध जोड़ता है या अनुगच्छति ( पीछे चलता है ) । अभ्युपैति=स्वीकारं करोति । अभिप्रैति=भाव रखता है । अभ्युदेति= उन्नति करता है । समुदेति=प्रत्यक्ष होता है । व्येति = बदलता है । अवैति=जानाति । इतः में भी सभी उपसर्ग । इ तस् । रुत्स वि० इतः । अपित्के ङित् होनेसे गुणः नि० ( ८ ) इण् को यण् हो । इ उ ऋ लृ के स्थानमें क्रमसे य व र ल हो, अजादि प्रत्ययपरे । यन्ति = गमनानुकूलक्रियावाचक इ धातोः प्रचलित क्रिया वाचक लट्, तस्य स्थाने बहुवचने, झि । तस्य अन्त आदेशे । इ+अन्ति । 'अचिश्नुधातुभ्रूवां' सूत्रेण इयङ् प्राप्त, तं बाधित्वा 'इणो यण्', इस्थाने यकृते यन्ति । एषि इथः इथ । एमि, इव, इम । वर्तमान कालिकगमनक्रिया सभी कर्ता में आवश्यक है ( ६ ) अभ्यासके इकार उकारको इयङ् उवङ् हो, असवर्णे, सवर्णसंज्ञाभिन्न अच्परे यथा इयाय =गत्यर्थक इ धातोः अद्य भिन्न समाप्तपरोक्षगमनक्रिया अर्थेलिट् । तिप् णल् द्वित्वे इ इ अ अचोऽञ्णिति इति इकारस्य वृद्धिः, तस्य आयादेशे । असवर्णे अचिपरे आ इति अभ्यासस्य इकारस्य इयङ् आदेशे । इयाय । द्विवचने ' इ इ अतुस्, अजादि प्रत्ययपरे इ स्थाने य कृते ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इयाय। ५८० दीर्घं इणः किति ७।४।६९। इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि। [२]ईयतुः। इयुः। [३]इययिथ: इयेथ। एष्यति। एतु। ऐत् ऐताम्। [४]आयन्। [५]इयात्। [६]ईयात्। १ एतेर्लिङि ७।४।२४। उपसर्गात् परस्य इणोऽणो ह्रस्व आर्धधातुके किति लिङि। निरियात्। उभयत आश्रयणे नान्तादिवत्। अभीयात्। अणः किम्—समेयात्। ५८२ इणो गा लुङि २।४।४५।

(५८०) इणः= अभ्यास इणः=इकारको दीर्घ हो कित् लिट् परे। एति अभ्यास इकारस्य दीर्घे ईयतुः (जग्मतुः) ईयुः (जग्मुः) इययिथ, इयेथ। म० पु० एकव० सिप् स्थाने थल्कृते गुण होकर इ ए थ अनिट् अजन्तधातुको इट् विकल्प अभ्यासस्य इकारस्य इयङ् इट्पक्षे एकारस्य अयादेशे। यदा न इट् तदा इय् एथ = इयेथ। ईयथुः ईय। इयाय इयय ईयिम। एषा (श्वः गन्ता)। एष्यति (ज्ञास्यति) एतु, इतात् इतां यन्तु। (एहि इतम् इत। यहाँ सेर्ह्यपिच्च, सिके स्थानमें, हि। अपित् होने से ङित्। गुण निषेधः। अयानि अयाव अयाम अत्र आट् पित् अस्ति तेन सार्वधातुकगुणो भवति। अयादेशश्च। ऐत् (अगच्छत्) अनद्यतनभूतकालकी गमनक्रिया इ + लङ्। ति इकारलोपे, शपोलुक्। वृद्धि ऐताम्= वे दोनों पहुँच गये। आयन्=इ + झि इकारलोपे 'झोऽन्तः' ल् अवस्थायाम् आट्। आ इ अन्। इणो यण् सूत्रेण इस्थाने य आयन्=अगच्छन्। ऐः, ऐतम्, ऐत। आयम्, ऐव, ऐम। ईयात्=गच्छेत्, इयाताम् इयुः। इयाः इयातम् इयात। इयाम् इयाव याम आशिषि लिङ् लकारे अकृतसार्वधातुकयोः दीर्घे। ईयात् वैकुण्ठम् (१) एतेः=ईणः। उपसर्गसे परे इण्धातुके अण्को ह्रस्व हो, आर्धधातुक कित् लिङ परे। निरीयात्—निर्गमनअर्थं द्योतक निर् + ईयात्। यहाँ उपसर्ग निर्‌से परे इण् ईयात् का अण् ई उसे ह्रस्व हुआ। आर्धधातुक किति लिङ्परे 'यात्' इति (प०) उभयत्—दोनों (अन्तादिवत्भाव, पूर्ववद्भाव) के एक साथ आश्रयण—संभावना हो' तव नान्तादिवत्—अन्तादिवत्भाव नहीं होता। पूर्वका धर्म अन्तमें, अन्तका धर्म आदिमें नहीं माना जाता। अभीयात् में सवर्णदीर्घ हुआ है। वहाँ अन्तादिवच्च सूत्रसे अभीमें उपसर्ग अभिका धर्म और परादिवद्भावसे ईण धर्म (इयात् का) लाकर ह्रस्व करना चाहते थे। परन्तु परस्पर-विरोधी धर्म एकसाथ उपस्थित हैं। अतः अन्तादिवत्—एकादेशमें अन्त्यका आदिधर्म निषिद्ध हुआ। अतः ह्रस्वो न भवति। अणः किम्? एतेर्लिङ् सूत्रमें अण्को ह्रस्व न कहते, अब अन्य (अण्से अतिरिक्त) को भी ह्रस्व होने लगता। सम् + एयात्के ए-को ह्रस्व होनेलगता। (२) इण्धातुको गा आदेश हो लुङ्के विषयमें, गा होनेपर 'गातिस्थाघूपाभूभ्यः' से सिच्लुक् गा आदेशका फल आट् न होना भी है। अट् आगात्। क्रियावाचक इ धातोः लुङि। इणोगाङ्लुङि इति इ स्थाने गा आदेशे आगमे च्लेः सिच्, तिप् इकारलोपे 'गातिस्था' इति सिचो लुक् अगात् अगाताम् अगुः। आतः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

गातिस्थेति सिचो लुक्। 'आगात्। ऐष्यत्। शीङ् स्वप्ने। १९।५८३ शीङः सार्वधातुके गुणः ७।४।२१। क्ङिति चेत्यस्यापवदः शेते। शयाते। ४ शीङो रुट् ७।१।७ शीङः परस्य झादेशस्यातो रुडागमः स्यात्। शेरते। शेषे! शयाथे। शेध्वे। शये। शेवहे। शेमहे। शिश्ये। शिश्याते शिश्यिरे। शयिता। शयिष्यते। शेताम्। शयाताम्। शेरताम्। अशेत। अशयाताम्।

---

सूत्रेण झेर्जुस् उस्यपदान्तात् पररूपे। अगमत् इत्यर्थः। अगाः अगातम् अगात। अगाम् अगाव अगाम। ऐष्यत्—आट् आटश्चेति वृद्धिः। ऐष्यताम् ऐष्यन्। ऐष्यः ऐष्यतम् ऐष्यत, ऐष्यम् ऐष्याव ऐष्याम (३) शीङः---शीङ्धातुको गुण हो सार्वधातुक प्रत्ययपरे। आत्मनेपदी। त आतां झ आदिके अपित् सार्वधातुक होनेसे ङित् हैं। ङित्परे (क्ङितिचसे) प्राप्तगुणका निषेधका बाधक है (१६) स्वप्न जनकव्यापारवाचक शीङ् धातुके ङित् होनेसे (अनुदात्तेत्) आत्मनेपदे। शेते–शयनके अनुकूल क्रियावाचक शीधातोः शयनक्रिया वर्तमाने अर्थेलट् तस्य स्थाने आत्मनेपदे, प्रथमपुरुषस्य एकवचने 'त' टिसंज्ञा। टित् आत्मनेपदानां टेः एकारे शीते इति अवस्थायां सार्वतुकसंज्ञक त प्रत्ययपरे, सार्वधातुकार्धधातुकयोः इति गुणस्य क्ङितिच इति निषेधे। निषेधस्य अपवादः (शीङःसार्वधातुके) गुणेः कृते शेते। दो कर्तामें शयनक्रिया वर्तमान हो शीधातोः लट्। द्विवचने (आताम्) सार्वधातुके परे इंकारस्य गुणे (एकारे) तस्य अयादेशे टि (आम्) इति तस्य एत्वे शयाते। यत्र अनेक कर्तारःशयनं कुर्वन्ति। तत्र शेरते शीङ + लट्झि (आत्मनेपदेषु अनतः) झस्थाने अतादेशे अगुणे (४) शीङ्धातुसे परे झके स्थानमे आदेश अत्को रुट्=र आगम हो। टेः एकारे शेरते। शेषे त्वम्। थासः से एत्वे गुणे शपो लुक् यूवां शयाथे यूयं शेध्वे। अहं शये, आवां शेवहे वयं शेमहे। शयनजननीक्रिया वर्तमानकर्ता। शिश्ये। अनद्यतनंभूतकालिक अप्रत्यक्षशयनक्रिया। स्वप्नार्थक शी धातोः परोक्षेलिट् (तस्य स्थाने 'त') तस्य स्थाने लिटस्तझयोरेशिरेच् इतिएश। 'शी' इत्यस्य द्वित्वे अभ्यःमस्य ह्रस्वे उत्तरखण्ड-ईकास्य यण्। शिश्येइति। बालको शिश्याते। "शिश्यः शिश्यिषे शिश्यध्वे। शिश्ये शिश्यावहे शिश्यामहे। अयं धातुः सेट् काशिकायां पठितः। अतः बलादि इट् भवति। अकर्मको धातुः। देवदत्तः शेते। शयनरूपं फलं तस्य जनको व्यापारः एकस्मिन् देवदत्ते तिष्ठति। विभाषेटः सूत्रेण ढत्वम्। शयिता शयनार्थक शी धातो अद्यभिन्नभविष्यकाकिशयनक्रियार्थेलुट् तस्य स्थाने त-तास् तस्य आर्धधातुकसंज्ञा। बलादि-आर्धधातु परे इट् आगमे। धातु इकारस्य गुणे अयादेशे 'त' स्थाने डा। डित्वसामर्थ्यात्-टि (आस्) लोपे रूपम्। एवं शयितारौ शयितारः। शयितासे शयितासाथे। शयिताध्वे। सामान्यभविष्य कालमें शयनजननी क्रियाके लिए शयिष्यते कदा देवदत्तः। आशीवार्दे अर्थेलोट् बहुपरिश्रमः कृतः। शेताम्-आमेतः इतिलोट्-एकारस्य आमि रूपम्।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अशेरत । शयीत । शयीयाताम् । शयीरन् । शयिषीष्ट । अशयिष्ट । अशयिष्यत् । इङ् अध्ययने । २० । इङिकावध्युपसर्गंतो न व्यभिचरतः अधीते । अधीयाते । अधीयते । ५८५ गाङ् लिटि २।४।४९। इङो गाङ् स्याल्लिटि ।

---

धार्मिकौ सुखेन-शयाताम् । श्रमिकाः शेरताम् । शेश्व शयाथां शेध्वम् । आज्ञा चेत् अहं शयै । आवां शयावहैः । वयं शयामहै । एतऐ सूत्रेण, एकारस्थाने ऐकारे । अनद्यतन-समास शयनकक्रिया अर्थे लङ् अट्, आत्मनेपदे 'त' । शपो लुक् । शीङः गुणे अशेत । तौ अशयाताम् । ते अशेरत । अशेथाः अशयाथाम्, अशेध्वम् । अहं ह्यः अशयि । अशेवहि अशेमहि । यत्र शयनक्रियायाः सम्भावना प्रेरणा वा तत्र विधिलिङ् । स शयीत । वह थका होगा सोवे । अङ्गदहनुभन्तौ शयीयातां । कपयः शयीरन् । त्वं शयीथाः शयीयाथां शयीध्वम् । दिने अहं न शयीय । शयीवहि शयीमहि । शयनविषयक आशीवादार्थे ससुखं शयिषीष्ट । शीङ्+लिङ्त सीयुट्, सुट् इट् गुणयादेशे षत्वे ष्टुत्वे । शयिषीयास्ताम्, शयिषीरन् । वे सुख की नीद लें त्वं सुखं शयिषीष्ठाः शयिषीयास्थां शयिषीवहि शयिषीय शयिषीमहि, शयिषीमहि । अब हमलोग सुख से शयन करें । आपके आर्शीर्वाद से । अशयिष्ट । समाप्त शयनक्रिया अर्थे लुङ् अट् आत्मनेपदे त च्लेः सिच् अशीस्त इट् गुणे, आयादेशे, षत्वे ष्टुत्वे । अशयिषातम्, अशयिषत । अशयिष्ठाः अशयिढ्वम्ध्वम् । अशयिषि, अशयिष्वहि, अशयिष्महि । यदा स अशयिष्यत् तदा सुखम् अलप्स्यत् । यह भी अनेकार्थक, जो उपसर्ग से बोध्य है । जैसे-अधिशेते, बैकुण्ठं हरिः । आराम करना । पापी अनुशेते=पश्चातापं करोति । कविः आशेते आशयं धारयति । नास्तिकः संशेते, विशेते =विशेष सन्देह करता है ।

(२०) इङ् इत् इ धातु का अध्ययन=पढ़ना या बोधके अनुकूल क्रिया अर्थः । इङिकाविति—इङ् तथा इक् स्मरणार्थक धातु अधिउपसर्गको (न व्यभिचरतः) कभी त्यागते नही । अधिके योगमें ही प्रयोग अटल है । ङित् होने से आत्मनेपद । अधीते =अधिउपसर्गक अध्ययनार्थक इङ्धातोः ज्ञानजनकक्रियावर्तमाने लट्, त, टेः एत्वे, सार्वधातुकसंज्ञा शपो लुक् इकारयोः सवर्णदीर्घे रूपम् । अधीयते, आताम् टेः अत्वे, 'अचिश्नुधातु' इहि इयङ् सवर्णदीर्घे । बहुवचने झस्थाने, आत्मनेपदेष्वजतः इति अत् आदेश, । टेः एत्वे अधीयते । अपित् प्रत्ययः ङित् भवति । तेन गुणनिषेधः । त्वं वेदम् अधीषे । युवां शास्त्रमधीयाथे । यूयं तर्कम् अधीध्वे । अहं प्रथमायाम् अधीये । आवां नीतिम् अधीवहे । वयं धर्मम् अधीमहे ।

(५८५) गाङ्=इङ् धातुको गाङ् आदेश हो लिट् परे । अधिजगे अधिपूर्वक स्वाध्याय जनक् क्रियावाचक इङ् धातो परोक्षाध्ययन क्रियासमाप्ते अर्थे लिट् आत्मनेपदे 'त' तस्य स्थाने एश् । लावस्थायां 'गाङ्लिटि' इति 'गा' आदेशे तस्य द्वित्वे,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**अधिजगे । अधिजगाते । अधिजगिरे । अध्येता । अध्येष्यते । अधीताम् । अधीयाताम् । अधीयताम् । अधीष्व, अधीयाथाम् अधीध्वम् । अध्ययै, अध्ययावहै, अध्ययामहै । अध्यैत, अध्ययाताम्, अध्यैत । अध्यैथाः, अध्यैयाथाम्, अध्यैध्वम्, अध्यैयि, अध्यैवहि, अध्यैमहि । अधीयीत । अधीयीयाताम् । अधीयीरन् । अध्येषीष्ट । ६ विभाषा लुङ्लृङोः २ । ४ । ५० । इङो गाङ् वा**

---

अभ्यासस्य ह्रस्वे, कुत्वे च ङित् तकारपरे 'आतोलोप' इट् च, आकारलोपे रूपम् । **अधिजगाते** । पहले ही अध्ययन किये, आताम् परे आतोलोपः इति विशेषः । छात्राः परश्व अधिजगिरे झ स्थाने इरेच् एत्वे आकारलोपे । त्वम् कदा वेदम् अधिजगिषे । यूवां यदा अधिजगाथे, तदा यूयं कक्षायां अधिजगिध्वे । अहं भोजनकाले **अधिजगे** । आवां ब्राह्ममुहुर्ते **अधिजगिवहे** । वयं दशघटिका **अधिजगिमहे** । हलादिप्रत्ययपरे क्रादिनियमात् इट् भवति । इट् भवति । तेन सर्वे आजादयः आकारलोपभाजो भवन्ति । आगामिदिने **अध्येता** । अधिइङ् धातोः अनद्यतनभविष्यकालिक अध्ययन क्रिया अर्थे लुट् आदि । अयम् अनिट् धातुः । अत इट् न भवति । इकारस्य गुणे यणिरूपम् । तुमलोग छुट्टीके बाद पढ़ोगे । हमलोग त्यौहार बीतनेपर स्वाध्याय करेंगे । **अध्येष्यते**=वह सदा पढ़ेगा । अध्ययन जनकक्रियाके विषयमें विधि, आज्ञा प्रेरणा सन्मान, अनुरोध, निश्चय, प्रार्थना प्रतीत हो तब अधिपूर्वक **इधातोः** लोट् । तस्य स्थाने 'त' एत्व 'आम् एतः' शपोलुक् सवर्णदीर्घे **अधीयाताम्**, अजादिविभक्तिपरे सवर्णदीर्घे अधीयाताम् । यूयम् अधीयताम् तुमलोग यशकेलिए धर्मशास्त्र पढ़ो । **अधीस्व**= थासः से सवाभ्यां वामौ इति एकारस्त 'व' आदेशे । हलादिपरे सवर्णदीर्घे, यूवां नीतिम् अधीयाथाम् धर्मंवा, यूयं विज्ञानम् अधीध्वम् । अहं हितोपदेशम् **अध्ययै** ।= उत्तमपुरुषस्यएकवचने इट् आट् अधि इ आइ धातु—ईकारस्य गुणे अयादेशे, टेः एत्वे, आटश्चेति वृद्धिः, यणि अध्ययै एवं सूक्तिम् अध्ययावहै । महाभारतं अध्ययाम हैं । **अध्यैत** अध्ययनक्रिया आजसे भिन्नभूतकालमें हुई हो तब लङ् आट् आत्मनेपदे 'त' शपो । लुक् । अधि आ इ त । 'आटश्च' वृद्धिः, उपसर्ग इकारस्य यण् । **अध्यैयाताम्** = वे दोनों परसों पढ़े थे । अध्यैयत जनाः रामायणं । यथा त्वं पुराणं **अध्यैथाः** । यूवां वेदम् अध्यैयाथाम् । अहं परश्वः पुस्तकम् अध्यैयि । वयं नास्तिकधर्मंमध्यैमहि । **अधीयीत** । अध्ययन की सम्भावना अर्थमें लिङ् 'त' सीयुट्, शप् लुक् अनुबन्धलोपे 'अचिश्नु' इति इयङादेशे । अपित्सार्वधातुकं ङित् भवति । तेन न गुणः सवर्णदीर्घ । कृष्णबलौ गुरुकुले **अधीयीयाताम्** । अत्र सीयुट्—यकारस्य न लोपः । क्या वे लोग तर्क पढ़ेंगे या धर्म **अधीयीथाः** अधीयीयाथाम् अधीयीध्वम् । अहं ज्योतिषम् अधीयीय । आवां मुहूर्तचिन्तामणिम् । अधीयीवहि । **अध्येषीष्ट**, सीयुट् सुट्षत्व ष्टुत्व इति विशेषः । अध्ययनविषयक आशीर्वादजनकक्रिया अर्थः अध्येषीष्ठा । **अध्येषीय** (६) इङ्के स्थानमें गाङ् आदेश हो, **विभाषा**=विकल्पसे । लुङ् या लृङ्

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्यात । ७ गाङ् कुटादिभ्योऽञ्णिन्ङित् १।२।१। गाङादेशात् कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः । ८ घु-मा-स्था-गा-पा-जहाति-सां हलि ६।४।६६। एषामात ईत् स्याद्धलादौ क्ङित्यार्धधातुके । अध्यगीष्ट । अध्येष्ट । अध्यगीष्यत । अध्यैष्यत । दुह प्रपूरणे:। दोग्धि । दुग्धः । दुहन्ति । धोक्षि । दुग्धे । दुहाते । दुहते । धुक्षे । दुहाथे । धुग्ध्वे । दुहे । दुह्वहे । दुह्महे । दुदोह, दुदुहे । दोग्धासि, दोग्धासे । धोक्ष्यति, धोक्ष्यते । दोग्धु, दुग्धात् । दुग्धाम् । दुहन्तु । दुग्धि,

---

परे 'ल' अवस्थामें ही गाङ् भवति । ( ७ ) गाङादेशात्=इ के स्थानमें गा आदेशसे या कुटादिभ्य=तुदादिगणप्रठित कुट् इत्यादि धातुओंसे परे ञित् णित्से भिन्न प्रत्यय ङित हो ( ८ ) घु=घुसंज्ञक ( दा धा ) मा = नापना स्था = गति निवृत्ति गा = गाना, पानार्थक पा, त्यागार्थक ओहाक् । नाशार्थक 'षो; इन धातुओंके आकारको उकार ही, हलादिकित् ङित् आर्धधातुक परे । अध्यगीष्ट अध्ययनार्थक अधिपूर्वक 'इ' धातो. समाप्त-अध्ययनक्रिया अर्थे लुङ् । विभाषा 'लुङ् लृङोः' इति 'इ' स्थाने 'गा' आदेशे लुङ् 'त' च्लेः सिच् । तस्य ङित् णित् भिन्न ङित् संज्ञाकृते । आर्धधातुकसंज्ञायां मास्था इति 'गा' अकारस्य ईत्वे, षत्वे, ष्टुत्वे, उपसर्ग-इकारस्य यणि रूपम । गाङ् आदेशस्य अभावे-आडागमे । आटश्चेति वृद्धिः । प्रथमम् अट् आगमः इति विशेषः । अध्यैष्ट-अध्यैषाताम् अध्यैषत । अध्यैषाथाम् अध्यैढ्वम् । अध्यैषि, अध्यैष्वहि अध्यैष्महि । यदि परिश्रमेण परीक्षापुस्तकम् अध्यगीष्यत्, तदा उदतररिष्यत् अध्यैष्यत अध्यैष्येताम् अध्यैष्यन्त । अध्यैष्ठाः अध्यैष्येथाम् अध्यैष्यध्वम् । अध्यैष्ये अध्यैष्यावहि अध्यैष्यामहि । अत्र 'आथाम्' परे आतोङितः इति प्रवर्तते ( २१ ) दुहधातुक्रियाफल यदि कर्तृगामी हो तब आत्मने-पदम् । यदा फलं परगामी तदा परस्मैपदम् । पूरणार्थक सकर्मक दुह्धातोः दोहनक्रिया वर्तमानकाले लट् तिप् शपो लुक् । ( दादेर्धातोर्घः ) तस्य झलांजश् 'ग' झश् परे । झषस्तथोर्धोऽधः ईति तकारस्य धः । गुणे दोग्धि=गोपौ पयांसि दुग्धः । अहिर गाय से दूध दुहते हैं, त्वम् धोक्षि दुह सिप् शपोलुक दादेर्धातोर्धः एकाचोवशोभष् इति भष् भावेन 'द' स्थाने घ कृते । जश्त्वे, चर्त्वे 'क' कृते सिपः सकारस्य षत्वे रुपम् । दुग्धः दोह्मि दुह्व दुह्म । हमलोग सभी भैंस दुहते हैं । यहाँ क्रियाफल परगामी है । कर्तृगामि दोहन क्रियाफले स स्वार्थ—दुग्धे दुहाते दुहते । त्वमं धुक्षे । दुहाथे दुग्ध्वे । दुहे दुह्वहे । दुदुहे, दुदोह (धरित्रीम्) दोग्धा गोपाल नन्दन । धोक्ष्यति रघु प्रजाकेलिए उसीसे कररुपी दूध दुहेंगे । दोग्धु = तुम तीन गाय दुहो । दुग्धात्=सदा दुहते रहो । दुग्धाम्=तस् ( ताम् ) त स्थाने ध । हस्थाने धत्वे, जश्त्वे दुहन्तु । त्वं सर्वाः गाः + दुक्षि । दुग्धः दुग्ध । दोहैं, दोहावहै दोहामहै । दुग्धां दुहातां दुहन्ताम् । धुक्ष्व=दुह थासः 'स' सवाभ्यां वामौ एस्थाने व कृते । धत्वे, भूषभावे, जश्त्वे, चर्त्वे क्षत्वे । दुहाथां दुग्ध्वम् । अधोक् पूरणार्थके दुह धातोः अद्यभिन्नसमास दोहनक्रिया काले लङ्ति इकारलोपे, अट्, तकारस्य संयोगान्तलोपे धत्वे भषभावे गुणे, जश्त्व, चर्त्वे । अधोक् । अदुग्धाम् दोनों कल दुहे थे सर्वे अदुहन् । अधोः अदुग्धाम् । अदुहम् अदुह्म ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दुग्धात् । दुग्धम् । दुग्ध । दोहानि । दोहाव । दोहाम । दुग्धाम् । दुहाताम् । दुहताम् । धुक्ष्व । दुहाथाम् । धुग्ध्वम् । दोहै । दोहावहै । दोहामहै । अधोक् । अदुग्धाम् । अदुहन् । अदोहम् । अदुग्ध । अदुहाताम् । अदुहत । अधुग्ध्वम् । दुह्यात्, दुहीत । ९ लिङ्सिचावात्मनेपदेषु १ । २ । ११ । इक्समीपाद्धलः परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । धुक्षीष्ट । ५९० शल इगुपधाद-निटः क्सः ३ । १ । ४५ । इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात् । अधुक्षत् । १ लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ७ । ३ । ७३ । एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि । अदुग्ध, अधुक्षत ।

२ क्सस्याचि ७ । ३ । ७२ । अजादौ तङि क्सस्य लोपः । अधुक्षाताम् ।

---

( ९ ) लिङ्सिचौ – इक्के समीप हलसे परे झलादि लिङ् या सिच्को कित् हो तिङ्परे । धुक्षीष्ट – प्रपूरणार्थकदुह धातोः दोहन विषयक–आशीर्वादार्थे लिङ् । अत्र लिङ्सिचा आत्मनेपदेषु इतिझलादि लिङ् ( सीयुट्सहित–आशीर्लिंङ् अस्ति ) तं कितं करोति । तस्य फलं गुणनिषेधः । सुट् षत्वे ष्टुत्वे घत्वे भष्भावे जश्त्वे चर्त्वे क्षत्वे । धुक्षीयास्तां धुक्षीरन् धुक्षीष्ठाः । धुक्षीयास्थां धुक्षीध्वं धुक्षीय धुक्षीवहि धुक्षीमहि ।

( ५९० ) शल – इक्हो उपधामें ऐसे शलन्त धातुके अनिट् होनेपर च्लिको क्स आदेश हो । क्समें क अनुबन्ध है 'स' अदन्तः । अधुक्षत्=प्रपूरणार्थक दुह धातोः समाप्त दोहनक्रियार्थे लुङ् तिप् इकारलोपे, अट्, च्लि, तस्य सिच् प्राप्ते, तं बाधित्वा शलइगुपधात् इति सूत्रेण उपधायाः इक्–दुह–उकारः । एवं शलन्तधातुः दुह इति अनिट् अपि अस्ति, अतः च्लिस्थाने क्स आदेशे, ततो घत्वेभषभावेकत्वे षत्वे क्षत्वे । गोपी श्यामाः अधुक्षताम् अधुक्षन् । अधुक्षः । पृथ्वीम् अधुक्षतम, अधुक्षत, अहं गाम् अधुक्षम् । अधुक्षाव अधुक्षाम । १ लुग्वेति–वृद्धि अर्थवाचक दिह प्रपूरणार्थक दुह धातु, आस्वादने अर्थे लिह, तथा गुह धातुके क्सका लुक् विकल्प से हो । दन्त्यस्थानक तङि=आत्ममेपद परे । त, थास, ध्वं ये दन्त्य आत्मनेपद हैं । इन्हींके क्सका लोप विकल्प हो । व का दन्त्य स्थान भी है वकारस्य दन्त्योष्ठम् । वहि परे भी लुक् हो । अदुह स्त् इति दशायां लुगवादुहदिह आदि सूत्रेण क्स, लोपपक्षे घत्वे तथोर्धोऽधः घस्य जश्त्वे । अदुग्ध । यदा लोपो न भवति तदा अधुक्षत । २अचि=अजादिआत्मनेपद परे क्सका लोप हो, वह लोप अन्त्य अल् अके स्थानमें हो । अधुक्षाताम्–अदुह स आताम् अत्र अजादिः आत्मनेपदं आताम् परे क्स सकारस्य आकारलोपे घं, भष; ग, क क्ष, यदि क्सका अकार लोप न होता । आतोङितः से आताम्के आको इय् होने लगता । मेघशलः मेघान् अधुक्षन्त । अदुह स झ झोऽन्तः इति अन्य आदेशे



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अधुक्षन्त। अदुग्धाः, अधुक्षथाः। अधुक्षाथाम्। अधुग्ध्वम्, अधुक्षध्वम्। अधुक्षि। अदुह्वहि, अधुक्षावहि। अधुक्षामहि। अधोक्ष्यत। एवं दिह उपचये। २२। लिह आस्वादने। २३। लेढि। लीढः। लिहन्ति। लेक्षि। लीढे। लिहाते। लिहते। लिक्षे। लिहाथे। लीढ्वे। लिलेह, लिलिहे। लेढासि, लेढासे। लेक्ष्यति, लेक्ष्यते। लेढु। लीढाम्। लिहन्तु। लीढि। लेहानि। लीढाम्। अलेट्, अलेड्। अलिक्षत्, अलीढ, अलिक्षत। अलेक्ष्यत्,

---

कृते सति। क्सस्याचि इति क्स अकारस्य लोपः। तस्य फलम् आत्मनेपदेष्वनतः इति अत् आदेशो न इति। त्वम् अजाः अदुग्धाः अहं महिषी अधुक्षि। हमलोग पशु दुहनेका कार्य समाप्त किये। यदा पशवः अधोक्ष्यत् तदा दुग्धस्य मन्थनम् अभविष्यत्। ( २१ ) एवम्=इसी प्रकार, दिह्धातुका उपचय=वृद्धि होनेके अनुकूल क्रिया अर्थः। अकर्मकधातुः क्योंकि फल और फलजनकक्रिया दोनोंका आधार एक है। रुपं दुहवत् देग्धि दिग्धे। दिदेह। दिदिहे। देग्धा धेक्ष्यति देग्धु अधेक् धिक्षीष्ट। दिहीत अधिक्षत् अदिग्ध। उपदेह सन्देह विदेह आदि शब्द इसी धातुसे बने हैं।

( २२ ) लिह्धातुका आस्वादन=स्वाद ( रस लेना ) चाटनेके अनुकूल व्यापारः स्वरितेत्, उभयपदी, सकर्मकः। क्योंकि स्वाद रुप फल उसका जनक व्यापारका आधार भिन्न भिन्न है। सलेहनं ( चूसकर ) लेढ़ि=आस्वादते आस्वादनार्थक लिट-धातोः वर्तमान-आस्वादन क्रिया अर्थे लट् 'ति' होढः। झषस्तथोर्धोऽधः ष्टुत्वेन ढः, ढोढेलोपः, गुणे लेढ़ि। एवं लीढ़ः ढत्व धत्व ष्टुत्व ढोढे लोपः। अत्र गुणः प्राप्नोति। तं बाधित्वा ढलोपे पूर्वस्य दीर्घो अणः, इति इकारस्य दीर्घे ते जम्बुफलानि लिहन्ति। त्वम् आम्रफलानि लेक्षि। अत्र सिप् परे ढ क, षढोकःसिः अत्र इणः परं सकारं दृष्ट्वा षकारो भवति। कष = क्ष, लिक्षे=थासःसे ढ क ष क्ष एत्व,। लिलेह, लिलिहे। आस्वादन क्रिया पहले ही समाप्त हो अदृष्ट हो। लेढु आस्वादनार्थक लिट्धातोः स्वादविषयक प्रेरणार्थक लोट् सिप् शपोलुक् सिप् स्थाने अपित्हि आदेशे। हि स्थाने धि धत्व ष्टुत्व ढलोप दीर्घे रुपम्। लेहानि अत्र आट् पित् अस्ति। तेन गुणो भवति। लिढां लिहातां लिहतां लिक्ष्व लिहाथां लिढ्वम् लेहै लेहावहै लेहामहै। अलेट्—ड्। अलीढ़ाम् अलिहन्। अलेट् अलीढ़म् अलीढ़। अलेहम् अलिह्व अलिह्म। लिह्यात्। लिहीत। लिहीयाताम् लिहीरन्। आशीर्लिङ्। अलिक्षत् अलिक्षताम् अलिक्षन्। अत्र शलइगुपधादनिटःक्स यदा दन्त्य तङ् प्रत्ययपरे मिलति तदा लुग्वा दुहदिह आदि सूत्रेण क्स। अकारस्य लुक् विकल्पे। अलीढ़ अलिक्षाताम् अलिक्षन्त। अलीढ़ाः अलिक्षाथांः इत्यादि। चटनी अर्थमें अलेक्ष्यत् अवलेह समलेह सम्यक् आस्वादिनी आदिशब्द लिह्धातुकी देन है। यदा औषधम्

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अलेक्ष्यत। ब्रूञ् व्यक्तायां वाचि। २४। ३ ब्रुवः पञ्चानामादित आहो ब्रुवः ३।४।८४। ब्रुवो लटस्तिबादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुव-श्चाहादेशः। आह। आहतुः। आहुः। ४ आहस्थः ८।२।३५। झलि परे। चर्त्वम्। आत्थ। आहथुः।

५९५ ब्रुव ईट् ७।३।९३। ब्रुवः परस्य हलादेः पित ईट् स्यात्। ब्रवीति। ब्रूतः। ब्रुवन्ति। ब्रूते। ब्रुवाते। ब्रुवते। ६ ब्रुवो वचिः २।४।५३।

---

तदा रक्त शुद्धिः अभविष्यत्। ( २३ ) ब्रूधातु व्यक्त वाणी–स्पष्ट बोलनेके अनुकूल क्रिया अर्थः। अकार इत् होनेसे आत्मनेपद, स्पष्ट वाणी के लिए प्रसिद्धः। मनुष्यमात्र में उपयोगी है। उच्चारणजनकव्यापारका समान आधार होनेसे अकर्मक है।

( ३ ) ब्रूवः = बूधातुसे परे लट् स्थान तिप् तस् झि सिप् थस् इन पाँचों के स्थानमें णालादयः। णल् अतुप् उस् थल् अथुम् ये पाँच आदेश क्रम से विकल्पसे हों। साथ में ब्रुको आह आदेश भी हो। आह–स्पष्ट अर्थवाचक ब्रुधातोः स्पष्ट — उच्चारणे अर्थे वर्तमाने लट् तस्य स्थाने तिप् ततः ब्रुवः पञ्चानामादित आहोब्रुवः इति तिप् स्थाने णल ब्रुस्थाने आह। अनुबन्धलोपे आह। तौ आहतुः ( दोनों स्पष्ट बोले ) ते आहुः ( वे साफ बोले )। ( ४ ) आहके स्थानमें थ आदेश हो झल् संज्ञक अक्षर परे। अन्त्य अल् ह के स्थान में थ आ। चर्त्वे। त्वम् आत्थ, युवाम् ( ५९५ ) ब्रूवः = ब्रूधातुसे परे हलादि पित् प्रत्ययको ईट् आगम हो। यदा लट् स्थानक तिप् स्थाने णलादयो न भवन्ति, तदा ब्रूति शपोलुक् बुब्रूः ईट् इति सूत्रेण हलादिपित् प्रत्यय तिप् शिप् मिप् तस्य ईट् आगम। सार्वधातुक परे गुणः अय आदेशः श्लोकं ब्रवीति। महात्मानौ ब्रूतः। नेतारः सभायां ब्रूवन्ति, ब्रवीषि ब्रूथः ब्रवीमि ब्रूव ब्रूम। ब्रुवन्ति इत्यत्र झोन्तः इति झ स्थाने अन्तादेशे कृते। गुण निषेधे सति, अत्र श्नुधातु इति उवङादेशे। ब्रुवन्ति सभी अजादि प्रत्ययों में उवङ् भवति, बूते ब्रूषे ब्रूवाथे ब्रूध्वे। ब्रुवे ब्रूवहे ब्रूमहे। यत्र उवङ् तत्र ह्रस्व उकारेः ( ६ ) ब्रुवः = ब्रूके स्थानमें बच् आदेश हो आर्धधातुक-प्रत्यय परे। उवाच—स्पष्टभाषणार्थक ब्रूधातोः अप्रत्यक्षसमाप्तभाषण क्रियाकाले अर्थे लिट् तिप् णल् आदेशे 'लिट्च' इति आर्धधातुकसंज्ञा तस्मिन् परे 'ब्रुवो वचिः' इति ब्रूस्थाने वच् आदेशे। तस्य द्वित्वे, अभ्यासस्य हलादिशेषे ववच् अ अभ्यास वकारस्य लिटि अभ्यासस्योभयेषां सूत्रेण सम्प्रसारण उकारे। उपधा दीर्घे रुपम्। ऊचतुः–प्रथमही बोले, ब्रू अतुस् बच् आदेशे असंयोगात् लिट् कित् भवति, तेन अतुस् कित् अस्ति। ततो द्वित्वं प्राप्नोति, सम्प्रसारणंच प्राप्नोति। अत्र एष निर्णयो

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अधुक्षन्त। अदुग्धाः, अधुक्षथाः। अधुक्षाथाम्। अधुग्ध्वम्, अधुक्षध्वम्। अधुक्षि। अदुह्वहि, अधुक्षावहि। अधुक्षामहि। अधोक्ष्यत। एवं दिह उपचये। २२। लिह आस्वादने। २३। लेढि। लीढः। लिहन्ति। लेक्षि। लीढे। लिहाते। लिहते। लिक्षे। लिहाथे। लीढ्वे। लिलेह, लिलिहे। लेढासि, लेढासे। लेक्ष्यति, लेक्ष्यते। लेढु। लीढाम्। लिहन्तु। लीढि। लेहानि। लीढाम्। अलेट्, अलेड्। अलिक्षत्, अलीढ, अलिक्षत। अलेक्ष्यत्,

---

कृते सति। क्सस्याचि इति क्स अकारस्य लोपः। तस्य फलम् आत्मनेपदेष्वनतः इति अत् आदेशो न इति। त्वम् अजाः अदुग्धाः अहं महिषीः अधुक्षि। हमलोग पशु दुहनेका कार्य समाप्त किये। यदा पशवः अधोक्ष्यत् तदा दुग्धस्य मन्थनम् अभविष्यत्। (२१) एवम्=इसी प्रकार, दिहधातुका उपचय=वृद्धि होनेके अनुकूल क्रिया अर्थः। अकर्मकधातुः क्योंकि फल और फलजनकक्रिया दोनोंका आधार एक है। रूपं दुहवत् देग्धि दिग्धे। दिदेह। दिदिहे। देग्धा धेक्ष्यति देग्धु अधेक् धिक्षीष्ट। दिहीत अधिक्षत् अदिग्ध। उपदेह सन्देह विदेह आदि शब्द इसी धातुसे बने हैं।

(२२) लिहधातुका आस्वादन=स्वाद (रस लेना) चाटनेके अनुकूल व्यापारः स्वरितेत्, उभयपदी, सकर्मकः। क्योंकि स्वाद रुप फल उसका जनक व्यापारका आधार भिन्न भिन्न है। सलेहनं (चूसकर) लेढ़ि=आस्वादते आस्वादनार्थक लिट-धातोः वर्तमान-आस्वादन क्रिया अर्थे लट् 'ति' होढ़ः। झषस्तथोर्धोऽधः ष्टुत्वेन ढ़ः, ढ़ोढ़ेलोपः, गुणे लेढ़ि। एवं लीढ़ः ढ़त्व धत्व ष्टुत्व ढ़ोढ़े लोपः। अत्र गुणः प्राप्नोति। तं बाधित्वा ढ़लोपे पूर्वस्य दीर्घो अणः, इति इकारस्य दीर्घे ते जम्बुफलानि लिहन्ति। त्वम् आम्रफलानि लेक्षि। अत्र सिप् परे ढ़ क, षढ़ोकःसिः अत्र इणः परं सकारं दृष्ट्वा षकारो भवति। कष = क्ष, लिक्षे=थासःसे ढ़ क ष क्ष एत्व,। लिलेह, लिलिहे। आस्वादन क्रिया पहले ही समाप्त हो अदृष्ट हो। लेढु आस्वादनार्थक लिट्धातोः स्वादविषयक प्रेरणार्थक लोट् सिप् शपोलुक् सिप् स्थाने अपित्हि आदेशे। हि स्थाने धि धत्व ष्टुत्व ढ़लोप दीर्घे रुपम्। लेहानि अत्र आट् पित् अस्ति। तेन गुणो भवति। लिढां लिहातां लिहतां लिक्ष्व लिहाथां लिढ्वम् लेहै लेहावहै लेहामहै। अलेट्—ड्। अलीढ़ाम् अलिहन्। अलेट् अलीढ़म् अलीढ़। अलेहम् अलिह्व अलिह्म। लिह्यात्। लिहीत। लिहीयाताम् लिहीरन्। आशीर्लिङ्। अलिक्षत् अलिक्षताम् अलिक्षन्। अत्र शलइगुपधादनिट्क्स यदा दन्त्य तङ् प्रत्ययपरे मिलति तदा लुग्वा दुहदिह आदि सूत्रेण क्स। अकारस्य लुक् विकल्पे। अलीढ़ अलिक्षाताम् अलिक्षन्त। अलीढ़ाः अलिक्षाथाः इत्यादि। चटनी अर्थमें अलेक्ष्यत् अवलेह समलेह सम्यक् आस्वादिनी आदिशब्द लिह्धातुकी देन है। यदा औषधम

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अलेक्ष्यत। ब्रूञ् व्यक्तायां वाचि। २४। ३ ब्रुवः पञ्चानामादित आहो ब्रुवः ३।४।८४। ब्रुवो लटस्तिबादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुव-श्चाहादेशः। आह। आहतुः। आहुः। ४ आहस्थः ८।२।३५। झलि परे। चर्त्वम्। आत्थ। आहथुः।

५९५ ब्रुव ईट् ७।३।९३। ब्रुवः परस्य हलादेः पित ईट् स्यात्। ब्रवीति। ब्रूतः। ब्रुवन्ति। ब्रूते। ब्रुवाते। ब्रुवते। ६ ब्रुवो वचिः २।४।५३।

---

तदा रक्त शुद्धिः अभविष्यत्। ( २३ ) ब्रूधातु व्यक्त वाणी–स्पष्ट बोलनेके अनुकूल क्रिया अर्थः। ञकार इत् होनेसे आत्मनेपद, स्पष्ट वाणी के लिए प्रसिद्धः। मनुष्यमात्र में उपयोगी है। उच्चारणजनकव्यापारका समान आधार होनेसे अकर्मक है।

( ३ ) ब्रूवः = ब्रूधातुसे परे लट् स्थान तिप् तस् झि सिप् थस् इन पाँचों के स्थानमें णालादयः। णल् अतुप उस् थल् अथुम् ये पाँच आदेश क्रम से विकल्पसे हों। साथ में ब्रुको आह आदेश भी हो। आह–स्पष्ट अर्थवाचक ब्रुधातोः स्पष्ट — उच्चारणे अर्थे वर्तमाने लट् तस्य स्थाने तिप् ततः ब्रुवः पञ्चानामादित आहोब्रुवः इति तिप् स्थाने णल ब्रुस्थाने आह। अनुबन्धलोपे आह। तौ आहतुः ( दोनों स्पष्ट बोले ) ते आहुः ( वे साफ बोले )। ( ४ ) आहके स्थानमें थ आदेश हो झल् संज्ञक अक्षर परे। अन्त्य अल् ह के स्थान में थ आ। चर्त्वे। त्वम् आत्थ, युवाम् ( ५९५ ) ब्रूवः = ब्रूधातुसे परे हलादि पित् प्रत्ययको ईट् आगम हो। यदा लट् स्थानक तिप् स्थाने णलादयो न भवन्ति, तदा ब्रूति शपोलुक् बुब्रूः ईट् इति सूत्रेण हलादिपित् प्रत्यय तिप् शिप् मिप् तस्य ईट् आगम। सार्वधातुक परे गुणः अय आदेशः श्लोकं ब्रवीति। महात्मानौ ब्रूतः। नेतारः सभायां ब्रुवन्ति, ब्रवीषि ब्रूथः ब्रवीमि ब्रूव ब्रूम। ब्रुवन्ति इत्यत्र झोन्तः इति झ स्थाने अन्तादेशे कृते। गुण निषेधे सति, अत्र श्नुधातु इति उवङादेशे। ब्रुवन्ति सभी अजादि प्रत्ययों में उवङ् भवति, ब्रूते ब्रूषे ब्रुवाथे ब्रूध्वे। ब्रुवे ब्रूवहे ब्रूमहे। यत्र उवङ् तत्र ह्रस्व उकारेः ( ६ ) ब्रूवः = ब्रूके स्थानमें वच् आदेश हो आर्धधातुक-प्रत्यय परे। उवाच–स्पष्टभाषणार्थक ब्रुधातोः अप्रत्यक्षसमाप्तभाषण क्रियाकाले अर्थे लिट् तिप् णल् आदेशे 'लिट्च' इति आर्धधातुकसंज्ञा तस्मिन् परे 'ब्रुवो वचिः' इति ब्रूस्थाने वच् आदेशे। तस्य द्वित्वे, अभ्यासस्य हलादिशेषे ववच् अ अभ्यास वकारस्य लिटि अभ्यासस्योभयेषां सूत्रेण सम्प्रसारण उकारे। उपधा दीर्घे रुपम्। ऊचतुः–प्रथमही बोले, ब्रू अतुस् बच् आदेशे असंयोगात् लिट् कित् भवति, तेन अतुस् कित् अस्ति। ततो द्वित्वं प्राप्नोति, सम्प्रसारणंच प्राप्नोति। अत्र एष निर्णयो

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

आर्धधातुके । उवाच । ऊचतुः । ऊचुः । उवचिथ, उवक्थ । ऊचे । वक्तासि, वक्तासे । वक्ष्यति, वक्ष्यते । ब्रवीतु, ब्रूतात् । ब्रुवन्तु । ब्रूहि । ब्रवाणि । ब्रूताम् । ब्रूवै । अब्रवीत्, अब्रूत । ब्रूयात्, ब्रुवीत । उच्यात्, वक्षीष्ट । ७ अस्यतिवक्तिख्यातिभ्योऽङ् ३ । १ । ५२ । एभ्यश्च्लेरङ् स्यात् । ८ वच

---

यत्सम्प्रसारणं तदाश्रयं कार्यं बलवत् । इति परिभाषाबलेन वचिस्वपि यजादीनां किति सूत्रेण द्वित्वस्य अपेक्षया प्रथमं वस्थाने उसम्प्रसारणें तदाश्रयकार्यं सम्प्रसारणाच्चेति पूर्वरूपम् । तदनन्तरं द्वित्वादिकार्यं भवति । ऊचतुः । सवर्ण दीर्घे । ऊचुः । उवचिथ ब्रू धातुः तास प्रत्यय परे अनिट् अकारवांश्च । तेन थलि इट् विकल्पः उवचिथ, यदा न इट तदा चोः कुः इति कुत्वे उवक्थ उचे—ब्रू 'लिट्' त, एश्, असंयोगात् लिट् कित्, अतः प्रथमं सम्प्रसारणं पश्चात् द्वित्वादि कार्यम् । ऊचाते ऊचिरे । ऊचिवे ऊचाथे ऊचिध्वे, ऊचे, ऊचिवहे ऊचिमहे । वक्ता ( कल स्पष्ट बोलेगा ) वह सदा निष्पक्ष बोलेगा । वक्ष्यति—स्यु परे वच् चकारस्य कुत्वेन क सकारस्य षत्वे कष = क्ष, वक्ष्यति, वक्ष्यतः वक्ष्यन्ति ब्रवीतु ब्रूतात् ब्रूतां ब्रुवन्तु, ब्रूहि ब्रूतात् ब्रूतं । ब्रवानि ब्रवाव ब्रवाम । एवं ब्रूतां ब्रूतां ब्रुवातां ब्रुवताम् । ब्रूष्व बुवाथां ब्रूध्वं ब्रवै ब्रवावहै ब्रवामहै । अब्रवीत् अद्य भिन्नभूतकाले समाप्तस्वष्टोच्चारणक्रिया अर्थे लङ् तिप् इकारलोप अट् ब्रुवः ईट् गुणे अवादेशे । अब्रूतात् अब्रुवन् अब्रवीः अब्रुतम् अबूत अब्रुवम् अब्रूव अब्रूम । अब्रूत अब्रुवाताम् अब्रुवन्त अब्रूथाः ब्रूयात् स्पष्टोच्चारण विषयक विधि, आज्ञा प्रेरणा प्राथंना सम्भावनायां लिङ् । ब्रूयातां ब्रूयुः ब्रूयाः ब्रूयातं ब्रूयात ब्रूयाम् । ब्रुवीत । अत्र सीयुट् विशेषः । ब्रुवीयाताम् ब्रुवीरन् ब्रूवीथाः ।

आशीर्लिङ स्पष्ट उच्चारण विषयक आशीर्वाद अर्थमें वच् यास्त किदाशिषि इत्यनेन यासुट् कित् भवति । तस्य फलं वचि स्वपियजादीनामीति सम्प्रसारणम् । उच्चात् उच्चास्ताम् उच्चासुः । उच्चाः उच्चास्म । यदा आत्मनेपदं तदा न कित् न सम्प्रसारणाम् । अतो वच् सी स् त कुत्वे पत्वे ष्टुत्वे वक्षीष्ट ।

( ७ ) अस्यतिप्रक्षेपणार्थक अस्, वोधनार्थक वच् प्रकथनार्थक ख्या, धातुसे परे । च्लिको अङ् आदेश हो । ( ८ ) वच्को 'उम्' आगम हो अङ् परे । अवोचत्—प्रवचनार्थक ब्रूधातोः समाप्तप्रवचन क्रियाकालवाचके लुङ् तस्यस्थाने तिप् । इकारलोपे अट् च्लेः-अङ् । अस्यतिवक्ति सूत्रेण । तस्य आर्धधातुकसंज्ञा ब्रूस्थाने वच् आदेशे अङ्परे वच, उम्, आदेशे मित्वात् अन्त्य अच् । वकारस्य अकारः । तस्मात् परः उः अवउच् अत् इत् दशायां गुणे । अवोचत् अवोचताम् अवोचन् अवोचः अवोचतम् अवोचत । अवोचम् अवोचाव अवोचाम । अवोचत अवोचेताम् अवोचन्त । यदा सभायां साधु अवक्ष्यत् ( ग ? गू ? ) चर्करीतम् यह यङ् लुङन्तका नाम है । यङ्

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

उम् ७।४।२०। अङि परे। अवोचत्, अवोचत। अवक्ष्यत्, अवक्ष्यत। (ग० सू०) चर्करीतं च। चर्करीतमिति यङ्लुगन्तस्य संज्ञा, तदादौ बोध्यम्। ऊर्णुञ् आच्छादने। २५। ९ ऊर्णोतेर्विभाषा ७।३।९०। वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके। ऊर्णौति, ऊर्णोति। ऊर्णुतः। ऊर्णुवन्ति। ऊर्णुते। ऊर्णुवाते। ऊर्णुवते। ( ऊर्णोतेराम्नेति वाच्यम् )।

६०० न न्द्राः संयोगादयः ६।१।३। अचः पराः संयोगादयो नदरा

---

लुङन्त से बना है उसी का परिचय भी दे रहे हैं। च = उसको अदादिगणमें समझे। जिसका फल शप्का लुक् यङ्लुङन्त धातुसे भी हो। २४ ञ इत् ऊर्णु—धातुका आच्छादन = आवरण, ढकना, परदा, उनी कपड़ा धारणके अनुकूल क्रिया अर्थः। स्वरितञित् धातु उभयपदी। अनेक अच् सेट् तथा सकर्मकः, यथा—सशरीरम् ऊर्णौति। आच्छादन फलका आश्रय ( कर्म ) शरीर है। तदनुकूल क्रिया कर्तामें है, ऊर्णा ( ऊन ) इसी धातुसे बना है जिसका प्रयोजन आच्छादन है। आच्छादन जनकक्रियावाचकऊर्णुधातोः आवरण क्रियाकाले वर्तमाने लट् तिप् शप्लुक् ततः।

( ९ ) ऊर्णोतेः = ऊर्णु धातुकको विकल्पसे वृद्धि हो हलादि पित् ( तिप् सिप् मिप् ) सार्वधातुकपरे अलोन्त्यपरिभाषया अन्त्य-अल्-उकारस्य स्थाने वृद्धिर्भवति, यदा न वृद्धिः तदा सार्वधातुकगुणः। ऊर्णोति। तण्डुलम्। पिद्भिन्न ङिद्भवति, तस्य फलं गुणाभावः। ऊर्णुतः। ऊर्णुवन्ति, शीतकालमें सभी शरीर ढकते हैं। अजादि विभक्ति परे उवङ् भवति। ऊर्णौसि ऊर्णोसि ऊर्णथः ऊर्णुथ। ऊर्णौमि ऊर्णोमि ऊर्णुव, ऊर्णुम। आच्छादन फल कर्तृगामी हो तब ऊर्णुते ऊर्णुवाते, अजादि विभक्ति परे उवङ्। ऊर्णुवते ऊर्णुसे, ऊर्णुवाथे, ऊर्णुध्वे। ऊर्णुवे ऊर्णुवहे ऊर्णुमहे ( वा ) ऊर्णुधातुसे आम् नहीं कहना चाहिए। इजादि मानकर या गुरुमान समझकर आम् प्राप्त था।

( ६०० ) अचः = अच्से परे संयोगादयः = संयोग संज्ञकवर्ण आदिमें हों ऐसे नन्द्रा न् द् र् को द्वित्व न हो। नु शब्दको द्वित्व हो यतः ( क्योंकि ) द्वित्वदृष्टया णत्वं असिद्धं भवति, फलतः ततोऽभ्यासात् परो न ण भवति नकारानुस्वारपञ्चमो- झलि धातुषु। सकारः शकारश्चेति षाट्टवर्गस्तवर्गजः। धातुका अवयव झलिपरे अनुस्वार कहीं पञ्चमवर्ण ङकारादि देखे जाते हैं, वे नकार स्थानिक हैं। अनुस्वारः यथा—स्रंसु ध्वंसु भ्रंमु इति पञ्चम वर्णः। यथा अङ्क अञ्च लुण्ठ मन्थ तृम्फ चकार- परे सकारः शकारो भवति, यथा—ओ व्रश्च, रेफ षकारसेपरे टवर्ग तवर्गज है। रेफसे परे तवर्ग ऊर्णु है। षकारसे परे टवर्ग ष्टुनाष्टुः है। ऊर्णुनाव=कुहरेसे सूर्य ढके थे। आच्छादन जनक क्रियावाचक ऊर्णुधातोः अप्रत्यक्षसमाप्तक्रियाकाले लिट् इजादि

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

द्विर्न भवन्ति। नुशब्दस्य द्वित्वम्। ऊर्णुनाव। ऊर्णुनुवतुः ऊर्णुनुवुः। १ विभाषोर्णोः १।२।३। इडादिप्रत्ययो वा ङित्स्यात्। ऊर्णुनुविथ, ऊर्णुनविथ। ऊर्णुविता, ऊर्णविता। ऊर्णुविष्यति, ऊर्णविष्यति। ऊर्णौतु, ऊर्णोतु। ऊर्णवानि। ऊर्णवै। २ गुणोऽपृक्ते ७।३।९१। ऊर्णोतेर्गुणोऽ-

---

गुरुमान् धातुः। इति ज्ञात्वा आम् प्राप्नोति, 'ऊर्णोतेराम्नेतिवाच्यम्'। इति निषेधे अयम् अजादि धातुः। अतः द्वितीय—एकाचः द्वित्वं भवतु, एतेन रेफसहितस्य र्णू इत्यस्य द्वित्वं प्राप्नोति, अत्र अच्—ऊकारः, तस्मात् परः संयोगः, रेफः तस्य द्वित्वं प्राप्तम् नन्द्राः इति निषेधः, ततः नु शब्दस्य द्वित्वं रेफात्परस्य अभ्यासनकारस्य पुनः णत्वं लिट्स्थाने तिप् णल् अनुबन्धलोपे, अभ्यासोत्तरखण्ड-नुघटक-उकारस्य अचोञ्णिति वृद्धिः आवादेशे रुपम्। ऊर्णुनुवतुः अत्र अपित् लिट् कित् भवति। तस्य फलं गुण निषेधः। अजादि परे उवङ् आदेशः।

(१) ऊर्णोः = उर्णु धातुसे परे, इट् आदिमें हो ऐसा प्रत्यय ङित् विकल्पसे हो, सेट् धातुसे परे ङित्पक्षे गुणनिषेधो भवति। तदा उवङ् यदा न ङित् तथा गुणो भवति। यथा – ऊर्णुनु + इथ। अत्र विभाषाउर्णोः इतिसूत्रेण इडादिथल् ङित् भवति तदा गुण निषेधः। उवङ् आदेशश्च। यदा न ङित् तदा गुण अवादेशश्च। ऊर्णनविथ = तुमने चावलको कब ढका था। ऊर्णुनुवथुः ऊर्णुनव ऊर्णुनाव ऊर्णुनविव ऊर्णुनविव। ऊर्णुनुवे ऊर्णुनुवाते ऊर्णुनुविरे। थासःसे ऊर्णुनुविषे ऊर्णुनविषे ऊर्णुनुविढ्वे—ध्वे। यदा आवरणजनकक्रिया श्वः परश्वः कालिकी तदा ऊर्णुविता उर्णविता। विभाषोर्णोः इतिङित् विकल्पः। ऊर्णविता ऊर्णवितारौ ऊर्णतारः। आत्मनेपदे ऊर्णुवितासे ऊर्णुवितासाथे इत्यादि सामान्यभविष्यकालिक—आच्छादनक्रिया यत्र तत्र ऊर्णुविष्यति ऊर्णुविष्यतः ऊर्णुविष्यन्ति। यदा न ङित् न गुण निषेधः। तदा ऊर्णविष्यति ऊर्णविष्यतः ऊर्णविष्यन्ति ऊर्णुविष्यते ऊर्णविष्यते ऊर्णुविष्यसे ऊर्णविष्यसे ऊर्णुविष्ये ऊर्णविष्ये गरम वस्त्रके आच्छादन, आवरण, परिधान विषयक आज्ञा, प्रेरणा आशीर्वाद, अर्थ हो तब लोट्। ऊर्णोतेर्विभाषा इति वृद्धिः। ऊर्णौतु यदा न वृद्धिः तदा गुणः ऊर्णोतु ऊर्णुतात् ऊर्णुताम् ऊर्णुवन्तु। शीतकाले ऊनका वस्त्र धारण करें। ऊर्णुहि ऊर्णुतात् ऊर्णुतम् ऊर्णुत ऊर्णवानि ऊर्णवाव ऊर्णवाम ऊर्णुताम् ऊर्णुवाताम् ऊर्णुवताम् ऊर्णुष्व ऊर्णवै।

(२) अपृक्ते = अपृक्तसंज्ञक हलादि पित्सार्वधातुक परे ऊर्णु धातुको गुण हो। वृद्धिको बाधकर। यह वृद्धि ऊर्णोतेर्विभाषा की है। और्णौत् = अनद्यतनसमास आच्छादन क्रियाकाले लङ् तिप् इकारलोप, आट् वृद्धिः, ऊर्णोतेर्विभाष इति उकारस्य वृद्धिः प्राप्नोति, तं बाधित्वा गुणोऽपृक्तेः इति गुणे, शपो लुकि रूपम्। और्णुताम्

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पृक्ते हलादौ पिति सार्वधातुके। वृद्धयपवादः । और्णोत् । और्णोः । ऊर्णुयात् । ऊर्णुयाः । ऊर्णुवीत । ऊर्णूयात् । ऊर्णुविषोष्ट, ऊर्णविषीष्ट । ३ ऊर्णोतेर्विभाषा ७ । २ । ६ । इडादौ सिचि वा वृद्धिः परस्मैपदे परेः । पक्षे गुणः । और्णावीत्, और्णुवीत्, और्णवीत् । और्णाविष्टाम्, और्णुविष्टाम्, और्णविष्टाम् । और्णविष्ट, और्णुविष्ट । और्णुविष्यत्, और्णविष्यत् । और्णुविष्यत, और्णविष्यत ।

इत्यदादयः ॥ २ ॥

---

और्णुवन् । और्णोः और्णुतम् और्णुत । और्णवम् और्णुव और्णुम । और्णुत —और्णुवाताम् और्णुवत । आच्छादन क्रिया के सम्भावना अर्थमें लिङ् ऊर्णुयात अकृतसार्वधातुकयोर्दीर्घः । ऊर्णुवीत ऊर्णुविषीष्ट, अत्रविभाषोर्णोः ऊर्णविषीष्ट ।

( ३ ) ऊर्णोतेः = इडादि परस्मैपद सिचपरे ऊर्णुधातुको वृद्धि विकल्प हो । पक्षमें गुण हो और्णावीत् । ऊर्णुलुङ तिप् च्लि सिच् ईट् आट् आटश्चेति वृद्धिः ऊर्णोतेर्विभाषा इडादि परस्मैपद सिच्परे उकारस्य वृद्धिः आव्आदेशे । यदा न वृद्धिः तदा विभाषोर्णोः इति ङित् । तस्य फलं गुणनिषेधः तत् उवङ् आदेशः और्णुवीत् । यदा न ङित् तदा गुण अवादेशश्च, और्णवीत् । आत्मनेपदमें और्णविष्ट अत्र ङित् विकल्पः उवङ् आदेशः यदा न ङित् तदा गुण अवादेशश्च । इति अदादिगणः ।

# अथ जुहोत्यादिप्रकरणम्

हु धातु हो आदिमें जिस ( समुदाय ) विशेषके उसे जुहोइत्यादिगण कहते हैं । इसकी विशेषता शप्विकरणको श्लु आदेश होना । जिसके परे रहते इस गणके धातुको द्वित्व हो अतः जुहोत्यादिगण पढ़ा यद्यपि ह्वादि पढ़ सकते थे, जैसे सिन्धु हिन्दुमें ह को स का भ्रम न हो । ( १ ) हु धातु का दान तथा अदन ( भोजन )-के अनुकूल क्रिया अर्थः । जुहोति शब्दका व्यावहारिक अनुभव हवन करने अर्थमें हैं, मन्त्र विधिसे आहुति डालना ( हवन करना ) यहाँ दान ( देवता निमित्तका )

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ जुहोत्यादयः

हु दानादनयोः ॥ १ ॥ ४ जुहोत्यादिभ्यः श्लुः २ । ४ । ७५ । शपः श्लुः स्यात् । ६०५ श्लौ ६ । १ । १० । धातोर्द्वे स्तः । जुहोति । जुहुतः । ६ अदभ्यस्तात् ७ । १ । ४ । झस्यात्स्यात् । हुश्नुवोरिति यण् । जुह्वति । ७ भीह्रीभृहुवां श्लुवच्च ३ । १ । ३९ । एभ्यो लिटि आम् वा स्यादाभि

---

स्वाहा है । अदन भोजन करने अर्थमें है । ( ४ ) जुहोत्यादि गण पठित धातुओंसे शप्को श्लु हो । यह 'श्लु' लोप रूप है । यद्यपि लोपः भी कह सकते थे, किन्तु आगे द्वित्व विधान 'श्लु' शब्दोच्चारणसे हुआ है इसलिए श्लु पढ़ा ।

(६०५)श्लु=शप् लुक्के विषयमें धातुको द्वित्व हो, जुहोति= हवनं करोति । देवता विषयक भोजन क्रियावाचक हुधातोः लट् तिप् शप् 'जुहोत्यादिभ्यः' शप् स्थाने श्लुः (अदर्शन) श्लौ इति सूत्रेण द्वित्वे पूर्वस्व अभ्याससंज्ञा, तस्य फलं कुहोश्चुः चवर्गझ, आन्तरतम्यात् । अभ्यासे चर्च इति झलां जश् जकारः । द्वितीय हुशब्दस्य सार्वधातुकगुणे रूपम् जुहोति वर्तमानकालिकहवन दान भोजन क्रियावाचक हु धातोः द्विवचने तस् अयम् अपित् सार्वधातुकः स, ङिद्वत्, तस्य फलं गुणस्यनि० । रुत्व वि० जुहुतः । अनेक कर्तृषु स्वाहा, भोजनानुकूलाक्रिया वर्तमाने सति । हु धातोः लट् झि, शप् श्लु द्वित्वादिकार्ये । झोन्तः इति प्राप्ते अन्तादेशं बाधित्वा । उभे अभ्यस्तम् इति सूत्रेण जुहोत्यादिगणे पठिताः धातवः अभ्यस्तसंज्ञकाः भवन्ति । षष्ठाध्याय प्रकरणे विहितानां षाष्ठं द्वित्वम् ( ६ ) अभ्यस्तात्=अभ्यस्त संज्ञकधातुसे परे झको अत् आदेश हो । इति झ स्थाने अत् आदेशे जुहु + अति, अत्र उवङ् प्राप्ते तं बाधित्वा 'हुश्नुवोः' सार्वधातुके इति यण् जुह्वति । जुहोषि जुहथः जुहुथ । जुहोमि जुहुवः जुहुमः ।

( ७ ) भयार्थक भी, लज्जार्थक ह्री, पालनार्थक भृ, धातुओंसे आम् प्रत्यय हो, लिट् परे, विकल्पसे । श्लुवच्च = आम्परे श्लुकीतरह ( द्वित्व ) कार्य भी हो । जुहवाञ्चकार-हवनदान, अदन भक्षणक्रिया वाचक हुधातोः समाप्त-अप्रत्यक्ष क्रियाकाले अर्थे लिट् भीह्रीभृ आदिसूत्रेण आम्' तस्य श्लुवद्भावे यस्य फलं द्वित्वम् अभ्यासादिकार्यम् । आमः इतिलिट् लुक् । जुहवाम् इतिदशायाम् कृञ्चानु प्रयुज्यते इति कृलिट् । भू लिट् । अस् लिट् इति अनुप्रयोगे । जुहवामकृलिट् । तिप्णल् कृ इत्यस्य द्वित्वे कृ कृ ( उरत् ) कर् कृ-हलादिशेषे, वृद्धि बाधित्वा गुणे उपधावृद्धिः मान्तस्य पदसंज्ञा अनुस्वारपरसवर्णे । राजानौ जुह्वाञ्चक्रतुः । मुनयः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

श्लाविव कार्यं च। जुहवाञ्चकार, जुहाव। होता। होष्यति। जुहोतु, जुहुतात्। जुहुताम्। जुह्वतु। जुहुधि। जुहवानि। अजुहोत्। अजुहुताम्।
८ जुसि च ७।३।८३। इगन्ताङ्गस्य गुणोऽजादौ जुसि। अजुहवुः।

---

जुह्वाञ्चक्रुः। जुह्वाञ्चकर्थ। यूयं जुह्वाञ्चक्र। अहं कदा जुह्वाञ्चकर इति न जाने, आवां जुहवाञ्चकृव। एवं जुह्वाम्बभूव जुहमास इत्यादि। यदा आम् न भवति। तदा हुशब्दस्य द्वित्वादि कार्ये जुहाव जुहुवतुः जुहुवुः। जुहविथ जुहोथ जुहुवथुः, जुहुव। जुहाव जुहव जुहुविम जुहुमिव। अद्यभिन्नभविष्यकाले अर्थे लुट् श्वः होता—तिप् तास् डा गुण। होतारौ होतारः। होतासि। स सदा होष्यति। हवनं करिष्यति, अयम् अनिट् धातुः। इट न भवति। किन्तु आर्धधातुक गुणएव। यदा हवन, दान, भोजन, स्वाहा, विषये आज्ञा, प्रेरणा, प्रार्थना, आशीर्वाद सम्भवति। तत्र जुहोतु शप् श्लु द्वित्वादिकार्यं पूर्ववत्। एरुः लट् साम्बन्धि इकारस्य उः इति विशेषः। जुहोतु 'तु' स्थाने तातङ् जुहुताव् तस्य स्थाने तां जहुताम्, आप हवन करें। ग्रहबाधा हटेगी। अनेक कर्तामें हवन क्रिया—वर्तमान हो तब जहुझि अदभ्यस्तात् इति झ स्थाने 'अत्' एरुः इस्थाने उः। हुश्नुवोः इति यण् जुह्वतु। जुहुधि ( तुम हवन दान करो ) जुहुसि तस्य स्थाने हि तस्य हुझल्भ्यो हेर्धिः इति 'धि' आदेशे। जुहुतं जुहुत। जुहवानि। अहम् आवा वयं कर्तामें हवनक्रियाकी प्रेरणा सम्भावना हो तब उत्तम पु० मिप, मेर्निः आडुत्तमस्य पिच्च इति आट्, पित् अस्ति। तस्य फलं हुश्नुवोः यणं बाजित्वा गुणः, अवादेशश्च। एवं जुहवाव, जुहवाम। अजुहोत्—यदा गतदिने हवनादि जननीक्रिया समाप्ता, तदा भूतकाले लङ्। अजुहुति इकारलोपे गुणे। तौ ह्यः अजुहुताम्। ते गतसम्वत्सरे अजुहवुः। अजुहुझि इति दशायाम्। सिज्भ्यस्तविदिभ्यश्च इति सूत्रेण अभ्यस्त संज्ञकात् परस्य झिस्थाने जुस्। अपित ङित् अस्ति। तस्य फलं गुणनिषेधः। तेन उवङ् प्राप्नोति। तं बाधित्वा, हुश्नुवोः यणप्राप्तः। तं तिरस्कृत्य।

( ८ ) च = इक् = इ उ ऋ ऌ हो अन्तमें ऐसे अङ्गको गुण हो, अजादि जुस् = उस् परे अवादेशे रु० वि० रुपम्। अजुहोः अजुहुतम् अजुह्वत। अजुहवम् अजुहुव, जुहुयात्—हु धातोः विधिनिमन्त्रण, आमन्त्रण, साम्प्रश्न प्रार्थना अर्थे लिङ् तिप्थास् शपश्लु द्वित्वादिः, जुहुयाताम् जुहुयुः। आशीर्लिङ् ( तुम हवन करो ) तुम्हें सुख मिलेगा। हूयात्-अकृतसार्वधातुकयोः दीर्घः हूयास्ताम् हूयासुः। अत्र यासुट् कृते सति अजादिजुस् नास्ति। तेन जुसि च इति गुणो न। हवनक्रिया समाप्ता इति भूतकालः तस्मिन् अर्थे लुङ् अ हु स् इत् अत्र सिचि वृद्धिः अनिट् धातुः इट् न भवति। षत्वं अहौषीत् अहौष्टाम् अहौषुः। अहौषीः। यदा अहोष्यत्=हवनम् अकरिष्यत् तदा पुण्यं अलप्स्यत्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जुहुयात्। हूयात्। अहौषीत्। अहोष्यत्। ञिभी भये। २। बिभेति। ९ भियोऽन्यतरस्याम् ६। ४। ११५। इकारो वा स्याद्धलादौ क्ङिति सार्वधातुके। बिभितः, बिभीतः। बिभ्यति-बिभयाञ्चकार, बिभाय। भेता। भेष्यति। बिभेतु, बिभितात्, बिभीतात्। अबिभेत्। बिभीयात्। भीयात्। अभैषीत्। अभेष्यत्। ह्री लज्जायाम्। ३। जिह्रेति। जिह्रीतः। जिह्रियति।

---

( २ ) ञिभी आदिर्ञिटुड्वः इति ञि इत् भी धातुका भयभीत भवनानुकूल व्यापार अर्थ है अनिट सकर्मकः। फलव्यापार समानाधिकरणात्। भयकी क्रिया कर्तामें वर्तमान रहे, तब बिभेति—भयार्थक भीधातोः वर्तमानभयजनक क्रिया अर्थे लट् तिप् शप्, श्लु, द्वित्वादिकार्ये। द्वितीयस्य इकारस्य गुणे रूपम्। चोरसे डरता है। बालक अंधेरेमें भूतसे डरते हैं। ( ९ ) भियः – भीधातुको ह्रस्व इकार हो अन्यतरस्याम्=विकल्पसे। हलादि कित्ङित् सार्वधातुकपरे। बालकौ बिभीतः। दो कर्ताकी विवक्षामें द्विवचने तस्, अपित् सार्वधातुक ङित् होनेसे भियोन्यतरस्यामिति इकारस्य ह्रस्वविकल्पः बिभितः। अन्येषु—हलादिङित् सार्वधातुकपरे इस्थाने ह्रस्वविकल्पे। चौराः बिभ्यति झस्थाने अत् अदभ्यस्तात् यण्। बिभेषि बिभिथ. बिभीथः। बिभिथ, बिभीथ बिभेमि बिभिवः बिभीव बिभयाञ्चकार। अनद्यतन परोक्षकालिक्भयजननीक्रिया समाप्तेकाले लिट् भी भृहुवां श्लुवच्च, इति, आमि, श्लौ, द्वित्वादिकार्ये कृलिट् अनुप्रयोगे। यदा न आम् तदा न अनुप्रयोगः। ततः लिट् स्थाने तिप्णल् द्वित्वादिः वृद्धिः आय आदि कार्ये। बिभाय बिभ्यतुः बिभ्युः। बिभयिथ बिभेथ बिभ्यथुः बिभ्य। बिभाय बिभय बिभ्यिव बिभ्यिम। भारद्वाजनियमेन इट् विकल्पः। थलि परे अन्यत्र क्रादि नियमात् नित्यम् इट्। भेता = कल डरेगा। भेष्यति-चोरसे सदा डरेगा, बिभेतु, भगवान् आपको सदा भय दें। वह गुरुसे डरे, तो सुधार हो आशीर्वाद अर्थमें तु को तातङ् होनेपर हलादिङित् मानकर भियोऽन्यतरस्याम्से ह्रस्व विकल्प है। श्वानौ बिभीताम्। युवानः बिभ्यतु। बिभिहि बिभीहि बिभितात् बिभीतात्। तुम नरकसे सदा डरो। बिभितं बिभीतम्। अहं गुरोः बिभयानि, आवां बिभयावः। वयं बिभयामः। अट् पिद्भवति तस्य फलं गुणः अयादेशश्च। यत्र हलादिः तत्रैव ह्रस्वविकल्पः अद्यभिन्न समाप्त भयक्रियाकाले लङ्, अट्, शप्, श्लु, द्वित्वादिकार्यं पूर्ववत्। अबिभेत् अबिभिताम् अबिभीताम् अबिभयुः अबिभेः। अबिभीयम् बिभियात् बिभीयात् भय क्रियाकी सम्भावना अर्थमें लिङ् यासुट् इकारस्य ह्रस्व विकल्पे। भीयात् भीयास्तां भीयासुः। अभैषीत्। सिचि इगन्ताङ्गस्य वृद्धिरिति विशेषः अभैष्टाम् अभैषुः, अभैषीः अभैष्टम् अभैष्ट। अभैषम् अभैष्व अभैष्म। यहाँ भूतकाल भयकी समाप्त क्रिया है। स अध्यापकात् अभेष्यत् तदा अध्ययनम् करिष्यत्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जिह्रयाञ्चकार, जिह्राय। ह्रेता। ह्रेष्यति। जिह्रेतु। अजिह्रेत्। जिह्रीयात्। ह्रीयात्। अह्रैषीत्। अह्रेष्यत्। पॄ पालनपूरणयोः। ४।

६१० अर्तिपिपर्त्योश्च ७।४।७७। अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ। पिपर्ति। १ उदोष्ठ्यपूर्वस्य ७।१।१०२। अङ्गावयवौष्ठ्य-पूर्वो य ॠत् तदन्तस्याङ्गस्य उत् स्यात्। २ हलि च ८।२।७७।

---

( ३ ) ह्रीं धातुका लज्जाजनकक्रिया ( जाना ) अर्थः प्रायः अकर्मक तथा अनिट्। इसका रूप भीधातुके सदृश समझें। कर्तामें लजाना क्रियावर्तमान रहे तब श्वसुरात् जिह्रति। दम्पती जिह्रीतः। शिष्याः जिह्रियति। अत्र झ स्थाने अत् कृते इयङ्। जिह्रियाञ्चकार लिट् परे ( भी ह्री ) आदि सूत्रेण आम् इत्यादि कार्ये। स अधर्माचरणात् कदा जिह्राय इति न जाने। श्वः ह्रेता, ह्रेष्यति। एवं मद्यवा जिह्रतु। यथा नारदः अजिह्रेत् एवं स जिह्रीयात्। ह्रीयात्। अधर्मं कृत्वा यथा—सः अह्रैषीत् एवं भवानपि अह्रेष्यत्।

( ४ ) पॄ धातुका पालन, लालन और पूरण, पूर्ति करनेके अनुकूल क्रिया अर्थः। अयम् सेट् सकर्मकश्च। गोपः दुग्धपात्रे पयः पिपर्ति। यहाँ पूरणफल उसके अनुकूल क्रिया का आधार भिन्न-भिन्न है। माता वत्सं पिपर्ति। बछड़ेका पालन करती है। ( ६१० ) अर्ति = अर्ति—ॠ, पिपर्ति=पॄ धातुके अभ्यासको इकार अन्तादेश हो श्लुके विषयमें। पिपर्ति = पालन, रक्षण, पूरण, आपूर्ति, जनकव्यापारवाचक पॄ धातोः क्रिया वर्तमाने लट् तस्य स्थाने तिप् ( 'शप-श्लुः ) ( अदर्शनम् ) द्वित्वं पॄ पॄति इति दशायामभ्यास-ॠकारस्य 'अर्तिपिपर्त्योश्च' सूत्रेण इकारे रपरे। हलादिशेषे, द्वितीयॠकारस्य सार्वधातुक गुणे। दो कर्तामें पालनपूरणजनक क्रिया विद्यमान हों तब द्विवचने तस् श्लु आदि कार्ये इत्वे हलादि शेषे ततः। ( १ ) ओष्ठ्यपूर्वस्य=अङ्गका अवयव ओष्ठस्थान वाला वर्ण पूर्वमें हो ऐसे ॠकार, तदन्त अङ्ग को उ अन्तादेश हो। द्वितीय ॠकारस्य पूर्ववर्णः पकारः ओष्ठसंज्ञकः, अङ्गस्य अवयवश्चास्ति। ॠकारस्य रपर सहित = उर् आदेशे। पिपुर् तस् ङित्। गुण निषेधे।

( २ ) रेफ या व अन्तमें हो ऐसे धातुके उपधाके इक् को दीर्घ हो, हल् वर्ण परे। रेफान्त धातु पिपुर् है उसके उपधाको दीर्घ हुआ। पिपूर्तः पयः बालकौ। गाव वत्सानि पिपुरति। पॄ+झि झ स्थाने 'अत्' द्वित्वे अभ्यास इत्व ओष्ठ्यपूर्वस्य उर् पिपुरति। ङित् भावेन गुणो न भवति। पिपर्षि पिपूर्थः पिपूर्थ। पिपर्मि पिपूर्वः पिपूर्मः। पालनपूरणफलजनक क्रियावाचक पॄधातोः परोक्षसमाप्त क्रियाकाले अर्थे लिट्, तिप्, णल् द्वित्वे अभ्यासस्य ॠकारस्य उरत् इति अत् हलादि शेषे

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

रेफवान्तस्य धातोरुपधाया इको दीर्घो हलि। पिपूर्तः। पिपुरति। पपार। ३ शॄदॄप्रां ह्रस्वो वा ७।४।१२ एषां लिटि ह्रस्वो वा स्यात्। पप्रतुः। ४ ऋच्छत्यॄताम् ७।४।११। तौदादिकऋच्छेर्ऋधातोर्ॠतां च गुणो लिटि। पपरतुः। पपरुः।

६१५ वृतो वा ७।२।३८। वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि। परीता, परिता। परीष्यति, परिष्यति। पिपर्तु। अपिपः। अपिपूर्ताम्। अपिपरुः। पिपूर्यात्। पूर्यात्। अपारीत्। ६ सिचि च परस्मै-

---

गुणे उपधायाः वृद्धिः। पपार। १पृ अतुस् ततः। (३) हिसार्थक शॄ, विदारणार्थक दॄ, पालनपूरणार्थक पॄ, धातुओंको कित् लिट् परे ह्रस्व विकल्प हो। ह्रस्वे कृते यण् पप्रतुः। यदा न ह्रस्वः तदा। (४) तुदादि गण पठित ऋच्छ धातु तथा ऋ धातु और ॠदन्त धातुको गुण हो लिट् परे। प्रसङ्गमें ॠदन्त धातु है, दीर्घ ॠ को गुण। पपरतुः। पपरुः पपरिथ उदृदन्तैः नियमसे इट्। पप्रथुः पपरथुः। पप्र, पपर। पपार पपर। पप्रिव पपरिव।

(६१५) निरनुबन्ध वृ से सामान्यका ग्रहण होता है। अतः वृञ् और दीर्घॠदन्त-धातुओंसे परे इट्को विकल्पसे दीर्घ हो, लिट् परे न हो तो। आगामि भविष्य-कालिकपालनपूरण क्रिया वाचक पॄ धातोः लुट् तिप् तास्, डा, गुण, इट्। पर् इता। दीर्घ-ॠकारान्तधातोः परे इटो दीर्घविकल्पेन परीता परिता। परीष्यति। स्य इट् दीर्घे। यदा न दीर्घः तदा परिष्यति। आजसे गायका पालन करेंगे। स गां पिपर्तु। दोहिनीं पिपूर्तात्, पिपूर्ता पिपुरतु। त्वं हस्तावलम्बनीं फलैः पिपूर्हि, पिपूर्तात्. पिपूर्तं पिपूर्त। ङित्, हलि परे गुणो न भवति। किन्तु उदोष्ठ्यपूर्वस्य उर् भवति हलिच सूत्रेण दीर्घः। पिपराणि—उत्तमपुरुषे आट् मेर्निः आट् पित् भवति। तस्य फलं गुणः। पिपराव, पिपराम। अद्यभिन्नसमाप्तपालनपूरणक्रिया अर्थे लङ् तिप् अट् शप् श्लु द्वित्वादिः अर्तिपिपर्त्योश्च अभ्यासस्य इत्वे, गुणे अपिपर्त् अपिपरु,। अपिपः सिप् इकार लोपे गुणे, शलोपे रेफविसर्गे। अपिपूर्तम्, अपिपूर्त। अपिपरम्, अपिपूर्व, अपिपूर्म। हमलोग गड्ढेको भर चुके हैं। पालनपूरणक्रिया-विषयक प्रेरणा, सम्भावना, अर्थे लिङ्। पिपूर्यात् यत्र अशीर्वादः, तत्र पूर्यात्। अत्र अत्र यासुट् ङित् भवति, तेन न गुणः किन्तु ॠकारस्य उत्वे हलिचेति दीर्घे, पूर्यास्तां पूर्यासुः। पूर्याः पूर्यास्तं पूर्यास्त। पूर्यासं पूर्यास्व पूर्यास्म। आप भण्डारको भरें। देवदत्तः कोषम् अपारीत्=पालनपूरणक्रियासमाप्तकाले अर्थे पॄ धातोः लुङ् तिप् अट् च्लेः सिच् इट् ईट् सिचि वृद्धिः। सलोपे दीर्घे: अपारिष्टाम्—तस् ताम् षत्वे ष्टुत्वे वृतोवा इति दीर्घे प्राप्ते। (६) परस्मैपदपरक सिच् परे वृङ् वृञ्

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पदेषु ७।२।४०। अत्र इटो न दीर्घः। अपारिष्टाम्। अपरीष्यत्, अपरिष्यत्। ओहाक् त्यागे।५। जहाति। ७ जहातेश्च ६।४।११६। इद्वा स्याद्धलादौ क्ङिति सार्वधातुके। जहितः। ८ ई हल्यघोः ६।४।११३। श्नाऽभ्यस्तयोरात ईत् स्यात् सार्वधातुके क्ङिति हलादौ न तु घोः। जहीतः। ९ श्नाभ्यस्तयोरातः ६।४।११२। अनयोरातो लोपः क्ङिति सार्वधातुके। जहति। जहौ। हाता। हास्यति। जहातु, जहितात्, जहीतात्।

६२० आ च हौ ६।४।११७। जहातेर्हौ परे आ स्याच्चादिदीतौ।

---

ऋदन्तात् इटो न दीर्घं इति इटः दीर्घनिषेधे। अपारिषुः अपारीः अपारिष्टम्। अपारिष्ट। अपारिषम् अपारिष्व अपारिष्म।

यदा दोहिनीम् अपरीष्यत् गाम् च अपरिष्यत् तदा कल्याणं कुलञ्च सुसंस्कृत मभविष्यत (५) ओकार इत् हा—धातुका त्यागके अनकूल क्रिया अर्थं। ओकार इत् अनिट तथा सकर्मकः पापं जहाति। त्यागरूपफल पापमें है उसका जनकक्रिया कर्तामें। त्यागजनकक्रिया वाचक हा धातोः वर्तमान काले कर्तरि लट्। तिप् शप् श्लु द्वित्वादि कार्ये जहाति। दो कर्तामें त्यागानुकूल व्यापार विद्यमान हो द्विवचनं तस् जहा-तस् ततः (७) हा धातु को इकार अन्तादेश हो विकल्पसे हलादि कित् ङित् सार्वधातुक परे तस् प्रत्ययः। ङित् अस्ति एव। हलादिरपि। तेन आकारस्य इकारे जहितः यदा न इत्वम् तदा।

(८) श्नाप्रत्ययः अभ्यस्तसंज्ञकश्च धातु इनके आ कों ई हो, सर्वधातुककित् ङित् हलादिप्रत्यय परे नतुघोः-घु संज्ञक परे न हो तो। इति सूत्रेण हा आकारस्य ईत्वे जहीतः जहति। त्यागानुकूला क्रिया वाचक हा धातोः वर्तमाने लट् बहुवचने झि, द्वित्वादि कार्ये 'अदभ्यस्तात्' सूत्रेण झ स्थाने अत् आदेशे। जहा अति ततः। (९ श्ना प्रत्यय अभ्याससंज्ञकधातुके आ का लोप हो कित् ङित् सार्वधातुकपरे, इति ङित्सार्वधातुकं झि प्रत्ययं दृष्टवा आकारलोपे। जहति। अत्र निष्कर्षः हलादिपरे ईत्वम्, अजादि परे आकारलोपः। जहासि, जहिथः, जहीथः। मिप०। जहामि जहिव जहीव। जहौ—पपौकी तरह। त्याग क्रिया की समाप्तिअप्रत्यक्ष हो, तब हा धातोः लिट् तिप् णल्। हा हा, ह हा, ज हा, 'आत् औ णलः' णल् स्थाने औ आतोलोप इट् च आकार लोपे। जहतुः जहुः। जहिथ जहाथ जहथुः जह जहौ जहिव जहिम। हाता (त्यागकर्ता) हास्यति (त्यागं करिष्यति) जहातु त्यागं करोतु। तु स्थाने तातङ् कृते जहातेश्च वा इट् पक्षे ईत् जहितात् जहीतात जहितां जहीतां जहतु ते दोषान्। सिप् प्रत्यये। (६२०) हा धातुके हि परे आ हो चात्—च कहनेसे, जहातेश्च, ईहल्यघोः से इत् ईत् भी हो।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

जहाहि, जहिहि, जहीहि । अजहात् । अजहुः । १ लोपो यि ६ । ४ । ११८ । जहातेरालोपो यादौ सार्वधातुके । जह्यात् । एर्लिङि । हेयात् । अहासीत् । अहास्यत् । माङ् माने शब्दे च । ६ । २ भृञामित् ७ । ४ । ७६ । भृञ् मङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ । मिमीते । मिमाते । मिमते । ममे । माता । मास्यते । मिमीताम् । अमिमीत । मिमीत । मासीष्ट ।

---

रूपत्रयं = जहाहि जहिहि जहीहि ? त्वम् आत्मीयान्, तन्नयुक्तं । जहितम् जहीतम् जहित जहीत, जहानि जहाव जहाम । आट् पित् है, ङित् नहीं । अतः ङित्का फल नहीं होगा, अजहात्—भूतकाले त्यागानुकूल व्यापारसमाप्त हो तब लङ् अट् तिप् द्वित्वादि कार्ये । अजहिताम् अजहीताम्, अजहुः । उसि अपदान्तात् इति पूर्वरूपे अजहाः । अजहितम् अजहीतम् । मिप्० अजहाम् अजहिव अजहीम ।

( १ ) जहातेः = हाधातुके आ का लोप हो सि = यकारादिसार्वधातुकपरे जह्यात्-जहा या त् अत्र यकारादिसार्वधातुक 'याति' इति हा धातोः आकारस्य लोपे । जह्यातां जह्युः, जह्याः हे तात ? भवान् स्व दोषं हेयात् । 'आशीर्लिङ्' हायात्, अत्र 'एर्लिङ्' आकारस्य एकारे । हेयास्ताम् हेयासुः अहासीत्—त्यागकी क्रिया समाप्तरूपभूतकाल, अ हा स् इ स् ई त् । इटः ईट सलोपे दीर्घे रूपम् । अहासिष्टाम् अहासिषुः । अहासीः अहासिष्टम् अहासिष्ट । अहासिषम् अहासिष्व अहासिष्म । शिष्यों ने अविवेक छोड़ दिया । स अहास्यत ।

( ६ ) माङ् ङ्कार इत् मा धातु का माँप = नापना शब्दे च ध्वनिकरनेके अनुकूलक्रिया अर्थ । यह अनिट्, आत्मनेपदी सकर्मकः ।

( २ ) पालनार्थक भृ, मापार्थक मा, गमनार्थक ओहाङ, इन तीन धातुओं के अभ्यासको इकार अन्तादेश हो, श्लुके विषयमें । मिमीते = तोलनं ध्वनि वा करोति । मापार्थक या ध्वन्यर्थक, क्रियावाचक मा धातोः प्रचलित क्रियाकाले लट् ङित्वात् आत्मनेपदे 'त' टेरेत्वे, शप् श्लु द्वित्वादि कार्ये 'ममाते' इति दशायां भृ ञामित् सूत्रेण अभ्यास-अकारस्य इकारे, उत्तरखण्डस्य आकारस्य ई हल्यघोः इति ईत्वे रूपम् बालको मिमाते—आतां परे श्ना अभ्यस्तयोरात इति आकार लोपे रूपम । अजाः मिमते—झि अत् कृते आकार लोपः अभ्यासस्य मिमीषे मिमाथे मिमीध्वे । मिमे मिमीवहे मिमीमहे । उपसर्ग वलात् अनुमिमीपे=अनुवाद करना, उन्मिमीते = आँख खोलना, उपमिमीते = उपमा देना, निर्मिमीते=निर्माण करना, अवमिमीते = अपमान करना । ममे, ममाते ममिरे । ममिषे ममाथे ममिध्वे । ममे ममिवहे ममिमहे । माता = माप कर्ता में में ध्वनि करना तोलन् क्रिया सामान्य-भविष्यमें विवक्षित हो तब । मास्यते । तुलां करिष्यति, मे मे ध्वनिं वा । मिमीतां

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अमास्त । अमास्यत । ओहाङ् गतौ । ७ । जिहीते । जिहाते । जिहते । जहे । हाता । हास्यते । जिहीताम् । अजिहीत । जिहीत । हासीष्ट । अहास्त । अहास्यत । डुभृञ् धारणपोषणयोः । ८ । बिभर्ति । बिभृतः । बिभ्रति ।

---

=तोलनं करोतु, मिमातां मिमतां । मिमीष्व मिमाथां मिमीध्वम् । अहं तव बलं मिमै, मिमावहै मिमामहै ।

तोलन क्रिया अद्यभिन्नकालमें समाप्त हो तब लङ् स शतद्रोणं व्रीहिम् अमिमीत । तौ अमिमातां ते अमिमत । त्वम् अमिमीथाः । अमिमाथाम् अमिमीध्वम् । अमिमे अमिमीवहि अमिमीमहि । मिमीत = आप चना, मटर, तिल्ली तौलें, मीसीष्ट अमास्त् अमास्यत् । मिमीत, ध्वनि या तुला जनक क्रिया की सम्भावना प्रेरणा, प्रगट हो । मा धातोः लिङ् अभ्यासस्य भृञामित् द्वितीयस्य ईहल्यघोः ईत्, वह धान तौले या चना । मिमीयातां मिमीरन् । त्वं गोधूमं मिमीयाः, यूवां काष्ठस्य वस्तु मिमीयाथां, यूयं पटोलं मिमीध्वम्, अहं किं मिमीय । मिमीवहि मिमीमहि । स सर्वस्मिन्काले सुवर्णं मामीष्ट । पक्षिणः तडागम् अमास्त । यदि कृष्णम् अमास्यत् सत्या सत्यमवाप्स्यत् ।

( ७ ) ओहाङ् = ओ ङ् इत् हाधातोः गमनमर्थः । अयं ङित् आत्मनेपदी, अनिट् सकर्मकश्च । स क्रीडास्थलं जहीते = जाता है । संयोग ( फल ) क्रीडास्थल है । तदनुकूल कर्ता भिन्न है । गमनार्थक हा धातोः वर्तमाने लट् शपः श्लु भृञामित् अभ्यासस्य इकारे आत्मनेपदे त ङित् परे इ—हल्यघोः । इकारे रामकृष्णौ मल्लस्थलं जिहाते, चाणूरादयः जिहते । अभ्यस्यात् परस्य झ स्थाने अत्, आकारलोपे । जिहीषे जिहाथे जिहिध्वे । अहं विद्यालयं जिहे, जिहीवहे, जिहीमहे । परोक्षकालिकसमाप्तगमनकक्रियाजनक व्यापारः हा हा ह हा जहा । त स्थाने ए आलोपे जहे । वह कब गया मालुम नहीं । जहाते जहिरे जहिषे जहाथे जहिध्वे । जहे जहिवहे जहिमहे । क्रादिनियमात् इट् । हाता = गमनकर्ता । हास्यते = गमनं करिष्यते । सकुसंगति जीहीताम् । शिष्यौ जिहाताम् । भक्ताः तीर्थे पापं जिहताम् । त्वं सर्वत्र जिहीस्व जिहाथां जिहीध्वम् । जिहै जिहावहै जिहामहै । अत्र आट् आगमः पित् अस्ति । तस्य फलं नहि आकार लोपः । किन्तु सवर्णदीर्घे एत ऐ अजिहीत्—अनद्यतनभूतकालिकगमनानुकूलव्यापारः तो परश्वः अजिहातां ते श्वः लक्ष्मणपुरं अजिहत, यथा—त्वं काशीम् अजिहीथाः । अजिहाथाम् अजिहीध्वम् अजिहि अजहीवहि अजहीमहि गमनविषयक विधि प्रेरणा अर्थे लिङ् जिहीत ( वह जाय ) जिहीयाताम् जिहीरन् । हसीष्ट हासीयास्ताम् अहास्त ( वह बम्बई गया ) व्यापारिणौ विदेशम् अहासाताम्, अहासत अहास्थाः अहासाथाम् अहाध्वम् । अहासि अहास्वहि अहास्महि अहास्यत् ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

बिभृते। बिभ्राते। बिभ्रते। बिभराञ्चकार, बभार बभर्थ, बभृव। बिभराञ्चक्रे, बभ्रे। भर्तासि, भर्तासे। भरिष्यति, भरिष्यते। बिभर्तु। बिभराणि। बिभृताम्। अबिभः। अबिभृताम्। अबिभरुः। अबिभृत। बिभृयात्, बिभ्रीत। भ्रियात्, भृषीष्ट। अभार्षीत्। अभृत। अभरिष्यत्, अभरिष्यत। डुदाञ् दाने। ९। ददाति। दत्तः। ददति। दत्ते। ददाते। ददते। ददौ, ददे। दातासि, दातासे। दास्यति, दास्यते। ददातु। ३ दाधा घ्वदाप् १। १। २०। दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना। घ्वसोरित्येत्वम्। देहि। दत्तम्। अददात्, अदत्त। दद्यात्, ददीत। देयात्, दासीष्ट। अदात्। अदाताम्। अदुः। ४ स्थाघ्वोरिच्च १। २। १७। अनयोरिदन्तादेशः सिच्च कित्स्यादात्मनेपदे। अदित। अदास्यत्, अदास्यत। डुधाञ् धारणपोषणयोः। १०। दधाति।

---

(८) डुभृञ्=डु ञ् इत् भृ धातुका धारण पोषण पालन जनकक्रियाअर्थः। अनिट् उभयपदी, सकर्मकः सः पुत्रं बिभर्ति। धारणपोषणजनकक्रिया वर्तमाने लट् तिप् शपः श्लु विषये द्वित्वादिकार्ये भृञामित् इति अभ्यासस्य इकारे पितरौ विभृतः। भ्रातरः स्वान् विभ्रति। यत्र भरणपोषणक्रियाजन्यंफलं कर्तृगामी वर्तते तत्र बिभृते, यत्र ङित् प्रत्ययः, तत्र गुण निषेधो भवति बिभ्राते।

बिभृषे बिभ्राथे बिभृध्वे बिभ्रे बिभृवहे बिभृमहे। परीक्षकालिकधारणपोषणफल-जनकसमाप्तक्रिया अर्थे लिट् बिभ्राञ्चकार भीह्रीभृहुवाम् इति लिट् परे आम् अन्य कार्ये श्लुवच्च बिभ्राञ्चक्रे। यदा आम्न भवति तदा बभार। बभ्रतुः बभ्रुः। बभर्थ कृ सृ भृ इति इट् निषेधः बभ्रतुः बभ्रुः। बभ्रे बभ्राते बभृरे बभृसे अत्र इट् न भवति। श्वः भर्ता। भरणपोषणकर्ता। भरिष्यति, ऋद्धनोः स्ये इति इट् परोपकाराय पालनं पोषणं च करिष्यति। भरिष्यते = अपने कल्याण के लिए पोषण क्रिया करेगा, किसी को पालन पोषण क्रियाके लिए प्रेरणा आज्ञा करनी हो तब लोट् बिभर्तु इगन्तगुणः बिभृतात् ङिति परे गुणनिषेधात् विभृतां बिभ्रतु। बिभराणि आट् ( पित् ) गुणे मेर्निः विभराव विभराम, विभृताम् = अपना कल्याण करो, बिभ्रातां बिभ्रताम्। बिभृष्व बिभरै बिभरावहै बिभरामहै। अबिभः धारण पोषणार्थक, भृ धातोः समाप्त क्रियार्थे लङ् तिप् इकारलोपे अट् द्वित्वादि कार्ये, गुणे तकारस्य हल्ङ्यादिलोपे, रेफस्य विसर्गे। अबिभृताम् अबिभरुः। अभ्यस्तसंज्ञकस्रे परे झिको जुस। जुसिचेति गुणः। अबिभः, अबिभृतम् अबिभृत। अबिभरम् अबिभृव अबिभृम। बिभृयात् — यातां, युः। बिभ्रीत। बिभ्रयातां बिभ्रीरन्।

कर्तृगामी क्रियाफलके भूतकालमें अबिभृत अबिभ्राताम् अबिभ्रत। अबिभृथाः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

विधिलिङ्—भ्रियात्—आशीर्लिङ् आर्धधातुकसंज्ञा रिङ् आदेशः भ्रियास्तां भ्रियासुः। भृषीष्ट उश्च इति कित्, तस्य फलं गुणनिषेधः भृषीयास्तां भृषीरन्। अभार्षीत् अभार्ष्टां अभार्षुः। सिच् परे वृद्धिः। अभार्षीः अभार्ष्टम् अभार्ष्ट। अभृत=अभृसत ह्रस्वादङ्गात् इति सिचोलुक् अभृषाताम् अभृषत। अभृथाः अभृषि। भगवान् भक्तान् अभरिष्यत् तदा सुखम् अभविष्यत्।

( ९ ) डु ञ् इत्संज्ञक दा धातोः दान ( अर्पण ) के अनुकूलक्रिया अर्थः। कोई स्वत्व ( स्वाधिकार ) निवृत्ति परस्वत्व ( अन्य अधिकार ) की उपलब्धि जनकव्यापारः उभयपदी सकर्मक, अनिट्, ददाति वस्त्रं रजकाय। दाधातु दान जनक क्रियावाचक है वर्तमानकाले अर्थे लट् तिप् शपः श्लु द्वित्वे अभ्यासह्रस्वे। दत्तः—दान क्रियाके कर्ता दो हों, तब द्विवचने तस् श्लु आदि कार्ये, ङित् तस्परे अभ्यस्तस्य आकारलोपे दकारस्य चर्त्वेन 'त' रुत्वे विसर्गे, राजानः दुर्बलाय कम्बलान् ददति झिस्थाने अत्, अभ्यस्त आकारलोपः ददासि दत्थः दत्थ। ददामि दद्वः दद्मः। आत्मकल्याण के लिए दानानुकूल क्रिया हो तब दत्ते ददाते ददते। दत्से ददाथे दध्वे, ददे दद्वहे दद्महे, ददौ। अत्र आकारपरः णल् औभवति। आकारलोपे ददौ ददतुः ददुः ददिथ ददाथ ददथुः दद ददौ। ददे। ददाते ददिरे ददिषे। ददाथे ददिध्वे। ददे। दातासि त्वं पुस्तकम् दातासे नारिकेलं मह्यम्। दास्यति दास्यते शिवः वरं ददातु। दत्तात् ङित्परे 'आतोलोप इट् च इति आकारलोपे चर्त्वे दत्तां ददतु। ददानि ददाव ददाम।

( ३ ) दारुप और धारुप धातुको घुसंज्ञा हो। दाप् दैप्से बने दा धा को घुसंज्ञा न हो। दानार्थक दा, खण्डनार्थक दो, रक्षणार्थक देङ्, इन्हीं के दारुप को घुसंज्ञा हो। धा धारण पोषणार्थक धेट्का 'धा' लाक्षणिक लिया गया, घुसंज्ञाका प्रयोजन भूमास्था, घ्वसोरेत् एलिङ्, गतिस्था, आदिका कार्य होना। घ्वसोः इत्येत्वं देहि। दा सिप् सेर्हि,श्लु आदिकार्ये ददाहि ( घ्वसोरेद्धाव अभ्यासलोपश्च ) से आकारको एत्व अभ्यासलोपे। ददानि ददाव ददाम। दत्तां ददातां ददताम्। ददस्व ददै ददावहै ददामहै, यत्र ङित्प्रत्ययः, तत्र श्नाभ्यस्तयोरात् इत्याकारलोपः दद्यात्, ददीत, ददीयाताम् ददीरन्। ददीथाः। देयात् एलिङ् इति आकारस्य एकारः दासीष्ट दासीयास्ताम् दासीरन्।

अदात् दानजनकक्रियावाचक दा धातोः दा धा घ्वदाप् इति घुसंज्ञा तस्मात् भूतकाले समाप्तदानक्रिया अर्थे लुङ् अट् तिप् सिच् गतिस्था घूपा सिच्लोपे। अदात्। तौ दानमदाताम्। ऋषयः सहस्रवारं कपिलां गाम् अदुः। अत्र सिच्लोपे सति 'आतः' सूत्रेण झेर्जुस् उस्य पदान्तात् इति पररूपे। अदाः अदातम् अदात। अहं ज्ञानम् अदाम् आवां धनम् अदाव। वयम् अदामः।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

६२५ दधस्तथोश्च ८ । २ । ३८ । द्विरुक्तस्य झषन्तस्य धाञो बशो भष् स्यात्तथोः स्ध्वोश्च परतः । धत्तः । दधति । दधासि । धत्थः । धत्थ । धत्ते । दधाते । दधते । धत्से । धद्ध्वे । घ्वसोरेद्धावभ्यासलोपश्च । धेहि । अदधात्, अधत्त । दध्यात्, दधीत । धेयात्, धासीष्ट । अधात्, अधित । अधास्यत्, अधास्यत । णिजिर् शौचपोषणयोः । ११ । (इर इत्संज्ञा वाच्या)। ६ णिजां त्रयाणां गुणः श्लौ ७ । ४ । ७५ । णिज्विज्विषामभ्यासस्य गुणः

---

४ ) स्था और घुसंज्ञक अनयोः = इन दोनों के ईकार अन्त आदेश हो, सिच् कित् आत्मनेपदपरे । भूतकालिकदानानुकूल क्रिया अर्थे । अदित । अदासृत—दा इत्यस्य घुसंज्ञा, तस्य स्थाघ्वोरिच्च इति आकारस्य ईत् आदेशे । सिचः कित् कृते ह्रस्वादङ्गात् इति सिच् लोपे ङितभावे गुणनिषेधो । अदित अदिषाताम् अत्र आतां परे सिच् लोपो न भवति । कित्वाभावात्, ते कम्बलान् अदिषत अदिथाः अदिषाथाम् अदिढ्वम्, अदिषि, अदिष्वहि, अदिष्महि उपसर्गबलसे अनेकार्थकः । आदत्ते विद्यां संधत्ते सायकम् ।

( १० ) धा धातुका वस्त्रादिधारण, शरीरादिपोषणके अनुकूल क्रिया अर्थः अनिट् सकर्मक उभयपदी च । स मुद्रिकां दधातु । धारण फल मुद्रिका में उसकी क्रिया कर्तामें । यह क्रिया वर्तमान रहे धा ति श्लौ, द्वित्वे अभ्यासे, धकारस्य अभ्यासे चर्चः इति दकारः । ( ६२५ ) द्विरुक्तस्य = जिसको द्वित्व किया गया हो, ऐसा झष अन्तवाला धा धातु उसके वश्को भष् हो त थ स ध्व परे । यह भषभाव लट् लोट् लङ् वेधिलिङ्में हो । आकार लोप होनेपर । धत्तः—द धा तस् स्नाभ्यस्तयो रातः इति आलोपे । ततः दधस्तथोश्च दकारस्य भष् प्रत्याहार धकारे, उत्तरधकारस्य चर्त्वे तकारे । ताः आभूषणानि दधति त्वं किं दधासि यूवां धत्थ, दधामि दध्व दध्म उपसर्गेण धात्वर्थः परिवर्त्तते यथा —अविदधाति विदधाति आदधाति—स्थापयति निदधाति परिदधाति = पहिनता है । प्रणिदधाति, मनः योजयति अनुसन्दधाति, खोज करता है । श्रद्धधाति । संदधाति घ्वसोः धु अस् को एत्व हो । अभ्यासलोपश्च= अभ्यासका लोप हो धेहि दधाहि, अत्र अभ्यासस्यलोपे धु संज्ञकस्य धा इत्यस्य एकारे कौपीनम् अदधात् विपूर्वो धा करोत्यर्थे अभिपूर्वस्तु भाषणे, मेलने चापि सम्पूर्वो, निपूर्वः स्थापने मतः ।

( ११ ) णिजिर् धातुका शौच् = प्रक्षालन, धोना, धोबी कपड़ा धोता है । तथा पोषणफलके अनुकूल क्रिया अर्थः । वा० ( धातुमें इर्की इत् संज्ञा कहनी चाहिये । तस्य लोपः तस्यफलं इरितो 'वा' इति च्लेः अङ् आदेशे निनिजति (६) णिज्, पृथक् भावार्थक, विज्, व्याप्ति अर्थमें विष्, धातुओंके अभ्यासको गुणहो,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्यात् श्लौ। नेनेक्ति। नेनिक्तः। नेनिजति। नेनिक्ते। निनेज, निनिजे। नेक्ता। नेक्ष्यति, नेक्ष्यते। नेनेक्तु। नेनिग्धि। ७ नाभ्यस्तस्याचि पिति सार्वधातुके ७।३।८७। लघूपधगुणो न स्यात्। नेनिजानि। नेनिक्ताम्। अनेनेक्। अनेनिक्ताम्। अनेनिजुः। अनेनिजम्। अनेनिक्त। नेनिज्यात्। नेनिजीत। निज्यात्, निक्षीष्ट। ८ इरितो वा ३।१।५७। इरितो धातोश्च्लेरङ् वा परस्मैपदेषु। अनिजत्, अनैक्षीत्, अनिक्त। अनेक्ष्यत्, अनेक्ष्यत।

इति जुहोत्यादयः ॥ ३ ॥

---

श्लु का विषय हो तो। इति अभ्यासस्य गुणे द्वितीयस्य सार्वधातुकगुणे। चोः कुः इति कुत्वेन 'ग' चर्त्वेन क। नेनेक्ति — वह पोषण करता है धोबी वस्त्र धोते समय नेनेक्ति कहते हैं। नेनिक्तः अत्र केवलं अभ्यासगुणो भवति। नेनिजति—अत्र अदभ्यस्तात् झि स्थाने अत्। नेनेक्षि, नेनिक्थः नेनिक्थ। नेनेज्मि नेनिज्व नेनिज्म। शौच पोषण फलानुकूल क्रिया जन्यफल कर्तृगामी हो तब—नेनिक्ते नेनिजाते नेनिजते नेनिक्षे। निनेज निनिजुः निनेजिथ। निनिजे निनिजाते निनिजिरे निनिजिषे। नेक्ता — प्रक्षालन कर्ता पोषणकर्ता नेक्ष्यति — रजकः वस्त्राणि,। त्वं भवनं नेनेक्तु। नेनिक्ताद् नेनिक्ताम्, नेनिजतु। नेनिग्धि। अत्र हि अपित् सन् ङित् अस्ति। तस्य फलं सार्वधातुक गुणनिषेधः हेर्धिः नेनिक्तं नेनिक्त। (७) अजादि पिति सार्वधातुकपरे अभ्यस्तस्य — अभ्याससंज्ञकधातुको पुगन्तलघूपधस्य च इति गुणो न। नेनिजानि, अत्र आट् पित् अस्ति,। लघूपधगुणः प्राप्नोति, परन्तु अजादिपित् सार्वधातुकपरे दृष्ट्वा अभ्याससंज्ञक गुणनिषेधः। नेनिजाव नेनिजाम। नेनिक्तां, नेनिजातां नेनिजतां नेनिक्था नेनिजै। अनेनेक् वस्त्र प्रक्षालन कर चुका। तौ पशून् अनेनित्ताम् अनेनिजुः अनेनेक् अनेनिजम्। अत्र लघूपधगुणस्य नाभ्यस्तस्याचि इति निषेधे। शौचपोषण विषयक सम्भावनायां लिङ् नेनिज्यात्। नेनिज्यातां नेनिज्युः। नेनिजीत, अत्र सीयुट् सकारस्य लोपे, तेन अजादि पित् सार्वधातुकपरे गुण निषेधः। अत्र लिङ् सिचावात्मनेपदेषु सूत्रेण सीयुट् कित् भवति। तस्य फलं गुण निषेधः (८) इर् इत् संज्ञकधातुपरे च्लिको अङ् विकल्पसे हो, परस्मैपदपरे। अनिजत्—भूतकालिक समाप्तशौचपोषण क्रिया अर्थे लुङ्। अनिज् च्लि-त। ततः ईरितोवा इति च्लि स्थाने अङ् — अ कृते। अनिजताम् अनिजन् अनिजः अनिजतम् अनिजत। अनिजम् अनिजाव अनिजाम। यदा सिच् भवति। तदा व्रद व्रज् हलन्त्यस्याचः इति वृद्धिः। अस्तिसिचोऽपृक्तेः इति ईट् कुत्वे चर्त्वे षत्वे, क्षत्वे। अनैक्षीत् अनैक्ताम्, अनैक्षुः। आत्मनेपदे झलोझलि इति सिचोलोपः। अनिक्त अनिक्षाताम् अनिक्षत। अनिक्थाः अनिक्षि। इति जुहोत्यादिगणः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ दिवादयः

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । १ ।
९ दिवादिभ्यः श्यन् ३ । १ । ६९ । शपोऽपवादः । हलि चेति दीर्घः ।

---

## ॥ ४ ॥ अथदिवादिप्रकरणम्

अथ=जुहोत्यादि (श्लुविकरणाक) प्रकरणसमाप्त्यनन्तरं दिव् आदिः यस्य तद्दिवादिगणप्रकरणम् । प्रकृतिप्रत्ययमध्ये यस्तिष्ठति स विकरणः । श्यन्विकरण-प्रधान गणदिवादि है । (१) दिवधातुका क्रीडा, द्यूत खेलनं, विजिगीषा=( विजयस्य इच्छा, ) व्यवहारः=क्रय विक्रय रुपः । आदानप्रदानरुपः व्यवहारः । द्युतिः=प्रकाशः, ( चमकना ) स्तुतिः=प्रशंसा मोदः हर्षः=प्रसन्नता, । मद=नशा या गर्व । स्वप्नः= शयनं, कान्तिः इच्छा नतु प्रकाशः गतिः=गमनं करना इन धात्वर्थ फलों के अनुकूल क्रिया दिव्धातुका अर्थः । ( ९ ) दिवादिगणपठित धातुओंसे श्यन्=य प्रत्यय हो कर्ता अर्थ में । यह श्यन् शप् का बाधकः श इत्का फल सार्वधातुकसंज्ञा । न इत् का फल आद्युदात्त, दीव्यति—क्रीडा, विजगीषा, आदि फलजनकव्यापारवाचक दिव्धातोः क्रियावर्तमाने सति, लट् तस्य स्थाने तिप् शपं बाधित्वा श्यन्=य । हलिच इति दीर्घः । अत्र गुणो न भवति । श्यन् इति अपित् सार्वधातुकं तत् ङिद्भवति, तेन न गुणः । दीव्यति दीव्यतः दीव्यन्ति । देवी देवता दिव्य । आदि शब्द इसी धातु से बने हैं । पाण्डवाः अवदीव्यन्ति, पराजितो भवन्ति । दिदेव=क्रीडा विजयेच्छा इत्यादिफलजनकव्यापारवाचक दिव्धातोः अनद्यतनसमाप्तपरोक्ष क्रिया अर्थे लिट् तिप् णल् दिव्-दिव् दिदिव गुणे दिदेव । कृष्णदम्पत्ती दिदिवतुः भाष्यकराः दिदिवुः । त्वं दिदेविथ दिदिवथुः दिदिव । दिदेव दिदिविव दिदिविम । बलादि आर्धधातुक परे इट् आगमो भवति ।

देविता आगामिदिने क्रीडाद्युतिस्तुति आदि कर्ता अर्थे लुट् तास् इट् गुणे । सामान्यभविष्यकालमें विजयेच्छा व्यवहारादि हो तब देविष्यति देविष्यतः । दीव्यतु—श्यन् प्रत्ययपरे हलिचेति दीर्घः । धृतराष्ट्र बोले कि तुम जूआ खेलो । विधि, प्रेरणा, आज्ञा, आशीर्वाद अर्थमें लोट्, दीव्यतात् दीव्यतां दीव्यन्तु । दीव्य-अत्र हलिचेति दीर्घे, अतोहेः, इति हिलोपे । अदीव्यत्=क्रीडा किया । विजय पाया, प्रकाशस्तुति मोदमदआदिके अनुकूल अद्य भिन्न दिनेसमाप्तक्रिया अर्थे । दीव्येत् भवान् । कान्ति गतिक्रीडा आदिक्रिया की सम्भावना । दीव्यात् सर्वत्र हलिचेत् दीर्घः । अदेवीत् अदेविष्टाम् अदेविषु । अदेवीः अदेविष्टम् अदेविष्ट । अदेविषम् अदेविष्व अदेविष्म । अदेविष्यत् ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दिव्यात् । अदेवीत् । अदेविष्यत् । एवं षिवु तन्तुसन्ताने । २ । नृती गात्रविक्षेपे । ३ । नृत्यति । ननर्त । नर्तिता । ६३० सेऽसिचि कृतचृतच्छृदतृदनृतः ७ । २ । ५७ । एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्येड्वा । नर्तिष्यति, नर्त्स्यंति । नृत्यतु । अनृत्यत् । नृत्येत् । नृत्यात् । अनर्तीत् ।

---

( २ ) षिवु=उकार इत् षिव् धातुका तन्तुसन्तान=तानाबाना विस्तार या सूत्र सन्तान, सीना—गूँथना जनक क्रिया अर्थः । सीव्यति ( कञ्चुकी कुर्ता सीती है ) तौ ऊर्णा वस्त्रं सीव्यतः । तन्तुसन्तनं कुरुतः यथा पूर्वजाः चतुष्वन्दीं सेषिवुः श्वः उपानहौ सेविता । वस्त्राणि सेविष्यति । स सीव्यतु यथा लाभं यथा अन्ये असीव्यन् लाभं अलभन् । यदि निर्धनोपि सीव्येत् तर्हि बहुधनं सीव्यात् । असेवीत्=असिव् इस् इत् । इटः ईटि सलोपः दीर्घे । अघूपधगुणे ! यदि स सर्वेषां वस्त्रम् असेविष्यत् तर्हि बहुधनम् अलप्स्यत् । यह धातु उनी, सूती आदिके सीने अर्थमें उपयोगी है । परिषीव्यति, निषीव्यति इत्यादौ षोपदेश निमित्तक परिनिविभ्यः इति षत्वम् ।

( ३ ) नृती = ईकार इत्नृत् धातुका गात्रविच्छेप, अङ्गप्रत्यङ्ग हाव-भाव प्रदर्शित करना अङ्ग हिलाना, शरीरमें तरङ्ग आना, इसके अनुकूल क्रिया अर्थः अयं सेट् अकर्मकः । श्यन् । सर्वत्र अपित् सार्वधातुक है उसका फल ङित्भाव, गुणनिषेध । नृत्यति मयूरः । नृत्यतः नृत्यन्ति । त्वं नृत्यसि । अहं सभायां नृत्यामि । शिवः सुन्दरं ननर्त । नृत्, नृत्, नृनृत, 'उरत्' नर्नृत, ननृत, गुणे रुपम् । बाराङ्गने ननृतुः । जनाः ननृतुः यथा—त्वं ननर्तिथ । युवां मञ्चे ननृतथुः । यूयं सभायां ननृत । तथैव अहं ननर्त, आवां ननृतिव । वयं ननृतिम । बलादि-आर्धधातुकपरे इट् क्ङिद्भवति तत्र गुणनिषेधः । गात्र विच्छेपकी क्रिया अद्य भिन्नभविष्यकालिक हो, लुट् नर्तिता । इट् गुण आदिः । नर्तितारौ नर्तितारः नर्तितासि ( वे कल नाचेंगे ) सामान्य भविष्य कालिकनर्तन क्रिया हो वहाँ लृट् स्य ति गुण । नर्त्स्यति ततः ।

( ६३० ) एभ्यः=छेदनार्थक कृत्, अनावरणार्थंक चृत् । दीप्ति=प्रकाशार्थक, छृद् हिंसार्थक, अनादरार्थक तृद्, गात्र विक्षेपार्थक नृत, धातुओंसे परे सिच् से भिन्न सादेः=सकारादि आर्धधातुकप्रत्ययको इट्-विकल्पसे हो । प्रसङ्गे सकारादिः 'स्य' प्रत्ययस्य से सिचि, आदि सूत्रेण इट् नर्तिष्यति । यदा न इट् तदा नर्त्स्यंति । बालिका नृत्यतु । यथा—बालकः अनृत्यत् । यदि नर्तकः नृत्येत् सर्वे प्रसन्नाः भवेयुः । स ससुखं नृत्यात् । अनर्तीत्=अनृत् इस् ईत् । इटः ईटि सलोपे गुणे दीर्घे गन्धर्वौ सभायां कदा अनर्तिष्टाम् । यदा तारिकाः अनर्तिषुः । यदा त्वम् अनर्तीः अनर्तिष्टम् अनर्तिष्ट । तदा अहम् अनर्तिषम्, अनर्तिष्व अनर्तिष्म । लृङ् लकारे सकारादि-आर्धधातुक स्यपरे इट् विकल्पेन भवति, यदा मेघाः अभूवन् तदा मयूराः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अनर्तिष्यत्, अनत्स्यत् । त्रसी उद्वेगे । ४ । वा भ्राशेति श्यन्वा । त्रस्यति, त्रसति । तत्रास । १ वाजॄभ्रमुत्रसाम् ६ । ४ । १२४ । एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा । त्रेसतुः, तत्रसतुः । त्रेसिथ, तत्रसिथ । त्रसिता । शो तनूकरणे । ५ ।

२ ओतः श्यनि ७ । ३ । ७१ । लोपः स्यात् । श्यति । श्यतः । श्यन्ति ।

---

अनर्तिष्यन् अनत्स्यन् ।

( ४ ) त्रसी—इकार इत् । त्रस् धातुका उद्वेग—ऊबना, घबराना, उचाट होना, डरनेके अनुकूलक्रिया अर्थः । वह क्रिया वर्तमान रहे तब त्रस् श्यन्=यति परन्तु नित्य श्यन् को बाधकर 'वाभ्राश्म्लास् भ्रमु-क्रमु आदि सूत्रेण श्यन् विकल्पः । त्रस्यति यदा न श्यन् तदा शप् एव तिष्ठति अनुबन्धलोपे त्रसति बालकः अन्धकारे शून्य घरमें चोरोंसे डरता है । वह घबड़ाहटकी उद्वेगजनकक्रिया परोक्षभूतकालमें तब लिट् त्रस्-त्रस् तत्रस् उपधा वृद्धिः णित् परे णलादिः । परश्वः स्वप्ने तत्रास, दम्पती त्रेसतुः । तत्रस्-अतुस् इति दशायाम् । ( १ ) एषाम्=जीर्णार्थक जॄ, भ्रमणार्थक भ्रम्, उद्वेगार्थक त्रस्, इन धातुओंको कित् लिट् परे और सेट् थल् परे, एत्व अभ्यास लोप हो विकल्पसे । ( यह अप्राप्त विभाषा है । अत एकहल्मध्ये सूत्र प्राप्त नहीं हैं । क्योंकि जॄ को त्रसके संयोग होनेसे ) । इति सूत्रेण एत्वे अभ्यास लोपे च त्रेसतुः । यदा एत्वाभ्यास लोपौ न भवतः तदा तत्रसतुः । जनकसभायां परशुरामं दृष्ट्वा स सर्वे जनाः त्रेषुः । तत्रषुः । थलि परे इट् कृते सति एत्वे अभ्यासलोपे च त्रेसिथ, तत्रसिथ त्रेसथुः एत्रसथः, त्रेस् तत्रस् अहं तत्रास तत्रस् त्रेसिव तत्रसिव । त्रेसिव तत्रसिम । स त्रसिता । त्रसिष्यति । त्रस्यतु त्रसतु । अत्रस्यत् अत्रसन् त्रस्येत् त्रसेत् । त्रस्यात् अत्रासीत् अत्रसीत् । अतोहलादेर्लघोः इति वृद्धिविकल्पः अत्रसिष्यत् तदा कुपथ्मत्यक्ष्यत् ।

( ५ ) शो धातुका तनूकरण=कृश दुर्बल, पतला, न्यून, करनेके अनुकूलक्रिया अर्थः अयं अनिट् अकर्मकः, तनू करणार्थक शो धातोः प्रचलितक्रिया काले वर्तमाने लट् शपं बाधित्वा श्यन्=य ततः ( २ ) ओतः=ओकारका लोप हो श्यन् परे इति ओकरलोपे । श्यति शरीरं । तौ तपसा शरीरं श्यतः । तक्षकाः काष्ठानि श्यन्ति । त्वं तु अधीतां विद्यां श्यसि । श्यथः श्यथ । अहं गात्रं श्यामि । आवाम् आलस्यं श्यावः वयं पापानि श्यामः । सर्वत्र श्यन् परे ओकारलोपो भवति, भगीरथः यथा शरीरं तपसा शशौ । तदा गङ्गा आगमत् । शो + लिट् तिप् णल् 'आदेच उपदेशे' इति आत्वे आत् और णलः इति औकारे द्वित्वादिः शशौ शशतुः शशुः शाता – ओकारस्य आत्वं न्यूनकर्ता स्वकीयान् अवगुणान् शास्यति, क्षीणीकरण या न्यूनीकरणविषयक आज्ञा, प्रेरणा, की सम्भावनामें लोट् श्यतु । तु स्थाने तातङ् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शशौ । शशतुः । शाता । शास्यति । ३ विभाषा घ्राधेट्शाच्छासः २।४।७८।
एभ्यः सिचो लुग्वा स्यात्परस्मैपदे परे। अशात् । अशाताम् । अशुः । इट्-
सकौ । अशासीत् । अशासिष्टाम् । छो छेदने । ६ । छ्यति । षोऽन्तकर्मणि
। ७ । स्यति । ससौ । दोऽवखण्डने । ८ । द्यति । देयात् । अदात् । व्यध

---

श्यतात् दुर्गुणानि । श्यतां श्यन्तु । श्य ( हेलुंक पक्षे तातङ् ) श्यतात् श्यतं श्यत ।
श्यानि श्याव श्याम । तनुकरणकी क्रिया समाप्त हो लङ् अश्यत् अश्यताम् अश्यन्,
अश्यः, अश्यतम्, अश्यत, अश्यम् अश्याव अश्याम श्येत् श्येतां श्येयुः । श्येः श्येतं
श्येत, श्येयं श्येव श्येम ।

( ३ ) विभाषा ऐभ्यः=सूँघने अर्थमें घ्रा, पानार्थक धेट्, तनूकरणार्थक शो, छेदनार्थक दो, नाशकारणार्थक षो, इन धातुओंसे परे सिच्का लोप विकल्पसे हो परस्मैपद परे । अशात्—तनूकरणानुकूलक्रियावाचक शोधातोः भूतकाल ( समाप्त क्रिया अर्थे लुङ् ) अट् तिप् सिच् 'आदेच् उपदेशे' इति ओकारस्य आत्वे । विभाषा घ्राधेट आदि सूत्रेण सिचो लुक् विकल्पः । अशात् मूर्खो 'अध्ययनम् अशाताम् । कृषकाः कीटान् अशुः, अत्र 'आतः' सूत्रेण झि स्थाने जुस् आत्वे आकारस्य अस्य-पदान्तात् इति पररूपे । यदा सिचो लुक् न भवति तदा यमरम् नमातां सक् च' सूत्रेण इट्सकौ भवतः । अ शा स् इ स् ईत् । इट ईटि' सलोपे दीर्घे । आशासीत् । अशाशिष्टाम् अशाशिषुः । अशाशीः । अशास्यत् ।

( ६ ) छो धातुका छेदन=काटनेके अनुकूल क्रिया अर्थः सकर्मकः काष्ठं छ्यति ओकार इत् श्यनपरे ( छिनत्ति ) काटता है । चच्छौ शाकम् । वृक्षं छाता । पटोलं छास्यति कुष्माण्डं छ्यतु यथा—कर्कटीम् अच्छ्यत् । नापितः केशानि । छ्येत्, छायात् अच्छात् । अच्छासीत् विभाषा घ्रेटेशाच्छासः । ( ७ ) षो=सोधातुका अन्तकर्म= विनाशकरण, समाप्त होना, या अन्तिमसंस्कारजनक क्रिया अर्थः । सकर्मकः । यह क्रिया वर्तमान् रहे तत्र लट् । पितुः शवं स्यति । परन्तु उपसर्गके योगमें अर्थ भिन्न है यथा—अवस्यति निर्धारणं करोति । व्यवस्यति=व्यवस्थानं करोति । भरतः दशरथस्य शरीरं शशौ । पपौ इव । साता, सास्यति । स्यतु ( अन्तिम संस्कार करो ) यथा—पूर्वजाः अस्यन् । स्येत् असात् असासीत् । सिच् लुक् विकल्पः ।

( ८ ) दो धातुका अवखण्डन=शकलीकरणम् टुकड़ा करनेके अनुकूल क्रिया अर्थः सकर्मक । सर्वत्र श्यन् परे ओकार लोपः । अन्यत्र ओकारस्य आत्वम् । स काष्ठं द्यति, शकलीकरोति=टुकड़े करता है । यथा—तक्षा ददौ । दाता, दास्यति, द्यतु अद्यत् द्येत् अदात् । अत्र गातिस्था' आदि सूत्रेण सिचो नित्यं लोपः देयात् इत्यत्र ऐर्लिङः अनशत् ।

( ९ ) व्यधधातुका ताडन, वेधनं, बाणादिना परपीडा करणम् । पतले

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ताडने । ९ । ४ ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ६ । १ । १६ । एषां सम्प्रसारणं स्यात्किति ङिति च । विध्यति । विव्याध । विविधतुः । विविधुः । विव्यधिथ, विव्यद्ध । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् । पुष पुष्टौ । १० । पुष्यति । पुपोष । पुपोषिथ । पोष्टा । पोक्ष्यति । पुषादीत्यङ् । अपुषत् । शुष शोषणे । ११ ।

---

धारवारे शस्त्रप्रयोगमें इसधातुका उपयोग है, सकर्मकः । व्याधाशब्द इसी धातुसे बना है । ताडन या वेधन क्रिया वाचक व्यध्धातोः प्रचलितक्रिया वर्तमाने लट् तिप् शपः श्यन् । ततः । ( ४ ) ग्रह = ग्रहण करना वयोहानार्थक ज्या, तन्तु सन्तानर्थक व्येञ् ताडनार्थक व्यध, इच्छार्थक वश, ठगने अर्थमें व्यच्, छेदनार्थक व्रश्च धिज्ञासार्थक पृच्छ, पाकार्थक भ्रस्ज, इन धातुओं को सम्प्रसारण हो कित् ङित् प्रत्यय परे । प्रसङ्गे श्यन् प्रत्ययः, ङिद्वत्, अपित्सार्वधातुकत्वात् । ङित्परे । व्यधधातो यकारस्य सम्प्रसारणे व्याधः बिडालं विध्यति । अर्जुनशिखण्डिनौ भीष्मं विध्यतः । सर्वान् विध्यन्ति । ताडनजनकक्रियावाचक व्यध्धातोः अद्यभिन्नसमाप्तताडनक्रियायाः परोक्षकाले अर्थे लिट् तिप् णल् द्वित्वे लिटचभ्यासस्वोभयेषामिति, अभ्यासस्य सम्प्रसारणे । हलादिशेषे अतोपधायाः वृद्धिः पित्स्थले एवं भवति । थल्परे भारद्वाजमते इट् विकल्पः । विव्यधिथ पक्षे थस्थाने धः । धातुधकारस्य जश्त्वे सवर्णेझरि लोपे विव्यध । कित्प्रत्यये तु पूर्वं सम्प्रसारणं तदाश्रयं कार्यं पररुपं बलवद्भवति । पश्चात् द्वित्वम् । अतो विविधतुः विविधुः । व्यध्ता इतिदशायां झषस्तथोर्धोध, इति त स्थाने धः । धातुकारस्य जश्त्वं परश्वः मत्स्यान् व्यद्धा । शबरः शुकान् व्यत्स्यति । मुनिः मदनं विध्यतु, यथा—कामः शिवमविध्यत् । यदि सर्वेजनाः कामानि विध्येयुः ममाशीर्वादः, ते विध्यासुः आशीर्लिङ् यासुट् किद्भवति । तस्य फलं सम्प्रसारणम् । यदा ताडनक्रिया समाप्ता भूतकाले अर्थे लुङ् अव्यात्सीत् अव्याद्धाम् अव्यात्सुः । वद व्रज हलन्तलक्षणा वृद्धिः । धकारस्य चर्त्वेन तकारः । अव्यात्सीः अव्याद्धाम् अव्याद्ध झलो झलि सलोपः । अव्यात्सम् अव्यात्स्व अव्यात्स्मा ( १० ) पुष्धातुका पुष्टि—पोषण = वढ़ना दृढ़ होने जनक क्रिया अर्थः अनिट् भी, सज्जनः शरीरं पुष्यति । पुष्टिजनकक्रियाके वर्तमाने लट् मूर्खौ शरीरमेव पुष्यतः । सर्वे प्राणिन. पितरौ गुरुञ्च पुष्यन्ति । यथा—त्वम् उद्याने वनस्पतिं पुष्यसि एवमहम् आत्मीयान् पुष्यामि, । गुरुः ज्ञानेन शिष्यं पुपोष त्वं सुपुषिथ नित्यं बलादि इट् । पोष्टा + ता ष्टुत्वे गुणेच । पोष्टारौ पोष्टासि । पोक्ष्यति पुषयति अत्र षढोकः सि धातु षकारस्य स्थाने क, स्यसकारस्य षत्वे क ष संयोगे क्षत्वे रुपम् । अपुषत्— पोषणार्थक पुष्धातोः भूतकाले लुङ् अट् तिप् पुषादि द्युतादि इति च्लि स्थाने अङ् ।

( ११ ) शुष् धातुका शोषण = निरसीभवनं—निरस होना सूखनेके अनुकूल व्यापारः अनिट् । मदीयं वस्त्रं शुष्यति । यथा = गुरोः शुशोष । परश्व सर्वेषां,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शुष्यति। शुशोष। अशुषत्। णश अदर्शने। १२। नश्यति। ननाशः। नेशतुः।

६३५ रधादिभ्यश्च ७।२।४५। रध् नश् तृप् दृप् द्रुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात्। नेशिथ। ६ मस्जिनशोर्झलि ७।१।६। नुम् स्यात्। ननंष्ठ। नेशिव, नेश्व। नेशिम, नेश्म। नशिता, नंष्ठा। नशिष्यति, नङ्क्ष्यति। नश्यतु। अनश्यत्। नश्येत्। नश्यात्। अनशत्। षूङ् प्राणिप्रसवे। १३। सूयते। सुषुवे। क्रादिनियमान्निट्। सुषुविषे।

---

शोष्टा शोक्ष्यतिच। तत्रापि शुष्यतु, यथा—मम अशुष्यत्। एवं सर्वेषां शुष्येयुः अशुषत्। ( १२ ) णश अदर्शने ( णोनः ) धातुका ( अदर्शन ) लोप अप्रत्यक्ष आदि अर्थ है। घटो नश्यति। घटका अदर्शन। ननाश—लिट्लकारमें कित् वचन अतुस् आदि परे। इट् पक्षेच अत एकहल्मध्ये, थलि च सेटि, एताभ्याम् एत्वम्, अभ्यासलोपश्च भवतः। नेशतुः ननश अतुस्। एत्वे अभ्यास लोपे च नेशुः ( ६३५ ) **रधादिभ्यः**=रध आदि धातुओसे परे बलादि आर्धधातुकको विकल्प इट् हो। नेशिथ अदर्शनार्थक नश् धातोः परोक्षे समाप्त क्रिया अर्थे लिट् मध्यम पुरुषस्य एक वचने थल् तस्य आर्धधातुकसंज्ञा रधादिभ्यश्च इट् विकल्पः थलिच सेटि एत्वे, अभ्यास लोपे च। इट् अभाव पक्षे ननश थ इति दशायाम् ( ६ ) मस्ज् और नश् धातुको नुम् हो, झलि=झलादि प्रत्ययपरे। इति नुम्=( न ) तस्य अपदान्त झलि परे अनुस्वारे व्रश्चभ्रस्ज इति सकारस्य षत्वे यकारस्य ष्टुत्वे ननंष्ठ. नेशिव नेश्व, नेशिम नेश्म, इट् विकल्पे। नशितां रधादिभ्यश्च इट् यदा न इट् तदा नंष्टा- नुम ष्टुत्वे, षत्वे, एवं नशिष्यति। यदा न इट् तदा नश् स्यति। अत्र व्रश्चेति षत्वे षढोः कः सि इति कत्वे क ष संयोगे क्षत्वे ततः मस्जि नशोर्झलि, इति नुम्। अनुस्वारपरसवर्णौ नङ्क्ष्यति नश्यतु अनश्यत् नश्यात्। नङ्क्षीत् अनशत्। पुषादि गणत्वात् च्लेः अङ् अनशाताम् अनशन् अनश. अनशतम् अनशत्।

( १३ ) षु धातुका प्राणिप्रसव = जीव जनन् ( पैदा ) होनेके अनुकूलव्यापारो अर्थः। प्रायः प्राणियोंके प्रसवमें प्रयुक्त अनिट् धातु है। भार्या पुत्रं सूयते प्रसव कालकी क्रियाके वर्तमान रहते लट्। गावौ सूयेते। अजाः चतुरः वत्सान् सूयन्ते रामं सुषुवे। कैकेयी सुमित्रा च सुषुवाते सुषुविरे। त्वं कदापुत्रौ सुषुविषे, क्रादि- नियमात् नित्यमिट् भवति। सुषुवाथे, सुषुवे सुषुविवहे सुषुविमहे। प्राणियोंके प्रसव क्रियाकी समाप्तिका अप्रत्यक्ष काल अर्थ। सोता—श्वः सोता। यदा स्वरति सूति सूयति इत्यादि सूत्रेण इट् तदा सविता। प्रसवकर्ता। कल बच्चा पैदा करेगी। अन्यत्र इट् विकल्प, उक्त सूत्रसे स्मरण करे। सविष्यते सोष्यते। गर्भिणी प्रसवं

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सुषुविवहे । सुषुविमहे । सविता, सोता । दूङ् परितापे । १४ । दूयते । दीङ् क्षये । १५ । दीयते । ७ दीङो युडचि क्ङिति ६ । ४ । ६३ । दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् । ( वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ) । दिदीये । ८ मीनातिमिनोतिदीङां ल्यपि च ६ । १ । ५० । एषामात्वं स्याल्ल्यपि चादशित्येज्निमित्ते । दाता । दास्यति । ( स्थाघ्वोरित्त्वे दीङः प्रतिषेधः ) । अदास्त । डीङ् विहायसा गतौ । १६ । डीयते । डिड्ये ।

---

करिष्यति । आज्ञा, प्रेरणा, विधि, अर्थमें लोट् सूयताम्=वह पैदा करे । असूयत् सूयेत् सविषीष्ट सोषीष्ट । असविष्ट असोष्ट । असविष्यत् असोष्यत् ।

( १४ ) ङकार इत् दूधातुका परिताप=आत्मग्लानि, पश्चात्ताप, दुखी होना अर्थ यह सेट् अनिट् भी, कैकेयी दूयते ग्लानिं करोति । धृतराष्ट्रः पुत्रनाशात् श्रुत्वा दुदुवे, दुदुवाते दुदुविरे छात्राः अनुत्तीर्णाः भूत्वा । त्वं दुदुविषे दुदुवाते दुदुविध्वे, अहं दुदुवे । अद्यभिन्न भविष्यकाल में पश्चाताप् क्रिया का द्योतक लुट् । इट् दविता । गुणावादेशे, सज्जनः अपराधं कृत्वा दविष्यते । यथा—दशरथः एवं सोऽपि दूयताम्, यथा—दशरथः श्रवणं हत्वा अदूयत् दूयेत्, दवषीष्ट, अदविष्ट अदविष्यत् ।

( १५ ) दीधातुका क्षय=विनाश, ह्रास, क्षीणताजनकव्यापारः सन्निपातेन रोगी क्षीयते । वर्तमानकालिकीक्षयक्रिया । दिदीये—क्षयार्थक दिधातोः परोक्षेलिट्त—एश्, द्वित्वे, अभ्यासह्रस्वे ततः । ( ७ ) दीङः=दीङ् धातुसेपर अजादि कित्ङित् आर्धधातुकको युट् ( य ) आगम हो इतिसूत्रेण अजादि ङित् आर्धधातुकसंज्ञक एकारस्य युट्=य् आगमे । अत्र असिद्धवदत्राभात् इति सूत्रेण युट्आगमस्य असिद्धि कृत्वा एरनेकाच् सूत्रेण यण् प्राप्नोति, यन्निषेधार्थं ( वा ) वुक् युट् ये दोनों उवङ् और यण् की दृष्टिमें सदा सिद्ध है । क्षय क्षीणता ह्रासकी क्रिया अद्यभिन्न भविष्यकालिक हो तो लुट् । ( ८ ) मीनाति हिंसार्थक मी, क्षेपणार्थक मि, क्षयार्थक दी, धातुओं को आकार अन्तादेश हो, ल्यपिपरे, गुणवृद्धिनिमित्तक शिद्भिन्न प्रत्ययपरे, चकारात् शिद्भिन्न, एच्निमित्तकस्यापि ग्रहणम् । दाता, दास्यति, दीयताम् अदीयत् दीयेत्, दासीष्ट, ( वा० ) स्थाघोः=स्थाधातु घुसंज्ञक धातुओं को लुङ्लकार में स्थाघोरिच्च सूत्रसे प्राप्त ईत्व न हो । इति वार्तिकेन ईत्वनिषेधे आदास्त अदासाताम् अदासत । क्षयके अनुकूल भूतकालिकक्रिया अर्थः । ( १६ ) ङ्इत् डीधातुका विहायसा=आकाश से गमन अर्थः, ऊपर उड़ना सेट्, अकर्मक, प्रायः उत्पूर्वक-प्रयोगप्रशस्त है । उड्डीयते वायुयानं । डिड्ये पक्षी डयिता, डीयताम्, अडीयत, डीयेत डयिषीष्ट अडयिष्ट अडयिष्यत् ।

( १७ ) पीङ् धातुका पीना जलादिका, गलविलाधः संयोग अर्थः । दुग्धं पीयते। पिप्ये, पेता, पेष्यति, पीयताम्, अपीयत, पीयेत, पेषीष्ट, अपेष्ट अपेष्यत ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

डयिता। पीङ् पाने। १७। पीयते। पेता। अपेष्ट। माङ् माने। १८। मायते। ममे। जानी प्रादुर्भावे। १९। ९ ज्ञाजनोर्जा ७।३।३९। अनयोर्जादेशः स्याच्छिति। जायते। जज्ञे। जनिता। जनिष्यते।

६४० दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ३।१।६१। एभ्यश्च्लेश्चिण् वा स्यादेकवचने तशब्दे परे। १ चिणो लुक् ६।४।१०४। चिणः परस्य लुक् स्यात्। २ जनिवध्योश्च ७।३।३५। अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च। अजनि, अजनिष्ट। दीपी दीप्तौ। । २०। दीप्यते। दिदीपे। अदीपि, अदीपिष्ट। पद गतौ। २१। पद्यते।

---

( १८ ) माँ धातुका मान परिच्छेदकरना, नापना या तौलना अर्थः, मायते, ममे, माता, मास्यते, मायताम्, अमायत, मायेत, मासीष्ट, अमास्त, अमास्यत्।

( १९ ) इकार इत् जन् धातुका प्रादुर्भाव प्रकट, उत्पत्तिजनक क्रियाअर्थः। ( ९ ) अनयोः— अवबोधनार्थक ज्ञा, प्रादुर्भावार्थक जन् धातुको जा आदेश हो, शित्प्रत्ययपरे। प्रादुर्भवनक्रियावर्तमाने ( पुत्रः जायते ) जन् धातोः वर्तमाने लट् त टेः एत्वे श्यन् = य ज्ञाजनोर्जा इति जनस्थाने जा आदेशे, जायते। कृष्णः। प्रादुर्भावार्थक जन् धातोः लिट् त एश् द्वित्वादि, जजन-ए इति। **गमहनजन** आदि सूत्रेण उपधाअलोपे नकारस्य श्चुत्वे ञकारे जज्ञ्ञेः। जज्ञे, जज्ञाते, जज्ञिरे, देवता पैदा हुए। त्वं कस्मिन् वर्षे जज्ञिषे, जज्ञाथे जज्ञिध्वे। जज्ञे जज्ञिवहे जज्ञिमहे। परश्वः बालको जनिता। भगवान् धर्मरक्षार्थं सदा जनिष्यते। जायताम् अजायत, जायेत। जनिषीष्ट। अजनिष्ट, अजनि। प्रादुर्भावार्थक जन्धातोः भूतकाले ( समाप्त जनन क्रिया )—लुङ् तिप् इकारलोपे अट् आगमे च्लेः सिच्प्राप्तेः परन्तु।

( ६४० ) दीप—प्रकाशे उत्पत्यर्थे जन, ज्ञाने, अर्थे बुध, पूरणार्थे पूरी, प्रसारण पालने अर्थे ताय, विकसने प्याय, इन धातुओं से परे च्लि के स्थान में चिण् आदेश विकल्प से हो। एकवचने त शब्द परे। इति च्लिस्थाने चिण् अनुबन्धलोपे ततः, (१) चिण् से परे त शब्द का लुक्=अश्रवण अदर्शन हो, इससे त का लोप हुआ। अजन् + इ। अत्र उपधावृद्धि प्राप्ते तां बाधित्वा। (२) **अनयोः**=जन और बध धातु की उपधा को वृद्धि न हो, चिण् ञित् णित् कित् प्रत्यय परे इति निषेधे। यदा च्लिस्थाने चिण् न भवति, तदा सिच् इट् षत्व ष्टुत्व अजनिष्ट। अजनिषाताम अजनिषत अजनिष्ठाः, दीपीदीप्तौ=ईकार इत् दीप्धातुका प्रकाशजनक व्यापारो अर्थः। बालकः मणिरिव दीप्यते। वर्तिका दीदीपे, दीपिता, दीपिष्यते, अदीपि, दीपजन आदि सूत्रेण चिण्। पक्षे अदीपिष्ट। २१। पदधातुका गति=गमन अर्थ है। वह क्रियाके वर्तमान कालमें लट्श्यन् ते। पद्यते, गच्छति। पेदे देवदत्तः ज्ञानं परश्वः पत्ता। पत्स्यते, पद्यताम्

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पेदे। पत्ता। पत्सीष्ट। ३ चिण् ते पदः ३।१।६०। पदेश्च्लेश्चिण् स्यात्तशब्दे परे। अपादि। अपत्साताम्। अपत्सत। विद सत्तायाम्। २२। विद्यते। वेत्ता। अवित्त। बुध अवगमने। २३। बुध्यते। बोद्धा। भोत्स्यते। भुत्सीष्ट। अबोधि, अबुद्ध। अभुत्साताम्। युध संप्रहारे। २४। युध्यते।

---

अपद्यत्, पद्येत पत्सीष्ट। अपादि-गत्यर्थक पदधातोः समाप्तगमन क्रिया भूतकाले लुङ् अट् त च्लि तस्य स्थाने। ३। पदधातु से परे च्लि स्थाने चिण् होत शब्द परे। इति च्लिस्थाने सिच् चर्त्वे। अपत्सत् अपत्थाः अपत्साताम्, अपध्वम्। अपत्सि अपत्स्वहि अपत्समहि। यत्र झलिपरे अस्ति तत्र झलोझलि इति सकार लोप। पद धातु के अनेक अर्थ है। अप्रसिद्ध अर्थों के द्योतक उपसर्ग होते हैं। यथा—प्रयत्पाणिः शरणं, प्रपद्ये=ग्रहण करना, उपपद्यते=उपपन्न होना, उत्पद्यते=जन्म लेना, आपद्यते=आपत्ति होना, निष्पद्यते, सिद्ध होना, विपद्यते=विपत्ति में पड़ना। सम्पद्यते= सम्पन्न होना, उपपादन=निष्पादन। प्रपन्न।

( २२ ) विद्धातु का सत्ता उपस्थितिः वर्तमानत्व, अस्तित्व जनक व्यापार अर्थ है। अनिट् अकर्मकश्च, इस धातुमें सत्ता रूप फल की, स्पष्ट प्रतीति है, किन्तु क्रिया की नहीं, वह कर्ता में प्रत्यय होने से अनुमित है। स विद्यते, सनकादयः विद्यन्ते। भवान् वेत्ता, वेत्स्यते। संस्कारः। विद्यतां यथा—सूर्यः अविद्यत्। भवान् विद्येत। वित्सीष्ट। अवित्त। ( २३ ) बुध—धातु का अवगमन ज्ञान के अनुकूल व्यापारो अर्थः। ज्ञान की क्रिया वर्तमान रहने पर बुध्यते। समाचारं बुबुधे, शास्त्रं बोद्धा, गुणो। तयोर्धोधः धस्य चर्त्वे, शस्त्रं ( भोत्स्यते ) एकाचो बशो इति भषभावे इति व स्थाने भ ( वह शास्त्र समझेगा )। तुम शास्त्र समझो बुध्यस्व, यथा—स बुध्यतां, भुत्सीष्ट। अत्रापि भष्भावे चर्त्वे, ईश्वर चाहेंगे अवश्य ज्ञान होगा। नारद इत्यबोधि कृष्णः। दीप जनबुध इति च्लेः चिण्, यदा न चिण् तदा झलोझलि सिच् लोपे अबुद्ध। झषस्तथोर्धोऽधः।

अभुत्साताम् बुध के 'ब' को भष् भावेन 'भ' अभुत्सत। सभी वेदान्त समझें। अबुद्धाः अभुत्साथाम् अभुद्ध्वम्। अभुत्सि अभुत्स्वहि अभूत्समहि ( २४ ) युध् धातु का सम्प्रहार संग्राम खुलीमार के अनुकूल व्यापार अर्थ। अयमनिट् अकर्मक अत्मनेपदी च। सम्प्रहरण क्रिया प्रचलित रहे तब युध्यते। बालकौ युध्येते। शत्रवः परस्परं युध्यन्ते, युध्यसे युध्येथे युध्यध्वे। युध्ये, युध्यावहे युध्यामहे। संग्रामकी क्रिया की परोक्षकालिक समाप्ति अर्थ में लिट् युध-युध युयुध त-एस्, युयुधे नकुल, सर्पेण सह। मेषः श्व योद्धा, प्रहरणार्थक् युधधातोः अद्यभिन्नभविष्य, काले अर्थे लुट् तास् तिप् डा लघूपध् गुणे झषस्तथोर्धोधः त स्थाने ध, धातु धकारस्य जश्त्वेन दकारे। अत्र इट् न भवति, अनुदात्तोपदेश धातुः अनिट्भवति। योद्धारौ योद्धारः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

युयुधे। योद्धा। अयुद्ध। सृज विसर्गे। २५। सृज्यते। ससृजे। ससृजिषे।

४ सृजि-दृशोर्झल्यमकिति ६।१।५८। अनयोरमागमः स्याज्झलादावकिति। स्रष्टा। स्रक्ष्यते। सृक्षीष्ट। असृष्ट। असृक्षाताम्। मृष् तितिक्षायाम्। २६। मृष्यति, मृष्यते। ममर्ष। ममर्षिथ। ममृषिषे।

---

योद्धासे योद्धासाथे योद्धाध्वे योद्धाहे योद्धास्वहे योद्धास्महे। सामान्य भविष्यकालिक। योधिष्यते, आपत्तिभिः। भवानपि परिस्थितिभिः युध्यतां यथा—करपात्रीः धर्मार्थं अयुध्यत। यदि धार्मिकः युध्येत तर्हि कल्याणं भवेत्, युत्सीष्ट, युद्धक्रियासमाप्तौ भूतकाले लुङ् अयुद्ध। अयुधसत् झलोझलि इति सलोपे त स्थाने 'ध' जश्त्वे। बलकेशवौ, अयुत्साताम् यथा—राजानः अयुत्सत अयुद्धाः अयुत्साथाम्। अयुत्सि अयुत्स्वहि अयुत्समहि। अयोत्स्यत् अयोत्स्येताम्।

( २५ ) सृज्धातुका विसर्ग विशेष सृष्टिकरना अर्थः। यद्यपि विपूर्वक सृज् का विदाकरना, त्याग अर्थ, यथा—विसर्जनं विसृजति तथापि धात्वर्थमें निर्दिष्ट होनेसे विशेष निर्माण अर्थ भी है, केवल सृजका प्रयोग निर्माण अर्थमें ही है, यह निर्माणकी परोक्ष कालिक क्रिया रहने पर भवनं ससृजे। ससृजाते ससृजिरे। ससृजिषे ससृजाथे ससृजिध्वे। ससृजे ससृजिवहे ससृजिमहे। सृष्टि ( निर्माण ) किया—अद्य भिन्न भविष्यकालमें लुट् सृज् ता ( तास् डा )। ( ४ ) अनयोः=सृज् और दृश्धातुके झलि=झलादि अकित्प्रत्ययपरे अम् आगम् हो। सृअ ज् ता ऋ स्थाने यण् जकारस्य व्रश्चभ्रस्जेति षत्वे, ततः ष्टुत्वेस्रष्टा। स्रष्टारौ। स्रष्टारः। स्रष्टासे स्रष्टाध्वे स्रष्टाहे स्रष्टास्वहे स्रष्टास्महे। कुलालः मृतमृत्पात्राणि स्रक्ष्यते सृज् स्य ते। झलादि किद्भिन्न प्रत्ययः 'स्य' अतः अम् आगमो भवति। जकारस्य व्रश्चेति षः तस्य कः स्यं सकारस्य षः कषसंयोगे क्षः। स्रक्ष्येते। भवान् शकटादीन् सृज्यताम् यथा—ब्रह्मा सर्वान् असृज्यत। त्वमपि सृज्येः। यथा—बालकाः अत्र सीयुट कित् अस्ति तेन अम् न भवति सृक्षीरन् ध्रुवाय ध्रुवलोकम् असृष्ट विष्णुः। असृजस्त् झलोझलि सलोपे षत्वे ष्टुत्वे रूपम्। अत्रापि लिङ् सिचावात्मनेपदेषु इति सूत्रेण सिच्कित् भवति, तेन 'अम्' न। असृक्षाताम् अत्र जकारस्य षत्वे षढोः कः सि। असृत असृक्थाः असृक्षाथाम् असृड्ढ्वम् असृक्षावहि असृक्षामहि।

अस्रक्ष्यत ( २६ ) मृष्धातुका तित्तीक्षा ( सहनं ) वर्दास्त करने के अनुकूल क्रिया अर्थ। यह सेट् स्वरितेत् सकर्मक, उभयपदीं, मृष्यति लट् तिप् श्यन् ( सहन करता है )। दुष्टं मृष्यते।-सहन क्रिया का परोक्षभूतकाल मृष्-मृष् मर्‌मृष् ममृष ममर्ष ( बहुत क्षमाकर चुका ) ममृषतुः प्रजाः ममृषुः। यत्र कित् प्रत्ययः तत्र न गुणः। ममर्षिथ ममृषथुः। ममृषे ममृषाते ममृषिरे क्रादिनियमात् नित्यमिट् सहन-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मर्षितासि, मर्षितासे। मर्षिष्यति, मर्षिष्यते। णह बन्धने। १७। नह्यति, नह्यते। ननाह। ननद्ध, नेहिथ। नेहे। नद्धा। नत्स्यति। अनात्सीत्, अनद्ध।

इति दिवादयः।

## अथ स्वादयः

षुञ् अभिषवे। १। ६४५ स्वादिभ्यः श्नुः ३। १। ७३। शपोऽपवादः। सुनोति। सुनुतः (५०१) हुश्नुवोरिति यण्। सुन्वन्ति। सुन्वः, सुनुवः।

---

क्रिया सभी कर्ता में माने मर्षितासि एक महीने के बाद सहन करूँगा। तिप् तास् डा इत् गुण् मर्षितासे थासः से मर्षिष्यति। आप कब क्षमा करेंगे। इट् स्य, गुण, पापः दुखं मृष्यतु, मृष्यताम् गुरुः अमृष्यत, मृष्येत मृष्यात् मृक्षीष्ट अमर्षीत् अमर्षिष्ट, अमर्षिष्यत् विमृष्यति। आदिमें उपसर्ग जुड़नेपर विचार आदि अर्थ हैं। (२७) नह् बन्धने=बांधना संयत, परिधान, अर्थः अनिट्, स्वरितेत् उभयपदी सकर्मक, स उपानहौ नह्यति। यथा—अग्रजः ननाह, नेहतुः नेहुः, अत एकहल्मध्ये इति एत्वे अभ्यासलोपे। नेहिथ नहनह ननह, इट् थल् थलि च सेट् इति एत्वेऽभ्यासलोपे इट् अभावपक्षे ननहथ नहोधः इति हकारस्य धः झषस्तथोर्धोधः इति थस्य धः पूर्वधकारस्य जश्त्वे, त्व पशून् कदा ननद्ध। नेहथुः नेह ननाह ननह नेहिव नेहिम, आत्मनेपदे नेहे नेहाते नेहिरे। आगामिवर्षे वत्सान् नद्धा (बांधेगा) नत्स्यति। नहोधः तस्य चर्त्वं तकारः। नह्यतु नह्यताम्, अनह्यत, नह्येत्, नह्यात् नत्सीष्ट अनात्सीत् अनाद्धाम् अनात्सुः अनात्सीः, अनाद्धम् अनाद्ध। अनात्सम् अनात्स्व अनात्स्म, अनद्ध अनत्साताम् अनत्सत अनद्धाः अनत्साथाम् अनध्वम् अनत्सि अनत्स्वहि अनत्स्महि। अनत्स्यत्–त। सन्नद्ध सन्नह्यतिमें उपसर्ग विशिष्टका तैयार होना अर्थ है।

इति प्रभाकरीटीकायां दिवादिः।

(५) अथस्वादिः—अथ श्यन् विकरण विषयक धातुगण समाप्त्यजन्तरं सुधातः आदौ यस्य प्रकरणस्य तत् आरभ्यते स्वादिगणका भेदकधर्म श्नु विकरण है। (१) ञ इत् षुधातुका अभिषव=स्नपनं लता आदि निचोड़ना, स्नानं=स्नान करना, कराना भी, पीडनम्=निचोड़कर चुआना, सुरासन्धानं सोमलता आदिका रस निकालना, मद्य् प्रकाना अर्थ षोपदेश, उभयपदी, सकर्मकः।

(६४५) स्वादिगणपठित धातुओंसे श्नु प्रत्यय हो, प्राप्त शप्को बाधकर यह श्नु शित्, सार्वधातुक, अपित्, ङित् भी है। सुनोति बारम्भारं स्नाति, लतां

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सुनुते । सुन्वाते । सुन्वते । सुन्वहे, सुनुवहे । सुषाव । सुषुवे । सोता । सुनु । सुनवानि, सुनवै । सुनुयात् । सूयात् । ६ स्तु-सु-धूञ्भ्यः परस्मैपदेषु

---

निश्चोतति, परान् पीडयति, । आदि क्रियाओंके वर्तमान रहते षु धातो लट् तिप् शपं बाधित्व स्वादिभ्यः श्नुः, अनुबन्ध लोपे, धात्वादेः षः सः । उकारस्य सार्वधातुक रे गुणे, परन्तु धातोः उकारस्य न गुणः अपित् ङित् व्यवधानात् । सोनं सुनुतः अत्र तस् ङित् अस्ति । यस्य फलं गुणाभावः सुन्वन्ति, अभिषवार्थक सुधातोः वर्तमान-कालिके सुरासन्धानार्थे लट् बहुवचने झि झोऽन्तः आदेशे शपः श्नुः । सु नु अन्ति । ङित् सन् गुण निषेधः उवङ् आदेशं बाधित्वा हुश्नुवोः सार्वधातुके इति यण् । त्वं शिवं सुनोसि अभिषेकं करोषि, यूवां वस्त्र सुनुथः, सुनुथ, अहं अङ्गौच्छ वस्त्रं सुनोमि आवां सुन्वः सुनुवः लोपश्चा-स्वोः इति उकारस्य लोप विकल्पे । एवं सुन्मः सुनुम, सुनुते स्नानं कुरुते । सु नु त टेः एत्वे अपित् 'नु' ङित् अस्ति, तस्य फलं गुणनिषेध । सुन्वाते आताम् परे हुश्नुवोः इति उस्थाने यण् टेः एत्वे । सुन्वते । अत्र झस्थाने 'आत्मनेपदेष्वनतः' इति अत् आदेशे यण् पूर्ववत् । सुनुषे सुन्वाथे सुनुध्वे । सुन्वे सुन्वहे सुनुवहे । म्वोः परे उकारलोपविकल्पे सुषाव—अभिषेकसुरासन्धाननिश्चयोतनफल जनकक्रियावाचक सुधातोः अद्यभिन्नभूतकाले ( समाप्त क्रिया अर्थे ) परोक्षे लिट् तिप् णल, द्वित्वे अभ्यासकार्ये, वृद्धिः अवादेशे, षत्वे दुःस्वप्ननिश्चयरणाय शिवं सुषाव, सुषुवतुः सुषुवुः । सुषविथ सुषोथ सुषुवथुः । सुषाव सुषव सुषुविव सुषुविम, आत्मने-पदे त स्थाने एश् द्वित्वे, उवङ् आदेशे सुषुवे सुषुवाते सुषुविरे । सुषुविषे सुषुआथे सुषुविध्वे सुषुवे सुषुविवहे । सोता मद्यक्षरणकर्ता । सोष्यते, वस्त्रपीडमं करिष्यति, सुनोतु, सुनुतात्, सुनुतां सुनुवन्तु । सनु—अत्र सि स्थाने 'हि' कृते 'उतश्च प्रत्ययात्' इति हेलुंकः सुनुतं सनुत, सुनवानि = सुनुआट् नि । पित् ङित् न भवति । उकारस्य गुणे अवादेशे रूपं सुनवाव सुनवाम, सुनुतां सुन्वातां सुन्वताम् सुनुस्व सुन्वाथां सुनुध्वम् आत्मनेपदे उत्तम पुरुषस्य एकवचने इट आट आटश्चेति वृद्धिः 'एतऐ' उकारस्य गुणे अवादेशे सुन्वै सुन्वावहै असुनोत् असुनुताम् असुन्वन् । असुनोः असुनुतम् असुनुत । असुनवम् असुन्व असुन्म । असुनुत असुन्वाताम् असुन्वत असुनुथाः । सुनुयात् । सूयात् अकृत्सार्वधातुकपरे दीर्घः । सुन्वीत । सुन्वीयातां सुन्वीरन् । सुन्वीथाः । सोषीष्ट सोषीयास्तां सोषीष्ठाः ।

( ६ ) स्तुसु धुञ्धातुसे परे सिच्को इट् हो परस्मैपद परे । असुत् इति स्तुसु-धुञ्भ्यः इति सिच इट् आगमे अस्तिसिचोऽपृक्ते इति ईट् आगमे । इटः ईटि इति सिचसकारस्यलोपे, सवर्णदीर्घे सिच्वृद्धिः आव् आदेशे । असावीत् असाविष्टाम् असा-विषुः असावीः असाविष्टम् असाविष्ट । असाविषम् असाविष्व असाविष्म, आत्मनेपदे असुसत —गुणे षत्वे ष्टुत्वे असोष्ट । असोषाताम् असोषत असोष्ठाः असोष्यत् ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

७।२।७२। एभ्यः सिच इट् स्यात् परस्मैपदेषु। असावीत्। असोष्ट। चिञ् चयने। २। चिनोति। चिनुते। ७ विभाषा चेः ७।३।५८। अभ्यासात् परस्य कुत्वं वा स्यात् सनि लिटि च। चिकाय, चिचाय। चिक्ये। चिच्ये। अचैषीत्, अचेष्ट। स्तृञ् आच्छादने। ३। स्तृणोति, स्तृणुते। ८ शर्पूर्वाः खयः ७।४।६१। अभ्यासस्य शर्पूर्वाः खयः शिष्यन्तेऽन्ये हलो लुप्यन्ये। तस्तार। तस्तरतुः तस्तरे। (४३८) गुणोऽर्तीति। स्तर्यात्। ९ ऋतश्च संयोगादेः ७।२।४३। ऋदन्तात् संयोगादेः परयोर्लिङ्-

---

(२ चिधातोः चयनम्=इकट्ठा करना चुनना, संग्रह के अनुकूलव्यापारः अनुदात्तोपदेश, अनिट्. उभयपदी, सकर्मकश्च रामः पुष्पं चिनोति। तण्डुलात् कंकड़ चिनुते सु धातुके समानरूप।

(७) अभ्यास से परे चिके चको कुत्व विकल्प हो सन् लिट् परे। पुष्पाणि कदा चिकाय, चयनानुकूल व्यापार वाचक चिधातोः अद्यभिन्नभूतकाले लिट् द्वित्वादिः चिचिअ। विषापाचेः इति द्वितीय चकारस्य कुत्वे अचोऽणिति इति अजन्तं मत्वावृद्धिः आदेशे। यदा न कुत्वं तदा चिचाय चिक्यतुः चिच्यतुः। चिकेथ चिकयिथ। चिचेथ चिचयिथ चिकाय चिकय इत्यादि। चेता ( धान्यानां चयनकर्ता )। चेष्यति, चेष्यते। प्रत्याशिनां चयनं करिष्यति। भवान् चिनोतु, चिनुताम् अचिनोत् अचिनुत। चिनुयात् चिन्वीत। चीयात् चेषीष्ट अचैषीत् अचेष्ट।

अपचिनोति=नीचे गिरता है। अवचिनोति। निचले भागसे चुनता है। निश्चनोति=निश्चयं करोति संचिनोति संग्रहक०। ( ३ ) स्तृधातुका आच्छादन, आवरण, ढकना अर्थः। स्तृणोति आच्छादयति गृहम्। स्तृ 'नु' ति गुणे ऋवर्णान्नस्य णत्वं वाच्यम्। विस्तृणोति = चांदनी फैलती है। या विस्तार करता है, आस्तृणोति = आच्छदनं करोति।

( ८ ) अभ्याससंज्ञकसे शर् = श ष स अक्षर पूर्वमें हों ऐसा खय् प्रत्याहारके अक्षर शेष रहे, अन्यका लोप हो। हलादि शेषको बाधकर। आस्तरणार्थकस्तृधातोः अद्यभिन्न परोक्षभूतकाले अर्थे लिट् स्तृ स्तृ अ शर्पूर्वाखयः सूत्रेण शर्पूर्वकखयः अभ्यासस्य सकारः। स शिष्यते। अन्यः सकारः लुप्यते। ऋतश्चसंयोगादेर्गुणः इति अर्गुणे उपधावृद्धिः। तस्तार। तौ आस्तरणं तस्तरतुः तस्तरे, तस्तराते तस्तरीरे तस्तरी— फैली है। स्तर्ता। स्तरिष्यति। स्तरतु ( ऋद्धनोः इति इट् ) स्तृणोतु। अस्तृणुत। स्तृणुयात् स्तर्यात्। गुणोर्ति इति गुणः। ( ९ ) ऋदन्तसंयोगादिधातुसे परे लिङ् सिच् को इट् विकल्प हो। तङ् = आत्मनेपदे परे स्तरिषीष्ट। स्तृ सीसत् अत्र ऋतश्च—आदि सूत्रेण विकल्पेन इट्। आर्धधातुकगुणे षत्वे ष्टुत्वे रुपम्। यदा न इट् तदा उश्च इति कित्वे गुणनिषेधे स्तृषीष्ट। अस्तार्षीत् अस्तार्ष्टाम्

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सिचोरिड् वा स्यात्तङि। स्तरिषीष्ट। स्तृषीष्ट, अस्तरिष्ट। अस्तृत। धूञ् कम्पने। ४। धूनोति, धूनुते। दुधाव। ( ४७६ ) स्वरतीति वेट्। दुधविथ, दुधोथ।

६५० श्र्युकः किति ७। २। ११। श्रिञ एकाच उगन्ताच्च गित्कितोरिण् न। परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट्। दुधुविव। दुधुवे। अधावीत्। अधविष्ट। अधोष्ट। अधविष्यत, अधोष्यत्। अधविष्यताम्, अधोष्यताम्। अधविष्यत, अधोष्यत। इति स्वादयः।

---

इगन्तलक्षणावृद्धिः अ तरिष्ट, ऋतश्चसंयोगादेः इति इट्। यदा न इट् तस्मिन् पक्षे 'उश्च' कित्, गुण निषेधे ह्रस्वादङ्गात् इति सलोपे। अस्तृत।

( ४ ) धु धातुका धुनना ( धुनियां कर्म ) कम्पन = कँपाना हिलाना आदि अर्थः। हिरण्यकशिपुः, चम्पक वनानि धुनोति, कार्पासं —रूई धुनता है। शप् के स्थानमें श्नु प्रत्यय गुण धुनुतः धुन्वन्ति। धुनुते धुन्वाते धुन्वते। परोक्षकालिककम्पन क्रिया अर्थमें। धु-त—धू धू दुधू अ। अचोऽञ्णिति वृद्धिः इति आयादेशे दुधाव। दुधुवतुः दुधविथ-दु 'धु इ' थ इति दशायां स्वरतिसूतिसूत्रेण इट् विकल्पे। यदा न इट् तदागुणे दुधोय। धविता। (६५०) श्रि, एकाच् और उगन्त धातुओंसे परे गित् कित् वलादिआर्धधातुकको इट् न हो। दुधुव—म। अत्र स्वरतिसूयति इति विकल्प इट् विधायकं सूत्रं परमपि ( पर है ) विप्रतिषेधे परं कार्यं भवति। तथापि स्वरत्यादि के विकल्पको बाधकर, पुरस्तात् प्रतिषेधकाण्ड (पहले निषेध का आरम्भ) होनेके सामर्थ्यसे अनेन-श्र्युकः किति, इति सूत्रेण, इट् निषेधे प्राप्ते क्रादिनियमात् निषेध को बाधकर नित्य इट् हुआ। दुधविथ दुधुवथु। दुधुवे दुधुवाते दुधुविरे। धविता, धोता। धविष्यति धोष्यति। धूनोतु धूनुताम्। अधुनोत् अधुनुत। धुन्वीत धूयात्। धविषीष्ट, धोषीष्ट। अधावीत् अधाविष्टाम् अधाविषुः। इतिस्वादयः।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## ६—अथ तुदादयः

तुद व्यथने । १ । ६५१ तुदादिभ्यशः ३ । १ । ७७ । शपोऽपवादः । तुदति, तुदते । तुतोद । तुदोदिथ । तुतुदे । तोत्ता । अतौत्सीत्, अतुत्त । णुद प्रेरणे । २ । नुदति, नुदते । नुनोद । नोत्ता । भ्रस्ज पाके । ३ । (६ : ४) ग्रहिज्येति सम्प्रसारणम् । सस्य श्चुत्वेन शः, शस्य जश्त्वेन जः । भृज्जति,

---

## अथतुदादिः

( १ तुद्धातु हो आदिमें जिस प्रकरणके । पूर्व पर प्रकरणका भेदक धर्म शप्के स्थानमें श विकरण जो पित् नहीं है । शप्पित् है । शको ङिद्वत् तन्निमित्तकगुण, सम्प्रसारण, आदि नहीं होते । शप् अनुदात्त, श उदात्त है । स्वरितेत् उभयपदी, अकर्मक, तुद्का व्ययनं दुःखदानं पीडापहुँचाना । दैत्यः देवान् तुदति तुतुदे व्यथनार्थक ( परपीड़ाप्रापणार्थक ) तुद् धातोः लट्तिप्श = अ अत्र गुणो न भवति । श-ङित् अस्ति । तुदतः तुदन्ति तुदते । तुतोद, लिट् तिप् णल द्वित्वादिः गुणे । न जाने कब पीड़ा दिया । तुतुदतुः तुतुदुः तत् चक्रुः तुदादि थल्परे द्वित्वादि कार्ये गुणे, क्रादि-नियमात् नित्यमिट् तुतुदथुः : तुतुदे । व्यथित किया त स्थाने एश् । असंयोगात् लिट् कित्, तस्य फलं गुणाभावः । व्यथन क्रिया अद्यभिन्न भविष्यकालिकी हो । तोत्ता तोत्तसि तोत्तासे, तोत्तास्मि । तोत्स्यति । तुदतु तुदतां तुदेत्. तुद्यात्, तुत्सीष्ट । अतौत्सीत् । सिचि वृद्धिः, ईडागमे दस्य चर्वे अतौत्ताम् अतौत्सुः । अतौत्सीः, अतौत्तम्, अतौत्त । झलोझलि इति सिच् सकारस्य लोपः । अतुत्त अतोत्स्यत् अतोत्स्यत् अतुत्साताम् अतुत्सत अतुत्थाः ।

( २ ) णुद=नुद् धातुका प्रेरणा, क्रियामें प्रवृत्तिजनकव्यापारो अर्थः । नुदति । शिक्षक शिष्यको प्रेरित करता है । विपूर्वक नुदधातु का विनोद = बहलाना अपनोद अपनुदति दूरकरना । प्रणुदति=सम्पूर्णरूपं तुद्वत्तुल्यं नोत्ता, नोत्स्यति, अनौत्सीत् अनोत्स्यत् । ( ३ ) भ्रस्ज धातुका पाके=भाड़में भूंजने के अनुकूल क्रिया अर्थः चणकं कलायकं ( मटर ) मसूरिकां गोधूमं च भृज्जति । भ्राष्ट्रे भर्जनाय भ्रस्ज्धातोः वर्तमानकालिकीभ्राष्ट्रभर्जनक्रियावर्तमाने लट् तिप्, तुदादिभ्यः शः ङित् अस्ति । भ्रस्ज अति-इति दशायां ग्रहिज्यावयिव्यधि इत्यादि सूत्रेण र-स्थाने ऋ सम्प्रसारणे । अकारस्य पूर्वरूपे सस्य श्चुत्वेन तस्य झलांजशिझसि इति जकारे भृज्जति । एवं भृज्जते । लावा लाई भूंजता हूँ । भूँजता है । भृज्जेते, भृज्जन्ते । भृज्जसे भृज्जेये

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भृज्जते । २ भ्रस्जो रोपधयो रमन्यतरस्याम् ६ । ४ । ४७ । भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । मित्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज । बभर्जतुः । बभर्जिथ, बभर्ष्ठ । बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ । ( ३०९ ) स्कोरिति सलोपः ( ३०७ )

---

भृज्जध्वे । भृज्जे वृद्धा भृज्जति । अहं भृज्जे । ( २ ) भ्रस्जधातु के रोपधयोः= रेफ और उपधा दोनों के मिलित स्थानमें रम् आगम हो विकल्पसे आर्धधातुक प्रत्यय परे, रम् में अम् दोनों इत् । केवलं रेफः शिष्टः मित्वात्=रम् के मित् होने से अन्त्य अच्से परे हो स्थानषष्ठी निर्देशात्=रोपधयोः में स्थानषष्ठी उच्चरित है रम् होने पर रेफ और उपधा दोनोंकी निवृत्ति हो गयी, क्योंकि रेफ उपधा दोनों के ही स्थान में रम् हुआ है । कलायकं यवं च कदा बभर्जः । पाकजनकक्रियावाचक भ्रस्ज धातोः परोक्षेलिट् तिप्णल् भ्रस्ज अ इति दशायां भ्रस्जोरोपधयो इति सूत्रेण भ्रस्ज ( के ) रेफस्य उपधाभूतसकारस्य च स्थाने रम् आगमे रेफस्य सकारस्य च निवृत्तिः । अनुबन्धलोपे । भर्ज् भर्ज् बभर्ज । बालिके धन्यानि बभर्जतुः; यदा न इट् बभर्जिथ । भारद्वाजमते पाक्षिक इट् । सकार लोपे, जकारस्य बभर्ष्ठ— व्रश्चभ्रस्ज इति जकारस्य षत्वे । सकारस्य ष्टुत्वे । यदा रम् आगमो नभवति तदा भ्रस्ज शब्दस्य द्वित्वादिकार्ये बभ्रस्ज अ इति स स्थाने श्चुत्वेन शः तस्य जश्त्वेन जः । बभ्रज्जथुः । बभ्रजिथ, अत्र भारद्वाजनियमेन इट् । यस्यमते न इट्, तत्र बभ्रस्जथ 'स्कोः संयोगाद्योः' इति संयोगादि सकारस्य लोपे जकारस्य व्रश्चेति षत्वे, ष्टुत्वे च बभ्रष्ट । भ्रस्ज-ता—रम् आगमे, रेफसकारयोः निवृत्तिः (लोपः) व्रश्च भ्रस्ज इति षत्वे, तकारस्य ष्टुत्वे भर्ष्टा । यदा रम् न भवति । तदा संयोगादिसकारलोपे, जकारस्य षत्वे, तकारस्य ष्टुत्वे भ्रष्टा । भर्क्ष्यति, भ्रस्ज् स्यति । रम्आगमे । भ्रज-स्यति जकारस्य षत्वे तस्य षढोकःसि इति ककारे स्य सकारस्य षत्वे संयोगे-क्ष रुपम् । रम् अभावपक्षे सकारस्य संयोगादिलोपे षत्वे भ्रक्ष्यति । ङ्किति—कित् ङित् आर्धधातुक परे रमागम=भ्रस्जोरोपधयोः सूत्रसे प्राप्त रम् आगम को बाधकर सम्प्रसारण हो । पूर्वं विप्रतिषेधेन=विप्रतिषेधे परंकार्यम् । सूत्र से परकार्य रम् आगमको बाधकर पूर्व विप्रतिषेधसे सम्प्रसारण हुआ । भ्राष्ट्रे भर्जनार्थक भ्रस्ज धातोः आशीर्वादार्थे लिङ् तिप्, यास्, 'किदाशिषि' सूत्रेणं यासुट् कित् भवति । यहाँ प्राप्त रम् आगमको बाधकर पहले सम्प्रसारण हुआ । पूर्वविप्रतिषेधसे रम् आगम भर्ष्टा में चरितार्थ है । सम्प्रसारण इज्यात् में वार्तिक से पूर्व विप्रतिषेध से सम्प्रसारण प्रबल पड़ा । भृस्ज् या त् । सकारस्य श्चुत्वे तस्य जश्त्वेन जकारे । भृज्ज्यास्ताम् । आत्मनेपदमें एकबार रम् आगम, एकबार सम्प्रसारण भ्रस्ज् सीसृत् । सकारस्य संयोगादिलोपे, जकारस्य षत्वे, षढोः क आदेशे, षत्वे ष्टुत्वे रम् आगमे भ्रक्षीष्ट सम्प्रसारण पक्षे भृक्षीष्ट ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

व्रश्चेति षः । बभ्रष्ठ । बभर्ज, बभ्रज्जे । भ्रर्ष्टा भ्रष्टा । भ्रक्ष्यति, भर्क्ष्यति । ( क्ङिति रमागमं बाधित्वा सम्प्रसारणं पूर्वविप्रतिषेधेन ) भृज्ज्यात् । भृज्ज्यास्ताम् । भृज्ज्यासुः । भक्षीष्ट, भ्रक्षीष्ट । अभार्क्षीत्, अभ्राक्षीत्, अभर्ष्ट, अभ्रष्ट । कृष विलेखने । कृषति, कृषते । चकर्ष । चकृषे ।

१ अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ३ । १ । ५९ । उपदेशेऽनुदात्तो

---

तुम सदा भाड़में अन्न भूजा करो । कन्या यवं गोधूमं च अभ्राक्षीत् । अभ्रस्ज् स् त् इति दशायाम्, रम् आगमे रेफसकारयोर्लोपे वद्व्रज हलन्तस्याचः इति वृद्धिः । जकारस्य षत्वे षकारस्य कत्वे सिचः सकारस्य षत्वे ईट् आगमे रुपम्, यदा रम् आगमो न भवति, तदा सकारस्य संयोगादिलोपे अन्यत्कार्यं पूर्ववत् । अभ्राक्षीत् अभ्राष्टाम् अभ्राक्षुः । अभ्राक्षीः अभ्राष्टम् अभ्राष्ट । अभ्राक्षम् अभ्राक्ष्व अभ्राक्ष्म । सेविका कन्दम् आलुकं च । अभर्ष्ट । भूतकालिकभर्जन क्रिया अर्थ में लुङ् अभ्रस्ज स् त अत्र रेफ उपधासकारस्य च स्थाने 'रम्' आगमे झलोझलि सिच् सकारस्य लोपे जकारस्य षत्वे तकारस्य ष्टुत्वे रुपम् । रम अभावपक्षे सकारस्य संयोगादिलोप इति विशेषः । अभ्रष्ट अभ्रक्षाताम् अभ्रक्षत । अभ्रष्ठा अभर्ष्ट अभर्क्षाताम् अभर्क्षत, अभर्ष्ठाः अभर्क्षाथाम् अभर्ढ्वम् । यदा भर्ज्यं ( भूजा ) अभर्क्ष्यत अभ्रक्ष्यत तदा सर्वे अखादिष्यन् ।

( ४ ) कृष्धातुका विलेखनम् भूमिकर्षणं = हलखींचना या कुदालसे गोड़नेके अनुकूल व्यापारो अर्थः स्वरितेत्, उभयपदी, अनिट्, सकर्मकः । किसान खेत जोतता है, यहाँ कर्षण खींचना रुप फल खेतमें है उस क्रिया को करने वाला किसान है । फल व्यापारका आश्रय भेद है । शप के स्थानमें तुदादिभ्यः—श=अ प्रत्यय । जो अपित् ङित्वत् भी है । जिसका फल है गुणका अभाव हलवाहक हल जोतता है । कृषकः क्षेत्रं कृषते । विलेखन ( जोतना ) क्रिया परोक्षमें समाप्त हो तब चकर्षः ; कृष् लिट् तिप्णल् कृकृष् । अभ्यास ऋ स्थाने अत् हलादि शेषः । उत्तर खण्ड ऋकारस्य गुणः । महिषासुरं चकर्ष जगर्ज च कृषे. आत्मनेपदे त तस्थाने एश् कृते गुणात् पूर्वविप्रतिषेधेन । ऋदुपधेभ्यः लिटः कित्वं भवति, तेन गुणो न । अभ्यासादि कार्ये । चकृषाते चकृषिरे, चकृषिषे । चकर्ष चकृषतुः चकृषुः । चकर्षिथ चकृषथुः चकृष । चकर्ष चकृषिव चकृषिम । हमलोग ऊसर खेत जोतते हैं । क्रष्टा विलेखनार्थक भूमिकर्षणार्थक कृष् धातोः अद्य भिन्नभविष्यकालिक • कर्षणक्रिया अर्थे लुट् तास् तिप्डा अनुबन्ध लोपे टिलोप कृष् ता इति दशायाम् । ( ३ ) अनुदात्तस्य = उपदेश अवस्थामें जो अनुदात्त और ऋदुपध=ह्रस्व ऋकार उपधामें हो उस धातुको 'अमं' हो विकल्पसे, झलादि कित् भिन्न आर्धधातुक परे । प्रसङ्गमें कृष् धातु उपदेशमें

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

य ऋदुपधस्तस्याम् वा स्याज्झलादावकिति । क्रष्टा, कर्ष्टा । कृक्षीष्ट । ( स्पृश मृश कृष-तृप-दृषां च्लेः सिज्वा वाच्यः ) । अक्राक्षीत, अकार्क्षीत् । अकृक्षत् । अकृष्ट । अकृक्षाताम् । अकृक्षत । क्सपक्षे-अकृक्षत । अकृक्षाताम् । अकृक्षन्त । मिल सङ्गमे । ५ । मिलति, मिलते । मिमेल । मेलिता । अमेलीत् । मुच्लृ मोचने । ६ । ४ शे मुचादीनाम् ७ । १ । ५९ । मुच लिप्-

अनुदात्त, ह्रस्व ऋकार, उपधामें उससे परे किङ्भिन्न झलादि प्रत्यय तास् है अम् हुआ । कृ अष ता अत्र ऋकारस्य यण् तकारस्य ष्टुत्वे । अम् अभाव पक्षे आर्धधातुक गुणे कर्ष्टा-कर्ष्टारौ कर्ष्टारः । लड़का बड़ा होगा तब खेत जोतेगा । सामान्य भविष्य कालिक कर्षणक्रियामें क्रक्ष्यति कर्क्ष्यति क्रक्ष्यते । भवान् आत्मानम् उद्यानं कृषतु । कृषतां कृषेतां कृषन्ताम् । यथा—आभीरः कर्षणयन्त्रेण ( ट्रैक्टर ) अकृषत् अकृषत । खेत जोतने विषयकविधि, आज्ञा प्रेरणा, सम्भावना अर्थ में लिङ् । कृषेत् कृषेताम् कृषेयुः । कृषेत कृषेयातां कृषेरन् । कृष्यात् । आप अपनी भूमि प्रसन्न होकर कृक्षीष्ट— ( कर्षणं कुर्यात् ) कृष स्त इत्यवस्थायाम् 'षढोः क सि' इति ककारे षत्वे ष्टुत्वे कृक्षीष्ट लिङ् सिचावात्मनेपदेषु इति सूत्रेण लिङ् कित् भवति, तेन अमागमो न कृक्षीयास्तां कृक्षीयारन् कृक्षीष्ठा कृक्षीयास्यां कृक्षीय । भूतकालिक समाप्तकर्षणक्रिया अर्थे लङ् तिप् च्लि । ततः ( वा ) स्पृशः मृश कृश तृप दृप इन धातुओं से परे च्लिको सिच् विकल्पसे हो । इति सिच् पक्षे अम् आगम अक्राक्षीत् । अम् अभावे अकार्क्षीत् । क्स पक्षे अकृक्षत् । अकृष्ट । अत्र सिच पक्षे झलोझलि इति सलोपे ष्टुत्वे । अकृक्षाताम् अकृक्षत अकृढ्वम् । यदा च्लिस्थाने क्स भवति, तदा ष् स्थाने क । स स्थाने ष । अकृक्षत—यत्र कित् अस्ति तत्र 'अम्' न भवति । अकृक्षाताम् अत्र क्सस्याचि इति अकारस्य लोपः, अकृक्षन्त । अत्र झकारस्य अन्त आदेशे क्सस्याचि अकारलोपे तेन 'आत्मनेपदेष्वनतः' इति प्रवर्तते । अक्रक्ष्यत् अकर्क्ष्यत । निष्कृषति, संकृषति ।

( ५ ) अकार इत् मिल धातुका सङ्गम—मेलनं मिलनामिलाना, फलजनक व्यापारो अर्थः; मेला, सम्मेलन आदि अनेकभाव, गङ्गा यमुना सरस्वती च मिलन्ति । एतासां सङ्गमो भवति, मिमेल ( कुम्भ में सभी लोग मिले ) मेलिता, मेलिष्यति, मिलतु, अमिलत, अमेलीत्, अमेलिष्यत् । ( ६ ) लृकार इत् मुच् धातु का मोचन मुक्त करना, छोड़ना या खोलना फलजनकव्यापारो अर्थः, सकर्मक अनिट् मुच् अति इति । ( ४ ) मोचनार्थक मुच् उपदेहार्थक लिप्, लाभार्थक विद्, लोपार्थक लुप, सिञ्चनार्थक सिच्, छेदनार्थक कृत्, दैन्यार्थक खिद्, पेषणार्थक पिस्, धातुओंसे नुम् हो सपरे । इति सूत्रेण नुम् ( न् ) आगमे तस्य अनुस्वारे अनुस्वारस्य ययिपरे परसवर्णे ञकारे । यत्र श प्रत्ययः तत्रैव नुम् भवति । मुञ्चति गां श्रीकृष्णः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

विद्-लुप् सिच्-कृत्-खिद-पिशां नुम् स्यात् शे परे। मुञ्चति, मुञ्चते। मोक्ता। मुच्यात्। मुक्षीष्ट। अमुञ्चत्, अमुक्त। अमुक्षाताम्। लुप्लृ छेदने। ७। लुम्पति। लुम्पते। लोप्ता। अलुपत्, अलुप्त। विद्लृ लाभे। ८। विदति, विदन्ते। विवेद, विविदे। व्याघ्रभूतिमते सेट्। वेदिता। भाष्यमतेऽनिट्। परिवेत्ता। षिच क्षरणे। ९। सिञ्चति, सिञ्चते।

---

दिलीपः धेनुं बनाय मुमोच, श्वः नगरं मोक्ता—मुच्ता गुणे चकारस्य कुत्वे मोक्ष्यति मोक्ष्यते। मुञ्चतु मुञ्चताम्, अमुञ्चत। मुञ्चेत् मुच्यात्, पुषादिद्युतानि इति च्लिस्थाने अङ् अमुचत् अमुक्त। झलोझलि सलोपः। अमुक्षाताम् अमुक्षत। अमुक्थाः, अमुक्षाथाम् अमुग्ध्वम्। अमुक्षि, अमुक्ष्वहि, अमुक्ष्महि, अमोक्ष्यत्, अमोक्ष्यत। (७) लुप् धातुका छेदन, समाप्ति, लोप, अभाव, फलजनकक्रिया अर्थः। यह भी अनिट् है। लृदितकाफल 'लृदितः परस्मैपदेषु' च्लिस्थाने अङ् विधानम्। लुम्पति शूर्पणखा रावणवंशं, लुलोप श्वः सर्वं लोप्ता, लोप्स्यति, लुम्पतु, अलुम्पत्, लुम्पेत्, अलुपत्, अलुप्त। (८) विद धातुका लाभप्राप्ति, फलजनकक्रिया अर्थः, यहाँ भी लृदितका फल च्लिको अङ् होना। अनिट् उभयपदी, विप्रः 'गाम्' विन्दति शे मुचादीनामिति नुम् विन्दते। एकलव्यः श्रद्धया धनुर्ज्ञानं विवेद, विविदे। व्याघ्रभूति, आचार्यके मतमें विद्धातु सेट् है। अनुदात्तोपदेश धातुमें पठित है। यह मत चान्द्र और दुर्ग आचार्य का भी है। परन्तु भाष्यकारके मतमें अनिट् है प्रमाणमें परिवेत्ता उदाहरण है। परिपूर्वक विद्धातुसे तृच, किन्तु इट् का न होना। जेष्ठं परित्यज्य दाराग्निग्राही, परिवेत्ता उच्यते। जेठ भ्राताके पहले छोटे का विवाह होना परिवेत्ता है। वेदिष्यति वेत्स्यति। अविदत् अवित्त।

(९) षिच् धातुके षको स स्वरितेत् अनिट्, सकर्मक सिच् धातुका क्षरण, चूना, पसीझना, सींचना, फलजनकक्रिया अर्थः सींचने, पानी रेंगने की क्रिया, वर्तमान रहते कर्ता अर्थमें लट् तिप् तुदादिभ्यः श (अ) शेमुचादीनाम् इति नुम् (न) तस्य अनुस्वारे परसवर्णे ञकारे सिञ्चति सिञ्चते क्षेत्रं जलेन। स उद्यानं सिषेच, अहं तु लघुवाटिकां सिषेच। सभी किसान अपना खेत सींचे, सिषेचिथ। सिषिचे सिषिचाते सिषिचिरे सिषिचिषे, सिषिचाथे सिषिचिध्वे, बलादिप्रत्यये परे नित्यमिट्, कल नहरके जलसे सींचूँगा, सेच्ता चकारस्य कुत्वे। सेक्ता सेक्तारौ सेक्तारः, ऋतुकाले इन्द्रः क्षेत्राणि सेक्ष्यति, चकारस्य कुत्वे, षत्वे, क्षत्वे। सेक्ष्यते। विपसया व्याकुलो भवान् आत्मानं सिञ्चतु, सिञ्चताम्। यथा—वरिणा वनस्पति ह्यः असिञ्चत्। असिञ्चत। अद्यभिन्नभूतकालिक सिञ्चनक्रिया। सिञ्चेत्। यदि आप दस बीघे खेत सींचे तो जीवन लहलहा उठे। सिच्यात्-आप अवश्य सींचे। सिक्षीष्ट। असिचत्, क्षरणार्थक सिच् धातोः भूतकालेसमाप्तसिञ्चन क्रिया अर्थे

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

६५५ लिपि-सिचि ह्वश्च ३।१।५३। एभ्यश्च्लेरङ् स्यात्। असिचत्।
६ आत्मनेपदेष्वन्यतरस्याम् ३।१।५४। लिपि-सिचि-ह्वः परस्य च्लेरङ् वा तङि। असिचत, असिक्त। लिप उपदेहे।१०। उपदेहो=वृद्धिः। लिम्पति, लिम्पते। लेप्ता। अलिपत्, अलिपत, अलिप्त। इति- उभयपदिनः। कृती छेदने।११। कृन्तति। चकर्त। कर्तिता। कर्तिष्यति, कर्त्स्यति। अकर्तीत्। खिद परिघाते।१२। खिन्दति। चिखेद। खेत्ता। पिश अवयवे।१३। पिंशति। पेशिता। ओव्रश्चू छेदने।१४। वृश्चति।

---

कर्तरि लुङ् तिप् इकार लोपे, अट् आगम, च्लिस्थाने, सिच्, प्राप्ते ततः। (६५५) एभ्यः—लीपनार्थक लिप्, सिच् तथा स्पर्धार्थक ह्वेञ्, धातुओंसे परे च्लिको अङ् आदेश हो इति अङिरूपम्। असिच'ताम्। असिचः। आत्मनेपदेतु। लिप् सिच् ह्वेञ् धातुसे परे च्लि को अङ् विकल्पसे हो, तङि=आत्मनेपदेपरे। असिचत, असिचाताम् असिन्चत। असिचथाः, यदा न अङ् तदा च्लिस्थाने सिच् झलोझलि सूत्रेण सलोपे कुत्वे, असिक्त, असिक्षाताम् असिक्षत। अशिक्था अशिक्षाथाम् असिक्ध्वम्। यदा पुष्पवाटिकां असेक्ष्यत तदादेवत्वम् ऐधिष्यत्।

(१०) स्वरित (अकार) इत् अनुदात्तोपदेश, अनिट्, सकर्मक, लिप् धातुका उपदेह=वृद्धि (लीपने, पोतनेसे स्वच्छता की सम्वृद्धि ही वृद्धि है) तदनुकूलव्यापारो धात्वर्थः, शेमुचादीनाम् नुम्। तिस्रः गृहान् लिम्पन्ति, बालिकायें मन्दिरको पोत रही हैं, यथा—दीपावल्यां सर्वे गृहाणि लिलिपुः लिलिपिरे। अहन्तु श्वः लेप्तास्मि। सभी त्यौहारोंमें लेप्स्यन्ति, अलिम्पत्। लिम्पेत् लिप्सीष्ट। लिप्यात्। ग्रामवासिनः, स्वभवनानि अलिपन्। अलिप्त अलिप्साताम् अलिप्सत। (११) इकार इत् कृत् धातुका छेदन, कर्तन काटना फल जनकक्रिया अर्थ है। जहाँ श विकरण होगा, वहाँ शे मुचादीनां से नुम् होगा। छेदनकी क्रिया वर्तमाने कर्तरि लट् कृन्तति शाकम्। सखि ! भ्राता वास्तुकं चकर्त, नप्ता नासिकां कर्तिता। नापितः, केशं कर्तिष्यति। कर्त्स्यति, सेअसिचिकृतचृत इट् विकल्पः, कृन्ततु, अकृन्तत् कृन्तेत् कृत्यात् अकर्तीत्।

(१२) खिद्धातुका दैन्यं, दीन, खिन्न, दुःखी होना फलजनक् क्रिया अर्थः। मुचादीनांमें परिगणितः अतएव नुम् खिन्दति शपरे। कौशल्या बनवासं श्रुत्वा चिखेद, श्वः कैकेयी खेत्ता,। सर्वे खेत्स्यन्ति। यदि बड़ोंकी बात नहीं माना, तदा भवान् खिन्दतु। यथा – बाली अखिन्दत् यदि खिन्नता प्रगट करे तो अपराध क्षमा हो। खिद्यात् अखेदीत् अखेदिष्यत् (१३) पिश्धातुका अवयव पृथक्करण, पीसना, चूर्णजनकव्यापार अर्थ.। चैत्रः पेषणयन्त्रे गोधूमं पिंशति यथा—यवं पिपेश पेशिता, सर्वं पेशिष्यति। त्वं नीवारं पिंशतु। यथा अहम् अपिंशम्। यथा–अन्नं

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वव्रश्च। वव्रश्चिथ, वव्रष्ठ। व्रश्चिता, व्रष्टा। व्रश्चिष्यति, व्रक्ष्यति। वृश्च्यात्। अव्रश्चीत, अव्राक्षीत्। व्यच व्याजीकरणे। १५। विचति। विव्याच। विविचतुः। व्यचिता। व्यचिष्यति। विच्यात्। अव्याचीत्,

---

पिशेत्, तदा रोटिकां खादेद्। पिश्यात् अपेशीत् अपेशिष्यत्। (१४) ओ उ इत्। ब्रश्च् धातुका छेदन आरासे चीरना या वङ्सि छेद करना, वह छेदन क्रियाके वर्तमानकालमें कर्तरि लट्, तिप्, तुदादिभ्यः सः। सार्वध तुकं तस्य ङित्-भावः ग्रहिज्यावयि आदिसूत्रेण सम्प्रसारणे पूर्वरूपे। वृश्चति तक्षा काष्ठम्) परोक्षे समाप्त छेदन क्रिया-काले कर्तरि लिट् तिप् णल् द्वित्वे अभ्यासस्य लिट्परे सम्प्रसारणे पूर्व रुपे वृव्रश्च अ। अभ्यास-ऋकारस्य उरत् — अर् हलादिशेषे वव्रश्च वव्रश्चतुः वव्रश्चिथ। स्वरतिसूति इति इट् विकल्पः। यदा न इट् तदा वव्रश्च थ इति दशायां सकारस्य संयोगदिलोपे, चकारस्य, व्रस्जभ्रस्ज इति षत्वे षकारस्य ष्टुत्वे वव्रष्ठ ऊदित्को इट् विकल्प बाधकर क्रादि नियमसे नित्य इट् व 'म' परे हो परश्व: वृक्षं व्रश्चिता ऊदित् इट् विकल्पः। पक्षे। व्रष्टा। मम पुरुषाः जंगले सरलान् वृक्षान् व्रश्चिष्यन्ति। इट् अभावे व्रक्ष्यन्ति। वृश्चतु। अवृश्चत्। वृश्चेत्। वृश्च्यात्। छेदन क्रियाके समाप्तिकालमें लुङ् अव्रश्च इस् इत्। इटः ईटि सलोपे दीर्घे, अव्रश्चीत् अव्रश्चिष्टाम् अव्रश्चिषुः अव्रश्चीः। उदितोवा, ईतीट् अभावे हलन्तलक्षणाद्वृद्धिः व्रश्चेति चकारस्य षत्वे षढोः क आदेशे सिच् ककारस्य षत्वे क्षत्वे अव्राक्षीत् अव्राष्टाम् अव्राक्षुः अव्राक्षीः।

(१५) व्यच् धातुका व्याजीकरण छद्मकरणम् — छलाना, ठगना, या धोखादेना, फलजनक क्रिया अर्थः। छलजनकव्यापारवाचक व्यच् धातोः क्रिया वर्तमाने लट् श = अ तिप् शके अपित् सार्वधातुक होनेसे ङित् परे ग्रहिज्यावयि सूत्रेण य स्थाने इ सम्प्रसारणे, सम्प्रसारणाच्च इति अकारस्य पूर्वरूपे। विचति। मायावी महिलाको ठगता है। व्याजीकरण छलनेकी क्रिया परोक्षकालमें लिट् तिप्णल् द्वित्वादिः व्यव्यच् अ। लिटि अभ्यासस्योभयेषाम् इति अभ्यास्य सम्प्रसारणे विव्याच विविचतुः अत्र प्रथमस्य सम्प्रसारं भवति पश्चात् द्वित्वम्। एवं सवत्रं कित् लिटि परे बोध्यम्। विविचुः। विव्यचिथ विव्याच। विव्यच। ग्रहोंने हमलोगोंको धोखा दिया, श्वः भवन्तं व्यचिता। कामः सर्वं व्यचिष्यति। भवान् शत्रूम् विचतु। यथा—कृष्णः दुर्योधनान् अविचत्। यदि स विचेत् तदा सुखं भूयात्। छद्मकरण अर्थविषयक आशीर्लिङ् विच्यात्। किदाशिषि इति यासुट् कित् भवति। तस्य फलं सम्प्रसारणम्। व्याजीकरण क्रिया समाप्ति रूप भूतकालमें लुङ्। अव्यच् इस इत् इति दशायाम् इटई-टिसकार लोपे, दीर्घे, वदव्रजहलन्तस्याच इति प्राप्ता

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अव्यचीत् । व्यचेः कुटादित्वमनसि इति तु नेह प्रवर्तते, अनस्सीति पर्युदासेन कृन्मात्रविषयत्वात् । उछि उञ्छे । १६ । उच्छति । उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' इति यादवः । ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु । १७ । ऋच्छति । ( ६१४ ) ऋच्छत्यृतामिति गुणः । द्विहल् ग्रहणस्याऽनेक-हलुपलक्षणत्वान्नुट् । आनर्च्छ । आनर्च्छतुः । ऋच्छिता । उज्झ उत्सर्गे । १८ । उज्झति । लुभ विमोहने । १९ । लुभति ।

---

वृद्धिः, नेटि सूत्रेण निषिध्यते । अतः अतोहलादेर्लघो इति वृद्धिविकल्पः शकुनीमे; पाण्डवोंको धोखा दिया । व्यचेः=व्यच् धातु कुटादि गणमें पढ़ा है । परन्तु असभिन्न प्रत्यय होनेपर जहाँ अस् भिन्न सिजादि प्रत्यय हो, वहाँ गाङ् कुटादिभ्यः नहीं लगता क्योंकि 'अनसि' शब्दमें नञ् पार्युदासार्थक है, अस् सदृश कृत्प्रत्यय ही लिया जायेगा । कुटादिगणीय नहीं ! अतः ङित् न होनेसे वृद्धि निषेध नहीं हुआ । ( १६ ) इइ-त् उच्छधातु उञ्छवृत्तिसे निर्वाह करना अर्थ है, खेतमें गिरा हुआ कणिशस्य मञ्जरी, अन्य 'बालिके, टुकड़े आदि इकट्टा करना उञ्छवृत्ति है । इदितोनुम् । क्षेत्रात् कणम्=अन्नं शस्यखण्डं वा उञ्छति । कणशः आदान=कण कण् का लेना उच्छ है । कणिशाद्यर्जनं=सस्य मञ्जरी का संग्रह शिल है. ऐसा यादव कोषसे । परोक्ष भूतकाले उञ्छवृत्ति क्रिया रहते उञ्छाञ्चकार, उञ्छिता, उञ्छतु, उञ्छेत्, उछयात् औञ्छीत् औञ्छिष्यत् ।

( १७ ) ऋच्छ धातुका गति=गमन ज्ञान, इन्द्रियप्रलय, स्वापः=इन्द्रियोंका निश्चेष्ट होना । मूर्तिभावः, काठिन्यं निष्कृय होना, फल जनक क्रिया अर्थः । सः इन्द्रियम् ऋच्छति । व्यायामशालां गच्छति, मूर्तिभावं चित्ररूपं प्राप्नोति । इन्द्रिय प्रलय या निष्कृय भावकी क्रिया, परोक्ष कालमें समाप्त हो तब आनर्च्छ=ऋच्छ+अ ऋच्छत्यृतां सूत्रेग ऋकारस्य स्थाने अर गुणे अर्च्छ अ । तस्मान्नुट्, द्विहलः सूत्रमें द्विहल् शब्दका ग्रहण अनेक हल्का उपलक्षण ( बोधक प्रकाशक ) है । न एक हल् इति अनेक हल् । एकसे अधिक हल् दो या तीन जैसे—र् च् छ्के ग्रहणसे नुट् आगम् हो गया, द्वित्वदि कार्यं पूर्वं भवति, अत आदेः दीर्घः आनर्च्छ । यद्यपि यह धातु इजादि गुरुमान् भी है तथापि आम नहीं हुआ, अनृच्छः इति निषेधात् । वह साधु, इन्द्रियोंको लीन कर लिया । नये-नये, परसों, निष्कृय बनेगें । ब्रह्मचारी स्त्रीको देखकर मूर्तिभाव होगा ।, ऋच्छतु । आप भी इन्द्रियोंका निग्रह करें । जैसे—भीष्मने किया, आर्च्छत् । यदि जिह्वाम् ऋच्छेत् तदा मनः सदा ऋच्छ्यात् । सन्यासिनः=आत्मानम् आर्च्छीत् । आर्च्छिष्टाम् आर्च्छिषुः ( १८ ) उज्झधातुका उत्सर्गं त्याग, छोड़ना अर्थ है । कृषकः घासादिकान् उज्झतु । सन्तः मोहादीन् उज्झाञ्चकार । उज्झिता=दो दिन बाद धानकी निराई करेगा । उज्झिष्यति । रघु शत्रून् औज्झीत् ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

७ तीप-सह लुभ-रुष-रिषः ७ । २ । ४८ । इच्छत्यादेः परस्य तादेरार्धधातुकस्येड् वा स्यात् । लोभिता, लोब्धा । लोभिष्यति । तृप तृम्फ तृप्तौ । १२ । तृपति ततर्प । तर्पिता । अतर्पीत् । तृम्फति । शे तृम्फादीनां नुम् वाच्यः ) आदिशब्दः प्रकारे । तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । ततृम्फ । तृप्यात् । मृड पृड सुखने । २३ । मृडति । पृडति । शुन गतौ । २४ । शुनति । इषु इच्छायाम् ।२५। इच्छति । एषिता, एष्टा । एषिष्यति ।

---

( १९ ) लुभ्धातुका विमोहन, विशेषरूपसे मोहित होना । मोहगमन होना । अर्थः । यह विमोहन आशक्ति क्रियाके वर्तमान कालमें लुभति, लुलोभ । ( ७ ) तीषसहलुभरुष रिषः ति=तकारादि आर्धधातुको इट् आगम हो तीष् सह लुभ रुष रिष् धातुओंसे परे । लालचमें मोहित होने अर्थवाचक लुभ् धातोः भविष्यकालिक लोभन क्रिया अर्थे लुट् आदिकार्ये । लुभ्ता तादि आर्धधातुक परे तीषसः आदि सूत्रेण इट् गुणे लोभिता । यदा न इट् तदा झषस्तथोर्धोऽधः इति त स्थाने 'ध' पकारस्य जश्त्वं बकारः । लोभिष्यति लोप्स्यति लुभतु अलुभत् अलोभीत् ।

( २०।२१ ) तृप, तृम्फ दोनों धातु का तृप्ति के अनुकूलक्रिया अर्थः । स तृपति, पितृन् ततर्प । श्वः ऋषीन् तर्पिता । तृपतु, अतृपत्, अतर्पीत् । तृम्फति भक्तः कथां श्रुत्वा । ( वा० ) तृम्फादीनां=तृम्फके सदृश धातुओं को नुम् आगम हो । **आदि शब्दः**—तृम्फादीनां शब्द में आदि शब्द **प्रकारे**=सदृश अर्थ का वाचक है । **अत्र**=इस प्रकरण में जो धातु **नकारेण अनुशक्ताः**=नकार से जुड़े हो, उन्हें भी तुम्फादि समझना चाहिए । तृम्फ धातु से 'श' विकरणपरे अनिदितां हल, उपधायाः न-के लोप से तृम्फादीनांमिति नुम् । नकारस्य अनुस्वारपरसवर्णौ । ततृम्फ । भोजन करके तृप्त हुआ । तृम्फिता । तृम्फतु अतृम्फत् । तृम्फेत्, तृप्यात् । अत्र आशीर्लिङि यासुट् कित् अस्ति । तस्य फलम् 'अनिदितां हल्' इति नकारलोपः ( तृम्फका म असिद्ध होकर 'न' होता है ) अतृम्फीत् ।

( २२।२३ ) मृड पृड धातु, सुखी होने या देने अर्थ में है । शिवः भक्तान्मृडति यथा—नारदः दक्षसुतान् **ममर्ड** अमर्डीत् । ( २४ ) शुनधातुका गति ( कुत्तेकी चालके ) अनुकूल क्रिया अर्थः । शुनति=श्वेव गच्छति, शुशोन शोनिता, शोनिष्यति, शुनतु, अशुनत्, शुनेत् अशोनीत् अशोनिष्यत् । ( २५ ) इष धातु का इच्छा के अनुकूल व्यापार चेष्टा अर्थ. । इषधातो। इच्छाजनकक्रिया वर्तमाने लट् ति, श=अ, इषुगमियमाञ्छः इतिषस्थाने छ, तुक् तकारस्य श्चुत्वे । इच्छति । इयेष । ईषतुः । एषिता एष्टा तीषसहलुभ्रुष्रिषः इति इट् विकल्पः । इच्छतु, ऐच्छत् । इच्छेत् इष्यात् । ऐषीत् इष् धातोः भूतकाले अर्थे लुङः, आट्, वृद्धिः, लुङः, स्थाने तिप् च्लि-सिच्; ( इट, ईटि ) सलोप इकारलोपे । ऐषिष्टाम् ऐषिषु ऐषीः ऐषिष्टम्

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एष्यात् । ऐषीत् । कुट कौटिल्ये । २६ । ( ५४७ ) गाङ्कुटादिति ङित्वम् । चुकुटिथ चुकोट, चुकुट । कुटिता । पुट संश्लेषणे । २७ । पुटति । स्फुट विकसने । २८ । स्फुटति । स्फुटिता । स्फुर स्फुल संचलने । ३० । स्फुरति । स्फुलति ।

८ स्फुरति-स्फुलत्योर्निर्निविभ्यः ८ । ३ । ७६ । षत्वं वा स्यात् । निष्फुरति, निष्फुलति । णू स्तवने । ३१ । परिणूतगुणोदयः । नुवति ।

---

ऐषिष्ट । ऐषिषम् ऐषिष्व ऐषिष्म । ( २६ )कुट् धातुका कौटिल्य कुटिलता करना, कूट करना, पिङ्गलबोलना अर्थः । कुटति । शिवगण नारद की कूट करते हैं । कुटतः । चुकोट । कूट करनेकी परोक्षकालिक समाप्त क्रिया करटक दमनकौ चुकुटतुः । यथा—त्वं भातॄन् चुकुटिथ । अत्र द्वित्वे अभ्यासादिकार्ये, इट् आगमे 'गाङ् कुटादिभ्यः इति सूत्रेण थल ङित् भवति । क्ङिति च सूत्रसे गुणका निषेध । ङित्काफल चुकुटथुः । चुकोट चुकुट चुकुटिव चुकुटिम । कुटिता कुटिष्यति । कुटतु, अकुटत्, कुटयात् अकुटीत् अकुटिष्यत् । ( २७ ) पुट् धातुका संश्लेषण ( पदार्थद्वयसम्मेलनम् ) । दो वस्तुओंका एकमें मिलाना, जोड़ना, व्यापारः । पयसि पानीयं पूटति पुट देना । यथा—आभीरः पुपोट । पुट भेदन ( जोड़ को तोड़ना ) पुपोट । विखरे हुए लोगों को मिला दिया । पुटिता अत्र इट् कृते ( गाङ्कुटादिभ्यः ) इति ङित् तस्य फलं गुण निषेधः । पुटिता पुटिष्यति इत्यादि । ( २८ ) स्फुट धातु का विकसित् होना, खिलना, आदि अर्थः । सेट् सकर्मकः कुटादिगणीयः । स्फुटति सूर्य को देखकर कमल खिलता है । पुस्फोट अस्फुटीत् ।

( २९:३० ) स्फुर् स्फुल् धातु का संचलन क्रिया, खिलना, फड़फड़ाना, उभरना, फलानुकूलव्यापारो अर्थः । स्फुरति कुक्कुटाण्डम् । स्फुलति गर्भिणी । ( ८ ) निर- नि और वि उपसर्गसे परे सेट् धातुसकारस्य षत्वे शर्परे खरि 'वा' विसर्गलोपो वक्तव्यः ) इति विसर्गलोपे पक्षे वाशरि इति विसर्गस्य विसर्गे, पक्षे षत्वे निःष्फुरति निष्फुरति । पुस्फोर । स्फुरिता, स्फुरतु, अस्फुरत्, स्फुरेत् स्फुर्यात् अस्फुरीत् । ( ३१ ) णू=नू धातु का स्तवन=स्तुति करना । यह दीर्घ उकारान्त है । प्रमाण देते हैं कि परिणोतः=सर्वत्र प्रशंसितः गुणानाम् उदयो यस्य । यहाँ णूत् दीर्घान्त है । उदाहरण में उवङ् होने से ह्रस्व ज्ञान पड़ता है । नुवति । स्तवनार्थक नूधातु से प्रचलितस्तुति क्रिया के वर्तमान रहते लट्, श=अ अपित्सार्वधातुकं ङित् । तस्य फलं गुणनिषेधः । अचि श्नुधातुर्भ्रुवाम इति ऊकारस्य उवङ् नुवति =भगवान् की स्तुति करता है । नुनाव=णल् । णितपरे, अचोञ्णिति वृद्धिः । आवादेशे शिवं नुनाव । नुविता । अत्रापि कुटादित्वात् ङित् गुणनिषेधे उवङ्

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नुनाव। नुविता। टुमस्जो शुद्धौ। ३२। मज्जति। ममज्ज। ( ६३६ ) मस्जि-नशोरिति नुम्। ( मज्जेरन्त्यात् पूर्वो नुमवाच्यः ) संयोगादिलोपः। ममङ्क्थ, ममज्जिथ। मङ्क्ता। मङ्क्ष्यति। अमाङ्क्षीत्। अमाङ्क्ताम्। अमाङ्क्षुः। रुजो भङ्गे। ३३। रुजति रोक्ता। रोक्ष्यति। औक्षीत्। भुजो कौटिल्ये। ३४। रुजिवत्। विश प्रवेशने। ३५। विशति। मृश आमर्शने।

---

आदेशे नुविष्यति। नुवतु। अनुवत्। नुवेत् नूयात्। अनौवीत् अनुविष्यत् ( ३२ ) टुओइत् मस्जधातु का शुद्धि अर्थः। यह शुद्धि 'माँजने' से या नहाने से हो, अनिट् अकर्मकः। टुइत्का फल द्वितोऽथुच्। ओदितकाफल निष्ठासंज्ञक तकारस्य नकारे। नकारे।शुद्ध होने की क्रिया वर्तमान रहते लट् तिप् श, मस्ज् अति। स स्थाने श्चुत्वेन श. झ्रांजत्र्भ्शि इति जकारे मज्जति। माजने या धोने की क्रिया परोक्ष-काल में समाप्त हो। तब मस्ज्मस्ज् ममस्ज् श्चुत्वे जश्त्वे। ममज्ज, ममज्जतुः ममज्जुः। ममस्ज् थ भारद्वाजमते इट्, श्चुत्वे, जशत्वे। ममज्जिथ। इटोअभावे मश्जि'=मश्ज् और नश्, मस्जिनशोर्झलि सूत्रेण नुम् 'मिदचोऽन्त्यातपरः' इति अन्त्य अच् परे प्राप्नोति, उसे बाधकर वार्तिक से मस्ज धातु के अन्त्यवर्ण से पूर्व नुम् हुआ। मसन्ज्थ-सकारस्य संयोगादिलोपे, द्वित्वादिकार्यं सति। ममन्ज् थ, जकारस्य कुत्वे चर्त्वे ककारे, नकारस्य अनुस्वारे परसवर्णे ङ' ममङ्थ। ममज्जथुः। परश्वः संक्रान्तिकाले मङ्ता। यहाँ भी झलादि प्रत्यय 'ता' परे नुम्, सलोपे, कुत्वे, चर्त्वे अनुस्वारपरसवर्णे। मङ्क्ष्यति मस्ज स्यति 'मश्जि नशोर्झलि' इति नुम् अन्त्या-त्पूर्वी वाच्यः। सलोपे, जकारस्य कुत्वे चर्त्वे षत्वे क्षत्वे। स्नानस्य क्रिया समाप्ति-काले लुङ् अमस्ज सइत्। नुम् सलोपे वृद्धिः। कुत्व चर्त्वं षत्व। अनुस्वारे पर-सवर्णेषु अमाङ्क्षीत् अमाङ्क्तां ( झलोझलि सिचो लोपः ) अमाङ्क्षुः। आङ्क्षीः अमाङ्क्तम् अमाङ्क्त। अमाङ्क्षम् अमाङ्क्ष्व अमाङ्क्ष्म।

(३३) रुज् धातु का भङ्ग, विकल होना, शरीरतोड़ना, फलजनक क्रिया अर्थः। अनिट्, ओदित्, अकर्मक, ओकार इद् का फल निष्ठातको न होना। रुजति, शरीरं ज्वरवेगेन, विषादिकया ( व्यवाय ) दुखं: सहते। रुग्ण, रोगी, रोग, शब्द इसी धातु से बने हैं। स श्वः रोक्ता। अद्यभिन्नभविष्यकालिक रुज् शरीर टूटने की क्रिया। रुज् ता अत्र लघूपधगुणे अकारस्य कुत्वे चर्त्वे। रोक्ष्यति सस्य षकारे। रुजतु, अरुजत्, रुजेत् रुज्यात्, अरौक्षीत्। हलन्तलक्षणा वृद्धिः, अरौक्ताम् अरौक्षुः अरौक्षीः।

(३४) ओइत् भुज् धातु का कौटिल्य टेढ़चाल, धोखा, छल, भोगना फलानु-कूल क्रिया अर्थः। इसका रूप रुज्की तरह।

(३५) विश्धातु का प्रवेशन, घुसना प्रवेश, फलजनक व्यापारो अर्थः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

३६। आमर्शनं = स्पर्शः। ( ६५३ ) अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्। अम्राक्षीत्, अमार्क्षीत्। अमृक्षत्। षद्लृ विशरण गत्यवसादनेषु। ३७। सीदतीत्यादि। शद्लृ शातने। ३८। ९ शदेश्शितः १। ३। ६०। शिद्-

विशति सूची। गृहं विवेश। विलम्बेन कक्षायां वेक्ष्यति। त्वं गुहायां विश विशतु। यथामुचुकुन्दो, अविशत्। विशेत्। विश्यात्। अविक्षत्। अवेक्ष्यत्। उपसर्गबलसे इसके भी अनेक अर्थ हैं। अभिनिविशते सन्मार्गम् ( अच्छे रास्ते पर चलना है ) निविशते यदि शूकशिखापदे। टूंण् चरणमें चुभता है। उपविशतु आर्य। गृहं प्रविशति।

(३६) मृश धातु का आमर्शनं स्पर्शः। अर्थात् सहलाना, हाँथ फेरना, प्यार करना, आदि। आमृशति शरीरं, मुखं आमृष्टा जागर्ति। माता बालकं मृशति। यथा—पिता पुत्रं ममर्श। शिक्षकः मर्ष्टा। मक्ष्यति मृशतु अमृशत्। मृशेत्, मृश्याद। अम्राक्षीत् ( अमृश् स्ईत् ) अनुदात्तस्य ऋदुपधस्यधातोः ऋकारस्य अम् ( अ ) आगमे। ऋकारस्य यण्। हलन्तस्याचः वृद्धिः शकारस्य जश्त्वेन जकारे, कुत्वे चर्त्वे षत्वे क्षत्वे। अम्राष्टाम् अम्राक्षुः। अम्राक्षीः। अम् अभावपक्षे ऋकारस्य हलन्तत्वात् वृद्धिः। अमार्क्षीत् अमार्ष्टाम् अमार्क्षुः। इति सिच पक्षे रूपद्वयम्। स्पृश् मृश कृष् आदिना यदा न सिच् तदा च्लि स्थाने क्सः=स तस्य कित्वात् वृद्धिनिषेधः। शेषं पूर्ववत्। अमृक्षत् अमृक्षन् अमृक्षताम् अमृक्षन्। ( ३७ ) लृकार इत् 'सद' धातु का विशरण, विखरना, अवयवोंका अलग होना, फटना, गति = गमन ( अवसादनं ) दुःखी=पीडित होना, इन फलों का जनक क्रिया धात्वर्थः। अनिट् अकर्मः। लृदित् का फल च्लिको अङ् होना। विखरना, गमन, दुखी होना, क्रिया के वर्तमानकालमें लट् तिप् श। सद अति। सर्वत्र सार्वधातुकलकारस्थले पाघ्रा इत्यादि सूत्रेण सद् स्थाने सीद् आदेशे शप् आदि कार्ये ( मौक्तिकं ) सीदति ( निर्धन दुखी होता है)। अहं मनोबलेन सीदामि। उपसर्ग बल से अनेक अर्थ अवसीदति — खिन्नो भवति। आसीदति=समीपं गच्छति। प्रसीदति = प्रसन्नो भवति। प्रत्या-सीदति = निषीदति, उपविशति=बैठता है। विषीदति = विषादं ग्लानि करोति। उक्तक्रिया परोक्षकाल में समाप्त हो तब लिट् सद् सद् ससद् ससाद, सेदतुः सेदुः। एत्वे अभ्यासलोपे सत्ता ( कल खेत में धान छींटा जायेगा )। सत्स्यति = दुःखी भविष्यति। आज्ञा विधि प्रेरणा, अर्थ में लोट् सीदतु= तुम दुःखी रहो। असीदत् = मेरे कपड़े बिखर गये हैं। सीदेत् सद्यात् तुम्हारी बुद्धि नष्ट हो जाय। असदत्, च्लि —अङ् असत्स्यत् (३८) शद धातुका शातनम् = अवयवानां विभागः = अलग अलग होना फलजनकक्रिया अर्थः। अनिट् अकर्मकः (९) शिद्भाविनो = जब श प्रत्यय होने से शित् होना हो अस्मात्=शद् धातु से तङ = आत्मनेपद और

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

भाविनोऽस्मात्तङानौ स्तः। शीयते। शीयताम्। अशीयत। शीयत। शशाद। शत्ता। शत्स्यति। अशदत्। अशत्स्यत्। कॄ विक्षेपे। ३९।

६६० ॠत इद्धातोः ७।१।१००। ॠदन्तस्य धातोरङ्गस्य इत्स्यात्। किरति। चकार। चकरतुः। चकरुः। करीता, करिता। कीर्यात्। १ किरतौ लवने ६।१।१४०। उपात् किरतेः सुट् छेदने। उपस्किरति (अडभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम्)। उपास्किरत्। उपचस्कार। २ हिंसायां प्रतेश्च ६।१।१४१। उपात् प्रतेश्च किरतेः सुट् स्यात् हिंसायाम्। उपस्किरति। प्रतिस्किरति। गॄ निगरणे। ४०। ३ अचि

---

शान = शानच् कानच आदि प्रत्यय हों। मुनेर्जटा शीयते। अवयवविभाग की क्रिया वर्तमान रहते शद धातोः लट्। शदेः शितः इति सूत्रेण आत्मनेपदे 'त' टेः एत्वे शद् स्थाने शीय आदेशे। सेना शशाद शेदतुः शत्ता शत्स्यति। तव पापं शीयताम्। यथा महात्मनाम् अशीयत भवतां शीयेत्। अशदत। अशत्स्यति। (३९) कॄधातुका विच्छेप बिखेरना, छींटना, जनक व्यापार अर्थः। व्याधः अन्नं किरति। क्रियायाः वर्तमाने लट् ति श, कॄअति।

(६६०) ॠदन्तधातुके अङ्गको इत् आदेश हो वह अलोन्त्यस्यसे ॠके स्थान में इ 'उरणरपर' से इर् आदेश हो इति सूत्रेण ॠस्थाने इर् आदेशे किरति। व्याध कदा अन्नं। चकार। कॄ लिट्, तिप्, णल्, ॠच्छत्यॄतां सूत्रेण गुणे। ततो द्वित्वे, अभ्यासादिकार्ये, अतउपधायाः वृद्धिः। अतुस् प्रत्ययपरेऽपि। कृषकौ क्षेत्रे धान्यं चकरतुः। सर्वे चकरुः। श्वः गोधूमं करिता। कॄ इट् ता (ॠच्छति, ॠतां गुण) (अर्) वृतोवा इति इटः दीर्घविकल्पे। पक्षे करीता, करिष्यति, अकिरत्। किरतु। कीर्यात् ॠत् इत् धातोः इति ॠस्थाने इर् आदेशे। हलि चेतिदीर्घे। विक्षेप = बिखेरने की क्रिया समाप्त हो, तब अकार्षीत्। अकारिष्टाम् अकारिषुः। अत्र सिच् परे इगन्ताङ्गस्य वृद्धिः।

(१) उपात् = उपशब्दसे परे किरतौ = कॄधातुको सुट् = स आगम हो, लवने, छेदने, काटने, अर्थमें। उपस्किरति हरिणः जालम्। अत्र उक्तसूत्रेण सुट् ककारस्य आदौ भवति। (वा०) अड् = अट् तथा अभ्यास के व्यवाये = व्यवधानमें भी ककारके पूर्वमें सुट् आगम कहना चाहिए। उप + अकिरत् इति दशायाम् उपसे अट्के व्यवधानमें कके पूर्वमें सुट् हुआ। उपास्किरत् = छेदन, कार्यक्रिया, भवान् कदा काष्ठम् उपचस्कार। (२) प्रतेश्च—उप और प्रतिसे परे कॄ धातुको सुट् आगम हो हिंसा अर्थ होनेपर, उपस्किरति। कन्या कीटं प्रतिस्किरति। व्याधः मृगम्। हिंसा अर्थबोधक सुट् प्रत्यय समझें। (४०) गॄधातुका निगरणं = मुखे

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**विभाषा ८।२।२१। गिरते रेफस्य लोऽजादौ प्रत्यये वा। गिरति, गिलति। जगार, जगाल। जगरिथ, जगलिथ। गरिता, गरीता। गलिता। गलीता। प्रच्छ ज्ञीप्सायाम्। ४१। (६३४) ग्रहिज्या० इति सम्प्रसारणम्। पृच्छति। पप्रच्छ। पप्रच्छतुः। पप्रच्छुः। प्रष्टा। प्रक्ष्यति। अप्राक्षीत्। मृङ् प्राणत्यागे। ४२।**

---

ग्रासप्रच्छेपः ( निगलना ) सेट् सकर्मक, लीलनेके अनकूलक्रिया। जहाँ निगरण ( लीलना ) क्रिया वर्तमान रहे लट् ति, श = अ। गृ अति ॠत्इद्धातोः इतिसूत्रेण ॠस्थाने इर् आदेशे। **गिरति**। ततः।

( ३ ) गृधातुके रेफको ल हो **अचि**=अजादि-प्रत्ययपरे **विभाषा** = विकल्पसे इति सूत्रेण र् स्थाने लत्वे। पक्षे **गिलति**, गिलहरी अन्न खाती है। शृगाल. मेषवत्सं **जगाल**। अचिविभाषा इति र स्थाने लत्वे। पक्षे **जगार**। जगलिथ। इट्परे अजादिप्रत्यय मानकर र को ल हुआ। व्याघ्रः वत्सान् गलीता, गरीता पक्षे लत्वम्। इटो दीर्घविकल्पः बालिका गोलिकां गलीष्यति, गरीष्यति। पक्षे लत्वंदीर्घश्च। भवान् औषधं **गिलतु** गिरतु। यथा—अन्ये रोगिणः अगिलन् अगिरन्। यदि जरा फलं गिलेत् गिरेत् कल्याणं भवेत्। त्वं रसगोलिकां सदा गीर्याः। निगरणक्रिया-समाप्त होनेपर अगालीत् अगारीत्। अगालिष्यत् अगारिष्यत्। निगरति, निजगाल **संगिरते** = प्रतिज्ञां करोति। ( ४१ ) प्रच्छधातुका ज्ञीप्सा, जिज्ञासा, पूछना प्रश्न जनक क्रिया अर्थः। अनिट् सकर्मकः। बालकं पितरं पृच्छति। प्रश्नफलका आश्रय बालक तदनुकूलक्रिया चैत्रमें जिज्ञासा की वर्तमानकालदशामें लट्, श, प्रच्छ **अति**। ग्रहिज्यावयिव्यधि आदि सूत्रेण र स्थाने ॠ सम्प्रसारणे, सम्प्रसारणाच्च इति अकारस्य पूर्वरूपे **पृच्छति** शिष्यः गुरुं धर्मं **प्रपच्छ**। भक्तौ शिवं पप्रच्छतुः। सर्वे आत्मकल्याणं प्रपच्छुः। श्वः प्रश्नं प्रष्टा। अद्यभिन्नभविष्यकालिकक्रिया अर्थे, लुट् प्रच्छ+ता व्रश्च भ्रस्ज आदि सूत्रेण छ स्थाने षकृते ष्टुत्वेन तस्थाने टकारे रूपम्। त्वं कदा प्रश्नं **प्रक्ष्यसि**। प्रच्छ स्यति। छस्थाने षकृते तस्य षढो कः सि इति कः। स्य सकारस्य षत्वे क्षत्वे रूपम्। भवान् भाग्यं **पृच्छतु** यथा—वृद्धा **अपृच्छत्**। यदि कुशलं पृच्छेत् आप जिज्ञासा शान्तिके लिए सदा पूछे। पृच्छयात् = प्रश्नकी भूतकालिकक्रिया **अप्राक्षीत्**। अप्रच्छस इत् इति दशायां वद् व्रज हलन्तस्याचः इति वृद्धिः छकारस्य षत्वे। क आदेशे, सिच् सकारस्य षत्वे क्षत्वे रूपम्। **अप्राष्टाम्**। अत्र झलोझलि इति सिचः सकारस्य लोपे। **अप्राक्षुः** अप्राक्षीः अप्राष्टम् अप्राष्ट। अप्राक्षम् अप्राक्ष्व अप्राक्ष्म। ( ४२ ) मृधातुका प्राणत्याग मृत्यु होना, अर्थः। अनिट् अकर्मकः। प्राणत्याग-जनक—क्रियावाचक मृधातोः प्रचलितमरणक्रियाकाले वर्तमाने लट् श मृ अ लट्। ततः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

४ म्रियतेर्लुङ्-लिङोश्च १।३।६१। लुङ्-लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र। रिङ्। इयङ्। म्रियते। ममार। मर्ता। मरिष्यति। मृषीष्ट। अमृत। पृङ् व्यायामे। ४३। प्रायेणायं व्याङ्पूर्वः। व्याप्रियते। व्यापप्रे। व्यापप्राते। व्यापरिष्यते। व्यापृत। व्यापृषाताम्। जुषी प्रीतिसेवनयोः। ४४। जुषते। जुजुषे। ओविजी भयचलनयोः। ४५। प्रायेणा-

---

(४) मृयतेः = लुङ् लङ्, शित् = शप्रत्यय की प्रकृतिभूत मृङ् धातुसे तङ् = आत्मनेपद हो। अन्यत्र न। लिट् लुट् लृट् लङ् में नहीं। इति आत्मनेपदे 'त' रिङ्-शयग्लिङ्क्षु' इति ऋस्थाने रिङादेशे। ततः इयङ् म्रियते। ममार = प्राण त्यागकी परोक्षभूतकालिक क्रिया मृ मृ मर् मृ ममृ 'अ' वृद्धिः। वृत्रासुरः इन्द्रवज्रेण ममार। मर्ता। अद्यभिन्नभविष्यकाले लुट् मृ ता गुणः। सर्वे मरिष्यन्ति। ऋद्धनोः स्ये इति इट्। श विकरणविषये 'म्रियतेर्लुङ्लिङोश्च' इति आत्मनेपदम्। महादुष्टस्त्वं म्रियताम्। यथा—हिरण्याक्षः अम्रियत। यदि दुष्टः मृयेत् तदा कल्याणं भवेत्। मृषीष्ट = मरण विषयक आशीर्वादार्थे लिङ्। उक्त सूत्रेण आत्मनेपदम्। सीयुट् सुट् 'उश्च' इति कित्, तस्य फलं गुणनिषेधः षत्वे ष्टुत्वे। अमृत = मरण क्रियासमाप्तिकाले लुङ् त, अट् सिच्, सकारस्य 'ह्रस्वादङ्गात्' इति लोपः। अमृषाताम् अमृषत। अमृथाः अमृषाथाम्, अमृढ्वम्। अमृषि। आ ां प्रतिष्ठाभङ्गेन अमृष्वहि, वयं अमृष्महि। अमरिष्यत्। (४३) ङ् इत्. पृ धातुका व्यायाम, व्यापार कसरत, चेष्टा करनेके अनुकूल क्रिया अर्थः। अनिट् अकर्मकः। प्रायेण = यह धातु प्रायः विआङ पूर्वक है। कहीं नहीं भी है। व्यायमकी क्रियाके वर्तमान रहपे। व्याप्रियते धनिकः। मल्लोत्रा वि आपृ अत्र रिङ्शयग्लिङ्क्षु इति सूत्रेण ऋस्थाने रिङ् आदेशे। इकारस्य इयङ टेः एत्वम्। व्यापप्रे = परोक्षभूतकालिकव्यापार या व्यायाम व्यापृ 'त' तस्य स्थाने 'एश्' द्वित्वादिकार्यं, उत्तरखण्डस्य ऋस्थाने यण। व्यापारिणौ मल्लौ वा व्यापप्राते। व्यापर्ता। व्यापरिष्यते। ऋद्धनोः इतीट्। व्याप्रियताम्—येतां यन्ताम्। व्याप्रियत, व्यापृयत व्यापृषीष्ट। व्यापृत=ह्रस्वादङ्गात् इति सिचोलोपः व्यापृषातां व्यापृषत। (४४) ईकार इत् जुषधातुका प्रीति = सप्रेम मिलन, सेवन = सुश्रूषा = सेवाके अनुकूल व्यापारो अर्थः। कामी स्त्रियं जुषते। मुढः शरीरं जुजुषे। स शिवं जोषिता। जोषिष्यते। राजा प्रजाकी सेवा करेगा। भवान् परिवृत्तं जुषताम्। यथा—रामः आश्रितान् अजुषत। यदि नेता प्रजां जुषत तदा विजयी भवेत्। त्वं देशवासिनं जोषिषीष्ठाः। अजोषीष्ट। यदि लोकान् अजोषिष्यत् तदा सुखम् अभविष्यत्। (४५) ओकार ईकार इत् विज धातुका भय और कम्पनके अनुकूल क्रिया अर्थः। ओ इत्का फल उद्विग्नः मे निष्ठा 'त' को नकार होना। ईदित्से इट् निषेध। सेट् सकर्मकः। प्रायः यह धातु उत्

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यमुत्पूर्वः। उद्विजते। ६६५ विज इट् १। २। २। विजः पर इडादिप्रत्ययो ङिद्वत्। उद्विजिता।

इति तुदादयः।

## ७—अथ रुधादयः

रुधिर् आवरणे। १। ६६६ रुधादिभ्यः श्नम् ३। १। ७८। शपोऽपवादः। रुणद्धिः (५७६) श्नसोरल्लोपः। रुन्धः। रुन्धति। रुणत्सि।

---

पूर्वक दृष्ट है। भय कम्पन की क्रियाके वर्तमान कालमें उद्विजते उद्विग्न, भयभीत, कम्पित होना। राज्ञा अङ्गेन प्रजाः उद्विजते उद्विजिता। भय, कम्पन उद्वेग, जनकक्रियावाचक उद्विजधातोः अद्यभिन्नभविष्यकालिक क्रिया अर्थे लुट् त, तास्, डा आदि इट् ततः।

(६६५) विज् धातुसे परे इट् आदि प्रत्यय ङिद्वत् हों। ङित्‌का फल गुण निषेधः। प्रजाः कटुशासनात् उद्विजिष्यते। शासकः असामाजिकतत्वान् उद्विजताम्। यथा—रघुः शत्रून् उदविजत। उविजेत्। उद्विजिषीष्ट। उदविजिष्ट। उदविजिष्यत।

इति प्रभाकर्यां तुदादि गणः समाप्तः।

अथरुधादिः इस गणकी मुख्य विशेषता 'श्नम्' विकरण है। जो प्रकृति प्रत्ययके मध्यमें 'न' बनकर बैठता है। यही अन्य प्रकरणोंका भेदक धर्म है। (१) रुध्धातुका आवरण, अवरोध, रुकावटके अनुकूल क्रिया अर्थः। इर इत्। इसकाफल इरितो 'वा' से च्लिको अङ् होना है। अनिट्, सकर्मकः, उभयपदी।

(६) रुधादिगण पठित धातुओंसे परे श्नम् हो। शप्‌को बाधकर। अनुबन्ध लोप 'न' शेष। रुधादिशब्दमें ध को जश्त्व नकरनेका फल अनुकार्य रुधका स्पष्ट ज्ञान होना। सूत्रमें होनेसे साधुः। श्नं श्‌काफल श्नसोरल्लोपः। मित्‌का फल मिदचोऽन्त्यात्परः। रुणद्धि आवरण, अवरोध, फलजनकव्यापारवाचकरुधधातोः अवरोधक्रिया-वर्तमाने काले अर्थे लट्,ति। शपं बाधित्वा 'श्नम्' अनुबन्धलोपे-'न'मित्वात् उकारोत्तरवर्ति नकारो जायते। रुन्धति। झषस्तथोः इति तस्याने



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रुणत्सि। रुन्धः। रुन्ध। रुणध्मि। रुन्ध्वः। रुन्ध्मः। रुन्धे। रुन्धाते। रुन्धते। रुरोध, रुरुधे। रोद्धा। रोत्स्यति, रोत्स्यते। रुणद्धु, रुन्धात्। रुन्धाम्। रुन्धन्तु। रुन्धि रुणधानि। रुणधाव। रुणधाम। रुन्धाम्, रुन्धाताम्, रुन्धताम्। रुन्त्स्व। रुणधै। रुणधावहै। रुणधामहै। अरुणत्, अरुणद्। अरुन्धाम्। अरुन्धन्, अरुणत्। अरुणः। अरुन्ध। अरुन्धाताम्। अरुन्धत।

---

'ध'। धातु धकारस्य जश्त्वं दकारः, नस्य णत्वे रुपम्। तौ शत्रून् रून्धः। रून्ध्'तस् इति दशायां तस् इत्यस्य ( अपित् सार्वधातुकं ) ङित। श्नसोरल्लोपः' 'अकारस्य लोपे तस्य स्थाने धः' झरोझरि सवर्णे' पूर्वधकारस्य लोपविकल्पे। 'णत्वे रुपम्'। नकारस्य अनुस्वारेपरसवर्णे, रुन्धः। पक्षे रुन्द्धः। शत्रुसेनां रुन्धन्ति। रुन्ध्झि, झकारस्य 'अन्त' आदेशे अकारलोपे। नकारस्य अनुस्वारपरसवर्णे। त्वं बालकं रुणत्सि अत्र धकारस्य चर्त्वेन तकारः। यूयं कुत्सितां प्रवृत्ति रुन्धः। यथा—अहं ( खल ) वृत्ति रुणध्मि। आवां गर्तं रुन्ध्वः, वयं रुन्ध्मः। अवरोध-क्रियाका फलकर्तृगामी होनेसे आत्मनेपद रुन्धे, कृष्णरामौ रुन्धाते। राक्षसाः रुन्धते। रोकनेकी क्रिया अनद्यतनपरोक्षकालमें समाप्त हो तब रुरोध। रुरुधतुः रुरुधुः। रुरोधिथ। रुरुधिव रुरुधिम। रुरुधे, रुरुधाते रुरुधिरे। रुरुधिषे। परश्वः आक्रमणकारिणः रोद्धा। रुधता, त स्थाने ध, धातु धकारस्य जश्त्वम्। उकारस्य गुणः। सेना रोत्स्यति। राजमार्गं रोत्स्यते भवान् स्वरिपून् रुणद्धु। अवरोध-विषयक आशीर्वादार्थे 'तु' स्थाने तातङ्, रुन्धात्। रुन्धि, रुन्ध्'हि'हुझल्भ्यो हेर्धिः इति हि स्थाने धि। झरोझरि सवर्णेधकारलोपे। नकारस्य अकारलोपे। रुणधानि आडुत्तमस्य पिच्च' आट्। पिदस्ति। तस्य फलं नकारस्य अकारलोपो न। रुणधाव। रुणधाम। रुणधै रुणधावहै, रुणधामहै। गोपः स्वगाः व्रजं रुन्धां गोपौ रुन्धातां। सर्वे रुन्धताम् रुन्त्स्व, रुन्ध्थास, तस्य'से' तस्य ( एकारस्य ) सवाभ्यां वामौ इति व। धस्य चर्त्वे तः, नकारस्य अकारलोपः। रुन्धाथां रुन्धध्वम्। रुणधै रुणधावहै रुणधामहै। अवरोध या रूंधना क्रियाके अनद्यतनभूतकालमें लङ्। अरुण्ध्त् तकारस्य संयोगान्तलोपे, जश्त्वे, वावसाने चर्त्वे। अरुणत्-द् मार्गं; राजपुरुषौ दस्यून् अरुन्धाम् अरुन्धन्। रामः अधर्ममरुणत्। अवरोधक्रियाका कर्ता त्वं हो म० पु० सिप्, इलोपे, सकारस्य हल्ङ्याब्भ्यो दिलोपे, धकारस्य जश्त्वे चर्त्वेविकल्पे। अरुणत्। पक्षे-दकारस्य रुत्वे विसर्गे अरुणः। अरुन्धम् अरुन्ध। आत्मनेपदे अरुन्ध्त 'श्नसोः' अकारलोपे तस्य धः, सवर्णे झरिलोपे, अरुन्धाताम् अरुन्धत अरुन्धाः। अवरोध आवरणविषयकविधि, प्रेरणा, प्रार्थनाकी सम्भावनामें रुन्धीत। बालकान् रुन्ध्यात्। भवान् अधर्ममार्गात् सर्वं रुध्यात् रुत्सीष्ट। लिङ्-सिचौ इतिकित्, तेन गुणो न। अवरोधक्रियाके भूतकालमें, अरुधत। अत्र इरितोवा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अरुन्धाः। रुन्ध्यात्। रुन्धीत। रुध्यात्, रुत्सीष्ट। अरुधत्, अरौत्सीत्, अरुद्ध। अरुत्साताम् अरुत्सत्। अरोत्स्यत्, अरोत्स्यत। भिदिर् विदारणे। २। छिदिर् द्वैधीकरणे। ३। युजिर् योगे। ४। रिचिर् विरेचने। ५। रिणक्ति, रिङ्क्ते। रि च। रेक्ता। रेक्ष्यति, अरिणक्। अरिचत्, अरैक्षीत्,

---

इति च्लि स्थाने अङ् अरुधताम् अरुधन् अरुधः। यदा च्लिस्थाने अङ् न भवति तदा सिच्, वदव्रजहलन्तस्याचः वृद्धिः, धकारस्य चर्त्वे, ईट्, अरौत्सीत् अरौद्धाम् अरौत्सुः। आत्मनेपदे। अरुद्ध झलोझलि सिचोलोपः, तस्य धः, धातुधकारस्य जश्त्वम्। अरुत्साताम्, अरुत्सत। अरोत्स्यत्। (२) इर्इत्संज्ञक भिद्धातुका विदारण, भेदन, फाड़ना, फलजनकक्रिया अर्थः। अनिट् सकर्मकः। नृसिंहः हिरैण्यकशयपो. वक्षस्थलं भिनक्ति। भिन्ते श्नं कृते भिन्दत। दकारस्य सवर्णी-झरिपरे लोपे, अल्लोपे च। विदारणफलका आधार वक्षस्थल। क्रियाका आधार नरसिंहः। यथा—विष्णुः मधुं कैटभञ्च विभिदे। श्वः भेत्ता, सदा मत्कुणान् भेत्स्यति। भवान् आत्मानम् अवगुणं भिनक्तु, भिन्तात् भिन्ताम्। यथा—अन्यो अभिनत्, अभिनत। भिन्देत्, भिन्दीत, भिद्यात् भित्सीष्ट। अभिदत् अभैत्सीत् अभित्त। अभेत्स्यत।

(३) छिद धातुका द्वैधीकरण, एकस्य वस्तुनः छेदनेन खण्डद्वयकरणम्। छीलना काटना= टुकड़े करना, अनिट्। इर इत्। सकर्मकः। उभयपदी। तक्षा काष्ठ छिनत्ति छिन्तः। श्नम् अकारलोपः दकारस्य सवर्णे झरिपरे लोपः। द्वैधीकरण (खण्ड होना) फल काष्ठमें, तदनुकूलक्रिया तक्षा (बढ़ई) में। यथामहिषासुरस्य शिरः विच्छेद, विच्छिदे। गुरुः तव अज्ञानानि छेत्ता। नापितः छुरेण केशान् छेत्स्यति। छेत्स्यते। स कुष्माण्डं छिन्तु। छिन्ताम् यथा पाचकः अलावुं पटोलं च अच्छिनत। अच्छिन्त छिन्देत्, छिन्दीत। नवान्नं छिद्यात् छित्सीष्ट। अच्छिदत्। अच्छैत्सीत्, अछित्त। अच्छेत्स्यत्। उच्छिनत्ति=उच्छिन्न करता है। परिछिनत्ति= नापता है। परिच्छेद्य परिच्छेदक, परिछिन्न। (४) इर इत् युजधातु का योग, संयोजन मिलना, अर्थके अनुकूल क्रिया। कृषकः वृषभौ युनक्ति। युन्ते न-मे अकालोप होने से न का अनुस्वारपरसवर्ण। प्रथम ज को कुत्वेन ग चर्त्वेन 'क'। हनुमान् सीतां युयोज युयुजे सन्त भक्तनां मनः परमात्मनि योक्ता योक्ष्यति। योक्ष्यते, युनक्तु युन्ताम्। अयुनक्। अयौक्षीत्। अयुक्त। अयोक्ष्यत्। अनुयुङ्क्ते अनुयोग करता है उद्युङ्क्ते = उद्योग करता है। उपयुङ्क्ते उपयोगः। नियुनक्ति = नियुक्त करने की क्रिया। प्रयुन्ते=प्रयोग करता है। वियुनक्ति = वियोग। (५) रिच् धातु विरेचन, पृथक्करण, रिक्त करना = खाली होना। फलजनक व्यापारो अर्थः, अनिट्, सकर्मकः, इर इत्। भाटकः गृहं रिणक्ति। रिङ्क्ते। चकारस्य कुत्वे,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अरिक्त। विचिर् पृथग्भावे। ६। विनक्ति, विङ्क्ते। क्षुदिर्। सम्पेषणे। ७। क्षुणत्ति, क्षुन्ते। क्षोत्ता। अक्षुदत्, अक्षौत्सीत्. अक्षुत्त। उच्छृदिर् दीप्तिदेवनयोः। ८। छृणत्ति, छृन्ते, चच्छर्द। (६३०) सेऽसिचीति वेट्। चच्छृत्से, चच्छृदिषे। छर्दिता। छर्दिष्यति, छर्त्स्यति अच्छृदत्, अच्छर्दीत्। अच्छर्दिष्ट। उतृदिर् हिंसानादरयोः। ९। तृणत्ति। तृन्ते। कृती वेष्टने। १०। कृणत्ति। तृह हिंसि हिंसायाम्। ११-१२।

७ तृणह इम् ७। ३। ९२। तृहः श्नमि कृते इमागमो हलादौ पिति।

---

अकारलोपे. सति नकारस्य अनुस्वारपरसवर्णे विरेचन, रिक्त फलका आधार गृह तदनुकूलक्रिया भाटकमें। छात्रः छात्रावासं रिरेच। रिरिचे, रेक्ता अत्रगुणे चकारस्य कुत्वे रेक्ष्यति सकारस्य षत्वे क्षत्वे। अरिणक्—उसने स्थान खाली कर दिया। तकारस्य हल्ङ्यादि लोपे, नकारस्य णत्वे, चकारस्य कुत्वे अरिङ्क्ताम् अरिञ्चन्। त्वं कदा अरिणक्, अरिङ्क्ताम्, अरिङ्क्त। अहं ह्यः अरिणचम्। अरिञ्च्व अरिञ्च्म। रिच्यात् रिञ्चीत। रिच्यात् रिक्षीष्ट। अरिचत्, अरैक्षीत्, अरिक्त। झलोझलि सिच् लोपः ककारस्य कुत्वम्। (६) विच धातु का पृथग्भाव, विभाग-करण, अलग होना, फलजनकव्यापारोऽर्थः। तण्डुलात् कंकड़ं विनक्ति। = अलग करता है। उपसर्गसे अनेक अर्थ होंगे। विवेच। वेक्ता। वेक्ष्यति। अविनक्। अविचद्। (७) क्षुध धातु का सम्पेषणम। चूर्णीकरणम्। कूटना, उलूखल में मुसलसे कूटने अर्थमें विशेष है। भार्या मुसलेन, उलूखले यवं क्षुणत्ति। क्षुन्ते। वैद्यः औषधानि चुक्षोद, चुक्षुदे, क्षोक्ता, क्षोत्स्यति उच्छृद् = छृद् धातु का दीप्ति, प्रकाश बढ़ाना, देवन, जूआ खेलना, शोक करना, गृहिणी वर्तिकां छृणत्ति। छृन्ते। पाण्डवः द्यूतं चच्छर्द। यथा—त्वं चछृदिसे, सेऽसिचिकृतचृतछृदतृदनृतः इति 'इट' विकल्पः। छर्दिता, छर्त्ता अद्यभिन्नभविष्यकालिकप्रकाशकर्ता। द्यूत क्रीडकः छर्दिष्यति छर्त्स्यति। च्लि, स्थाने अङ् अछृदत्। अङ् अभावे सिच् लिट्, सिज्लोपः। अच्छर्दिष्ट। (९ तृद धातुका हिंसा, प्राणवियोग। अनादर, अपमान फलके अनुकूल क्रिया, सेट्, उभयपदी। मदान्धः सर्वं तृणत्ति तृणतुल्य अपमान या कष्ट देता है। तृन्ते श्नम् अकारलोपे, झरोझरि सवर्णे, दकारलोपे। ऋषयः संसारं ततर्द, तर्दे। तर्दिता। तर्दिष्यति। तृणत्तु। तर्दिषीष्ट अतृदत् अतर्दीत्। अतर्दिष्ट। अतर्दिष्यत्। (१०) कृत् धातुका वेष्टन घेरना, लपेटना, अर्थः। पुस्तकं कृणत्ति ( वेष्टयति )। ( ११-१२ ) तृह हिंस धातुका हिंसा के अनुकूला क्रिया अर्थः प्राण वियोगानुकूलव्यापारो हिंसा। (७) तृह् धातुको 'श्नम्' करने पर 'इम्' का आगम हो हलादि पित् प्रत्यय परे। तृणेढि। = हिंसानुकूल क्रियावाचक तृह् धातोः प्रचलितक्रियावर्तमाने लट् तिप्, शपं बाधित्वा, 'श्नम्'

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् । ८ श्नान्नलोपः । ६ । ४ । २३ । श्नमः परस्य नस्य लोपः स्यात् । हिनस्ति । जिहिंस । हिंसिता । ९ तिप्यनस्तेः ८ । २ । ७३ । पदान्तस्य सस्य दः स्यात् तिपि न त्वस्ते । (१०५) ससजुषोरुरित्यस्यापवादः । अहिनत्, अहिनद् । अहिंस्ताम् । अहिंसन् ।

६७० सिपि धातो रुर्वा ८ । २ । ७४ । पदान्तस्य धातोः सस्य रुः स्याद् वा । पक्षे ( ६७ ) 'झलां जशोऽन्ते' इति जश्त्वम् । अहिनः, अहिनत्,

---

अनुबन्धलोपे, णत्वे तृणह् ति 'तृण ह इम्' इति सूत्रेण इम् आगमे ( अन्त्य अच् परे मित् भवति ) ततः नकारघटकअकार-इकारयोः स्थाने एकार गुणे तृणेह ति । हकारस्य ढः, तकारस्य ( तथोर्धोऽध्रः तस्य ष्टुत्वं ढः, ढोढेलोपः । नकारस्यणकारः । दस्यून तृण्ढः–तृनह तस इति नकारस्य अकारलोपः हस्य ढः तस्य ध, ढः ढोढेलोपः, नस्य णः । तृंहन्ति । त्वं सर्वं तृणेक्षि । तृण्ढः तृण्ढ अह कमपि न तृणेह्मि । तृंह्व तृंह्मः हिंसा क्रिया अद्यभिन्न भूतकालमें समाप्त हो तब । अतृणेट् । अतृनहत् 'तृणह इम् आगमे, तकारस्य हल्ङ्यादिलोपे, हकारस्य ढत्वे, जश्त्वे, चर्त्वे, रूपम् । अतृण्ढाम् अतृंहन् । अतृणेट् अतृण्ढम् अतृण्ढ । अतृणेह्मि अतृंह्व अतृंह्म । तृंह्यात् तृह्यात् । अतर्हीत् अतर्हिष्टाम् । अतर्हिष्यत् । (८) श्नात् 'श्नम्' से परे नकारका लोप हो । हिनस्ति मत्कुणम् । हिंसार्थक इदित् हिंस धातोः ( इदितोनुम् धातोः नुम् कृते लट् ), तिप् श्नम् हिनन् स् ति । श्नात् नलोपः इति द्वितीय नकारस्य लोपे रूपं । राक्षसौ हिंसतः । हिंसन्ति । त्वं पापं हिनस्सि । हिंस्थः हिंस्थ । हिनस्मि हिंस्व, हिंस्मः । जिहिंस, जिहिंसतुः । हिंसिता । हिंसिष्यति । हिनस्तु । (८) तिपि = पदान्त 'स' को द हो तिप् परे अनस्तेः = न अस्तेः । अस्का सकार न हो । यह सूत्र ससजुषोरुः का बाधक है । हिंसा क्रियाका अद्यभिन्न भूतकाल में । अहिनत् । हिंसार्थक हिंसधातोः नुम् लट् तिप् इकारलोपे, श्नम् अट् अहिनस्त् तकारस्य हल्ङ्यादिलोपे, तिप्यनस्तेः इति सकारस्य दः । न तु ससजुषोरुः । दकारस्य चर्त्वे अहिनत् रूपम् । पक्षे अहिनद् अहिंस्ताम् । श्नमः अकारलोपे नस्य अनुस्वारे रूपम् । अहिंसन् ।

( ६७० ) सिप्परे पदान्त धातु के स को रु हो । विकल्प से अहिनः=अहिनस् स् सकारस्य हल्ङ्यादिलोपे 'श्नान्न लोपः' इति द्वितीय नकारस्य लोपे, सिपि धातोः इति सकारस्य रु नं भवति । तदा झलां जशोऽन्ते इति सकारस्य जश्त्वं दकारः, चर्त्वं विकल्पः अहिनत्, अहिनद्, अहिंसतम् अहिंसत अहिनसम्, अहिंस्व, अहिंस्म । हिंस्यात् अहिंसीत् । ( १३. ) उन्दधातु का क्लेदनम्, आर्द्री करणम् = गीला करना पसीना अर्थः । बालकः वस्त्रं उनत्ति—उनन्दति श्नान्नलोपः, द्वितीय नकारस्य लोपे दकारस्य चर्त्वे । रजकौ वस्त्राणि उन्तः अन्येऽपि उन्दन्ति । इजादिः गुरुमान् धातु

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अहिनद् । उन्दी क्लेदने । १३ । उनत्ति । उन्तः । उन्दन्ति । उन्दाञ्चकार । औनत् । औन्ताम्, औन्दन् । औनः औनत् । औनदम् । अञ्जू व्यक्ति-म्रक्षण-कान्ति-गतिषु । १४ । अनक्ति । अङ्क्तः अञ्जन्ति । आनञ्ज । आनञ्जिथ, आनङ्क्थ । अञ्जिता, अङ्क्ता । अङ्ग्धि । अनजानि । आनक् । १ अञ्जेः सिचि ७ । २ । ७१ । अञ्जेः सिचो नित्यमिट् स्यात् । आञ्जीत् । तञ्चू

---

होने से आम् कृ लिट् आदिका अनुप्रयोग । उन्दाञ्चकार खट्वाम् । आर्द्रीकरणक्रिया होने वाली हो तब उन्दिता । उन्दिष्यति । हो चुकी हो तब । औनत् । उन्द न त् आट्, वृद्धिः, द्वितीयनकारस्य लोपे, तकारस्य हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति लोपे दकारस्य चर्त्वे औनत्, औन्ताम् । नलोपः अलोपः, दकारस्य सवर्णे झरिपरे लोपे । औन्दन् औनः औनत् । सिप् सकारस्य हल्ङ्यादि लोपः । दकारस्य दश्चेति 'रुः' । उन्द्यात्, उद्यात्, औन्दीत् औन्दिष्यत् । (१४) उकार इत्, अञ्जधातुका व्यक्तिः, विवेचनम्, स्पष्टज्ञान करना, म्रक्षण, अभ्यङ्ग, विलेपनम्=शरीर में मालिस करना, कान्ति= इच्छा, गमन आदि फलजनकव्यापारो अर्थः ऊदित् से इट् विकल्प प्रश्नं शरीरम्वा अनक्ति । अङ्क्तः अञ्जन्ति । श्नान्नलोपः, जकारस्य कुत्वं गकारः, तस्य चर्त्वं ककारः । विवेचन अङ्गकी स्वच्छता, इच्छा, या गमन करता है । विवेक, स्वच्छता आदि फलजनक क्रियाके दो कर्ता हों तब द्विवचनं 'श्नम्' अनञ्ज तस् इति दशायाम् जकारस्य कुत्वं चर्त्वं ककारः नश्चापदान्तस्य झलि इति नकारस्य अनुसारे तस्य यथि परे पसवर्णे ङकार अन्त आदेशे । अञ्जन्ति । श्नमः परस्य नकारस्य लोपः, अकारलोपश्च अनुस्वारपरसवर्णे अनक्षि । अङ्क्थः, अङ्क्थ । अनज्मि, अञ्ज्व, अञ्ज्म । उक्तक्रिया अद्यभिन्न परोक्षकालमें समस्त हो, लिट् द्वित्वादिकार्ये अञ्ज् अञ्ज्, 'अत आदेः' आअञ्च् तस्मान्नुड्द्विहलः सूत्रेण नुट् । आनञ्ज आनञ्जतुः आनञ्जुः । त्वं स्वशरीरम् आनञ्जिथ, स्वरति-सूति-सूयति-धूञूदितोवा इति इट् विकल्पः । पक्षे कुत्वे, चर्त्वे, अनुस्वारपरसवर्णे । अञ्जिता । उदित्वात् इट्विकल्पः पक्षे अङ्क्ता । अञ्जिष्यति अङ्क्ष्यति । विधि प्रेरणा आदि की सम्भावनामे अनक्तु, अङ्क्तात् अङ्क्ताम् अञ्जन्तु अङ्ग्धि-अञ्ज् सि तस्य 'हि', हेर्धिः, सो अपित्, ङित् भवति । श्नम् अकारस्य लोपे, जकारस्य कुत्वं गः नकारस्य अनुस्वारपर सवर्णौ । अङ्क्तम् अङ्क्त । अनजानि । लोट्लकारस्य उ० पुरुषस्य आट्, पित्, भवति । द्वितीयनकारस्य श्नान्नलोपः । आनक्-आनअद् । आट्, वृद्धिः, धातु नकारस्य लोपः तकारस्य हल्ङ्यादिलोपः, चर्त्वम् । आङ्क्ताम् आञ्जन्, आनक् आङ्क्तम् आङ्क्त । आनजम् ।

(१) अञ्ज धातु से परे सिच् को नित्य इट् हो । यह विकल्पइट्का बाधक है । आञ्जीत=अञ्जधातोः भूतकाले लुङ् त, आट् वृद्धिः च्लेः, सिच्, तस्य

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

संकोचने । १५ । तनक्ति । तङ्क्ता, तञ्चिता । ओवीजी भयचलनयोः । १६ । विनक्ति (६६५) विज इडिति ङित्वम् । विविजिथ । विजिता । अविनक् । अविजीत् । शिष्लृ विशेषणे । १७ । शिनष्टि । शिंष्टः । शिंषन्ति । शिनक्षि । शिशेष । शिशेषिथ । शेष्टा । शेक्ष्यति । शिंढि । शिण्ढि । शिनषाणि । अशिनट् । शिंष्यात् । शिष्यात् । अशिषत् । एवं पिष्लृ संचूर्णने । १८ ।

---

( अञ्जेः सिचि ) इति नित्यमिट् । इट् च । इटः ईटि सलोपे । सवर्णदीर्घे । आञ्जिष्टाम् आञ्जिषुः । आञ्जीः, आञ्जिष्टम् आञ्जिष्ट । आञ्जिषम् आञ्जिष्व आञ्जिष्म । आञ्जिष्यत् आङ्क्ष्यत् । अभ्यनक्ति=अङ्गलेपन करता है । व्यनक्ति= स्पष्ट करता है व्यंग्य अङ्ग आदिशब्द इसी धातुके रूप हैं । बालिका नेत्रयोः अञ्जनम् अनक्ति । ( १५ ) ऊकार इत् तञ्च् धातुका संकोचनम्—प्रसृतस्य वस्तुनो अल्पदेशकरणम् । बटोरना, संकुचित करने के अनुकूल व्यापारो अर्थः । विकल्प इट् सकर्मकः । सर्पः शरीरं तनक्ति । सेवकः ततञ्च, भवान् श्वः तङ्क्ता तञ्चिता इट् विकल्पः तङ्क्ष्यति तञ्चिष्यति । तनक्तु तङ्ग्धि । अतनक् अतञ्चत् । अताङ्क्षीत् । ( १६ ) ओ ई इत् विज् धातुका भय चलन, कम्पन के अनुकूल क्रिया अर्थः चौरः वृक्षश्च विनक्ति । विवेज । विविजिथ, ( विजइट् ) इति ङित्वात् न गुणः । सर्वे विरोधिनः, श्व विजिता विजिष्यति । विनक्तु अविनक्, अविज्यात् ।

( १७ लृ इत् शिष धातुका विश्लेषण-विशेषता बताना अर्थः । विपूर्वक शिष् धातुका इतरव्यावृत्तिकरणरूपविशेषण अर्थः । केवल शिषका अवशेषो अर्थः । अकर्मक, अनिट् । लृदित्का फल च्लिको अङ् होना । ब्रह्म केवलं शिनष्टि शेष रहता है । अत्र तिपः तकारस्य ष्टुत्वम् । द्वौ, शिंष्टः, तस् प्रत्ययः अपित् सार्वधातुक होनेसे ङित् । श्नमः अकारलोपे अनुस्वारे ष्टुत्वे । फलानि शिंषन्ति । शिनक्षि सिप्परे षकारस्य 'षढोः कः सि' इति ककारे सिपः सकारस्य षत्वे । शिंष्ठः शिंष्ठ । अवशेष या विशेषता बतलानेकी परोक्ष भूतकालिक क्रिया ( विशेष ) शिशिषतुः शिशिषुः शिशेषिथ । शेष्टा, शेक्ष्यति, शिनष्टु, शिंष्टां शिंषन्तु । शिण्ढि=शिनष् हि इति अत्र श्नमो अकारस्य लोपे हिस्थाने धिः, षकारस्य जश्त्वं डः । धकारस्य ष्टुत्वं ढः सवर्णे झरिपरे डकारस्य लोपे अनुस्वारपरसवर्णौ । पक्षे शिंष्ठ शिंष्ठ ( शिनषाणि—आट् मेर्निः णत्वम् । अशिनट् तिप् तकारस्य हल्ङ्यादिलोपे, षकारस्य जश्त्वेन डः, तस्य चर्त्वम् । अशिंष्टाम् । अशिंषन् । अशिनड् अशिंष्टम् अशिंष्ट । अशिनषम् । शिंष्यात् यासुट्, ङित् श्नमः अकार-लोपः अनुस्वारे । अशिषत्, अट्तिप् च्लिस्थाने ( पुषादिसूत्रेण ) अङ् अशिषताम् अशिषन् अशिषः । ( १८ ) पिष—धातुका सञ्चूर्णनम् पीसना, चूर्ण करना

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

भञ्जो आमर्दने। १९। (६६८) श्नान्नलोपः। भनक्ति। बभञ्जिथ। बभङ्क्थ। भङ्क्ता। भङ्ग्धि। अभाङ्क्षीत्। भुज पालनाभ्यवहारयोः। २०। भुनक्ति। भोक्ता। भोक्ष्यति। अभुनक्।

२ भुजोऽनवने १। ३। ६६। तङानौ स्तः। ओदनं भुङ्क्ते। अनवने किम्—महीं भुनक्ति। ञिइन्धी दीप्तौ। २१। इन्धे। इन्धाते। इन्धते।

---

अर्थः है। अनिट लृदित्, सकर्मकः। ससंपं पिनष्टि। पिपेष, पेष्टा, पेक्ष्यति, पिनष्टु, अपिनट्। पिंष्यात् पिष्यात् अपिषत्। अपेक्ष्यत्।

(१६) ओकार इत् भञ्जधातुका आमर्दनं=त्रोटनम्=तोड़ना, भञ्जनकरना। ओदित्का फल निष्ठातको न होना। 'श्नान्न लोपः श्नम्से परे न का लोप होता है। हनुमान् वाटिकां भनक्ति। यथा-इन्द्रः वृत्तासुरं बभञ्ज, त्रोटन, भञ्जन, क्रियाका परोक्ष भूतकाल हो त्वं कदा बभञ्जिथ—( तास्से नित्य अनिट् होनेसे भारद्वाज नियमसे ) इट् विकल्प, पक्षे जकारस्य कुत्वे, चर्त्वे, नकारस्य अनुस्वारे परसवर्णे बभङ्क्थ। श्वः फलानि भङ्क्ता। कपालं भङ्क्ष्यति। भनक्तु। भङ्क्तां भनजन्तु भङ्ग्धि हिस्थाने धिकृते, पित् भिन्न ङित् परे, श्नम्, अकारस्य लोपे, हेर्धि, जकारस्य कुत्वं नकारस्य अनुस्वारपरसवर्णो। भङ्क्तं भङ्क्त। भनजानि, भनजाव भनजाम। अभनक् भञ्ज्यात् भज्यात्। अभाङ्क्षीत्। अभञ्ज् सईत् वद व्रज हलन्तस्याचः इति वृद्धिः जकारस्य कुत्वं, चर्त्वं ककारः पत्वे क्षत्वे अनुस्वारे परसवर्णे। अभाङ्क्ताम् अभाङ्क्षुः। अभाङ्क्षीः अभङ्क्ष्यत्। वि उपसर्गसे विभाग अर्थः (२०) भुज्धातुका पालन रक्षण अभ्यवहार 'भक्षण' भोजन आदि अर्थः। बङ्गीयः तण्डुलं भुनक्ति, जकारस्य कुत्वे, चर्त्वे। तौ भुङ्क्तः। ते भुञ्जन्ति। त्वम् भुनक्षि। यूवां भुङ्क्थः। यूयं भुङ्क्थ। अहं भुनज्मि। आवां भुञ्ज्वः। भुञ्ज्मः। अतिथिः बुभोज। जज्ञे भोक्ता, लघूपधगुणः। भोक्ष्यति—भुजस्यति गुणे, कुत्वे। अभुनक् अभुङ्क्ताम् अभुञ्जन्। अभुनग् अभुङ्क्तम् अभुङ्क्त। अभुनजम् अभुञ्जव अभुञ्ज्म। भुञ्ज्यात्। भुज्यात् अभोक्षीत् अभोक्ष्यत्।

(२) अनवने, अवनं=रक्षणं, तद्भिन्नं=अरक्षणे अर्थ भुज्धातोः आत्मनेपदं पालन अर्थसे भिन्न भोजन अर्थमें आत्मनेपद हो। यथा—ओदनं भुङ्क्ते। भुज्धातुका भोजन अर्थ होनेसे आत्मनेपद हुआ। अनवने किम्। पालनसे भिन्न अर्थमें आत्मनेपद क्यों कहा। यहीं भुनक्ति। यहाँ पृथ्वीका भोग पालनरूप है आत्मनेपद नहीं हुआ। भोक्ता। भोक्ष्यते भुङ्क्तां भुङ्क्ष्व। भुञ्जाथां भुङ्ग्ध्वम् भुनजै भुनजावहै भुनजामहै। अभुङ्क्त, अभुङ्क्थाः अभुञ्जि,। भुञ्जीत, भुक्षीष्ट अभुक्त। अभुक्षाताम् अभुक्षत अभोक्ष्यत (२१) इन्धधातु दीप्ति, प्रकाश अर्थमें

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इन्त्से। इन्ध्वे। इन्धाञ्चक्रे। इन्धिता। इन्धाम्। इन्धाताम्। इनधै। ऐन्ध। ऐन्धाताम्। ऐन्धाः। विद विचारणे। २२। विन्ते वेत्ता।

इति रुधादयः।

## ८—अथ तनादयः

तनु विस्तारे। ३ तनादिकृञ्भ्यः उः ३।१।७९। शपोऽपवादः। तनोति. तनुते, ततान तेने। तनितसि, तनितासे, तनिष्यति, तनिष्यते।

---

है। इन्धे। श्नमूसे परे नकारलोप, उसीके अकारका लोप, टिको एत्व, त को ध, सवर्णपरे लोपः इन्धाते इन्धते। इन्धाञ्चगुं इजादिक्रेरुमान् होनेसे थाम् कृ' का प्रयोग। इन्धिता। इन्धाम्। इन्धते एकारस्य आम्। अकारलोपे। तस्य धः सवर्णलोपे। (२२) विद्धातुका विचारणानुकूलव्यापारो अर्थः, विन्ते, विद, न त, अकारलोपे। दकारस्य सवर्णे झरि परे लोपे। विन्दाते विन्दते विन्त्से, विन्दाथे विन्ध्वे, विन्दे विन्द्वहे विन्दहे। विविदे वेत्ता, वेत्स्यते, विन्ताम्, अविन्त, विन्दीत, वित्सीष्ट अवित्त, अवेत्स्यत्। इतिरुधादयः।

(८) अथतनादयः। तनादिगण पठित धातुओंका विशेष लक्षण उकार विकरण है। (१) तन् धातुका विस्तार, फैलानेके अनुकूल क्रिया अर्थः। उकार इत्का फल निष्ठाप्रत्ययको इट्का निषेध। यथा—ततं विश्वम्। विश्वको बनाया सकर्मकः सेट्, उभयपदी। (३) तनूधातु आदिमें हो ऐसे गणपठित धातुसे और कृधातुसे उप्रत्यय हो शप्को बाधकर। बुधःकीर्ति तनोति। विस्तार फलजनकक्रिया वाचक तनुधातोः क्रियायाः वर्तमाने कर्तरि लट् तिप् शप्स्थाने तनादिभ्यः उः, (विकरण) तन् उति गुणे। तनोति। विस्तारफलका आधार कीर्ति है। उसकी क्रिया बुधमें है। तनुते, यहाँ तकारके ङित् होनेसे गुण नहीं हुआ। तन्वाते तन्वते। तनुषे तन्वाथे तनुध्वे: तन्वे तन्वहे तनुमहे। ततान—द्वित्वे अभ्यासादिकार्ये उपधा वृद्धिः तेनतुः तेनुः। तेनिथ तेनथुः तेन। ततान तेनिव तेनिम। एत्वे अभ्यासलोपे च तेने तेनाते तेनिरे। तेनिषे तेनाथे तेनिध्वे। तेने। त्वं वितानं तनितासि तनितासे

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तनोतु, तनुताम् । अतनोत्, अतनुत । तनुयात्, तन्वीत । तन्यात्, तनिषीष्ट । अतनीत्, अतानीत् । ४ तनादिभ्यस्तथासोः २ । ४ । ७९ । तनादेः सिचो वा लुक् स्यात् त-थासोः । अतत, अतनिष्ट । अतथाः, अतनिष्ठाः । अतनिष्यत्, अतनिष्यत । षणु दाने । २ । सनोति, सनुते ।

६७५ ये विभाषा ६ । ४ । ४३ । जन-सन-खनामात्वं वा यादौ क्ङिति सायात् । सन्यात् । असानीत्, असनीत् । ६ जन-सन-खनां सञ्झलोः ६ । ३ । ४२ । एषामाकारोऽन्तादेशः स्यात् सनि झलादौ क्ङिति असात्, असनिष्ट । असाथाः, असनिष्ठाः । क्षणु हिंसायाम् । ३ । क्षणोति, क्षणुते । ( ४६६ ) ह्म्यन्तेति न वृद्धिः । अक्षणीत्, अक्षत, अक्षणिष्ट । अक्षथाः, अक्षणिष्ठाः । क्षिणु च । ४ । उप्रत्यये लघूपधस्य गुणो वा । क्षिणोति

---

तनिष्यति तनिष्यपे । तनोतु, तनुतां तन्वन्तु । तनु तनुतं तनुत तनवानि, तनवाव तनवाम । तनुतां तन्वातां तन्वाताम् । तनुष्व । तन्वै तनवावहै, तन्वीत । तन्यात् तनिषीष्ट । अतानीत् अतनीत् ( ४ ) तन् इत्यादि धातुसे सिच्का विकल्पसे लोप हो, त और थास् परे । अतत--यहाँ सिच्का लुक् हो गया । यदा न लुक् तदा अतनिष्ट, अतनिषाताम् । अतथाः अतनिष्ठाः । तनादिभ्यः सिचो लुक् अनुदात्तोपदेश इति नकारस्य लोपे,लोपस्य अभावे इट् षत्वे ष्टुत्वे अतनिष्ठा । अतनिष्यत । ( २ ) षोपदेशः सेट् सन् धातुका दान देना, मिलाना, सानना । मां घासः सनोति । तुषं सनुते ।

( ६७५ ) ये विभाषा जनसन् षनधातुको आत्व विकल्पसे हो यकारादि ( कित् ) प्रत्यय परे यकारादि कित् प्रत्यय परे या सनः नकारस्य आत्वम् सायात् । यदा न आत्वं तदा सन्यात् । बालकः द्विदलं भक्तं च असानीत् । अतो हलादेर्लघोः इति वृद्धि विकल्पः । ( ६ ) जन् सन् षन् धातुओंके अन्त्य अल् नकारको आकार अन्तादेश हो, सन्परे झलादिकित् ङित् परे च । पशुओं या बालकोंके लिए दान क्रियाका भूतकाल ( असन् सत् ) तनादिभ्यः इति सिचोलुक् । जन् सन् इत्यात्वम् असात्, सिचो लोपाभावे इट् । तदा न झलादिः न च आत्वम् असनिष्ठ असनिषाताम् असनिषत । असाथाः असनिष्ठाः, असनिषाथाम् असनिढ्वम् असनिषि । ( ३ ) उकार इत् क्षणधातुका हिंसानुकूलव्यापारो अर्थः । हिंसक पशुं क्षणोति । क्षनुते । चक्षाण चक्षणे । अक्षणीत् । अक्षण इस ईत् । इटः ईटि सलोपे वदव्रज इति प्राप्त वृद्धेः 'नेटि' सूत्रेण निषेधे । अक्षणीत् अक्षतः । तनादिभ्यः सिचः विकल्पेन लुक्, अनुदात्तोपदेश इति णकारस्य लोपः यदा न सिचो लुक् तदा इट् षत्वे ष्टुत्वे । ( ४ ) क्षिणुधातुकाभी हिंसा, क्षीण, विनाश करना अर्थ । नाशकी क्रिया वर्तमान रहते । क्षणोति । उप्रत्ययके वर्तमान रहते । लघूपधगुणे=पुगन्ता

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

क्षेणोति। क्षेणिता। अक्षेणीत्, अक्षित, अक्षेणिष्ठ। तृणु अदने। ५। तृणोति, तर्णोति। तृणुते, तर्णुते। डुकृञ् करणे। ६। करोति। ७ अत उत् सार्वधातुके ६।४।११०। उप्रत्ययान्तस्य कृञोऽकारस्य उत् स्यात् सार्वधातुके क्ङिति। कुरुतः। ८ न भकुर्छुराम् ८।२।७९। भस्य कुर्छुरोश्चोपधाया न दीर्घः। कुर्वन्ति। ९ नित्यं करोतेः ६।४।१०८। करोतेः प्रत्ययोकारस्य नित्यं लोपो म्वोः परयोः। कुर्वः। कुर्मः। कुरुते। चकार, चक्रे।

---

लघूपधस्य च इस सूत्रसे गुण हुआ। **यदि संज्ञापूर्वको विधिः अनित्यः।** कोई संज्ञा होनेपर विधि होना अनित्य है यथा—उपधासंज्ञा लघुसंज्ञाका निमित्त होनेसे 'गुण' संज्ञा पूर्वक विधि है। इस लिए अनित्य हुआ। तब गुण न होनेसे **क्षिणोति** यथा। शृगालः **क्षेणिता**। व्याघ्रः बालकान् **अक्षेणीत्**। **अक्षित** तनादिभ्यः इति सिचो लुक् विकल्पः। (५) तृणधातु **अदनं** भक्षणं तृण सहित खाजाना अर्थः। **तर्णोति** =सतृणम् अत्ति। तृणोति (यदा संज्ञापूर्वको विधिः अनित्यः तदा न गुणः)। तृणके तुल्य समझना धातुका स्वाभाविक अर्थः।

(६) डुकृञ् = कृधातुका करणे = उत्पत्तिके अनुकूल व्यापारो अर्थः। अनिट् उभयपदी सकर्मकः। डु इत्‌का फल क्त्रिप्रत्यय। कुलालः घटं करोति। उत्पत्ति फल घटमें तदनुकूल क्रिया कुलालमें। उत्पत्तिजनक क्रियावाचक कृधातुसे वर्तमान क्रियाकाले लट् तिप तनादिभ्यः उः, उकारपरे ऋकारस्य गुणः। एवं तिपरे उकारस्य गुणः करोति। कृ + तस् उ प्रत्यये। गुणे करुतस् ततः।

(७) उत् = उ प्रत्यय अन्तमें हो ऐसे कृञ धातुके अको ह्रस्व 'उ' हो। सार्वधातुककित् ङित् प्रत्यय परे। तस् ङित् है। उसके परे 'क' में अ को उ हो गया। कुरुतः। ङित्वात् गुणो न भवति। (८) भसंज्ञक कुर् छुर् की उपधाको दीर्घ न हो। कुर्वन्ति। कृ उ अन्ति। 'उ' विकरणस्य यणि। ऋस्थाने 'अर्' गुणे 'अत् उत् सार्वधातुके' इति अकारस्य उकारे 'हलिचेति' उकारस्य दीर्घे प्राप्ते। नभकुर्छुरामिति निषेधे। त्वं किं करोषि ? अहं घटं करोमि। यूवां किं कुरुथः ? आवां मालां कुर्वः। यूयं किं कुरुथ ? वयं चित्रं कुर्मः। (९) कृधातुसे परे प्रत्ययरूप उकारका नित्य लोप हो। (म, व) परे। (ऊकार लोप होनेसे कुर्वः कुर्मः बना। आत्मनेपद (जहाँ क्रियाका फल कर्तृगामी हो)। चैत्र चित्रं कुरुते। कुर्वाते। कुर्वते। कुरुषे। कुर्वाथे। कुरुध्वे। कुर्वे कुर्वहे कुर्महे। उत्पत्तिके अनुकूलक्रियापरोक्षकालमें समास हो तब चकार। कृ कृ कर् कृ ककृ चकृ अ गुणे उपधावृद्धिः, चक्रतुः चक्रुः। चकर्थ चक्रथुः। चकार। चकृव चकृम। चक्रे चक्राते चक्रिरे। श्वः घटं कर्ता। करिष्यति करिष्यते, गृहं करोतु। कुरुतां कुर्वातां कुर्वताम्। कुरुष्व कुर्वाथां कुरुध्वम्। करवै करवामहै। कुरुतात् कुरुतां कुर्वन्तु। कुरु कुरुतात् करवाणि। **अकरोत्**। अनद्यतन-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

कर्तासि, कर्तासे। करिष्यति, करिष्यते। करोतु, कुरुताम्। अकरोत्, अकुरुत।

६८० ये च ६।४।१०९। कृञ उलोपः स्याद्यादौ प्रत्यये परे। कुर्यात्, कुर्वीत। क्रियात्, कृषीष्ट अकार्षीत, अकृत। अकरिष्यत्, अकरिष्यत। १ सम्परिभ्यां करोतौ भूषणे ६।१।१३७। २ समवाये च ६।१।१३८। सम्परिपूर्वस्य करोतेः सुट् स्याद् भूषणे संघाते चार्थे। संस्करोति=अलङ्करोतीत्यर्थः। संस्कुर्वन्ति=सङ्घीभवन्तीत्यर्थः। सम्पूर्वस्य क्वचिद् अभूषणेऽपि सुट्। 'संस्कृतं भक्षाः' इति ज्ञापकात्। ३ उपात् प्रतियत्न-वैकृत-वाक्याध्याहारेषु च ६।१।१३९। उपात् कृञ सुट्

---

क्रिया समाप्तिकाले लङ्। कपालम् अकुरुतां, पात्राणि अकुर्वन् त्वं शूर्पम् अकरोः। कुद्दालं परशुञ्च अकुरुतम्। अकुरुत। अकरवम् अकुरुव अकुरुम। अकुरुत अकुर्वाताम् अकुर्वत। अकुरुथाः अकुर्वाथाम् अकुरुध्वम्। अकुर्वि अकुर्वहि अकुर्महि। करणानुकूलव्यापारविषयक विधि आज्ञा, प्रेरणा आशीर्वादकी सम्भावनामें विधिलिङ् कृ उ यासत् उ प्रत्ययपरे ऋकारस्य अर् गुणे अकारस्य अत् उत् इति सूत्रेण उकारे ततः।

( ६८० ) कृसे परे उकार का लोप हो यकारादि प्रत्ययपरे इति उप्रत्ययस्य लोपः हलिच इति दीर्घस्य न भकुर इति निषेधः। कुर्यात कुर्यातां कुर्युः। कुर्याः कुर्यातं कुर्यात कुर्यां कुर्याव कुर्याम। कुर्वीत कुर्वीयातां कुर्वीरन्। कुर्वीथाः। उत्पत्ति क्रियाविषयक आशीर्वादे अर्थे लिङ्। क्रियात् रिङ्शयलिङ्क्षु इति ऋकारस्यरिङ्। कृषीष्ट उश्च इति सूत्रेण कित्, तस्य फलं गुणो न। अकार्षीत् = अडादिकार्ये सिच् वृद्धिः, षत्वे। अकार्ष्टाम् अकार्षुः। अकार्षीः अकार्ष्टम् अकार्ष्ट। अकार्षम्। अकृत ह्रस्वादङ्गात् इति सिचो लोपः अकृषाताम् अकृषत। अकृथाः। अकरिष्यत्। ( १ ) सम और परि उपसर्गसे कृ धातुको सुट् हो भूषण, अलङ्कार, अर्थमें सुट्के टित् होनेसे कके पहले स् हो सुट्का अलङ्कार अर्थ।

( २ ) समवाय = समुदाय अर्थमें भी सुट् समझें। माता कन्यां संस्करोति = अलंकृत करती है। यहाँ सुट्का सजाना सुशोभित, अलंकृत करना आदि अर्थः। सम्परीभ्यांसे सुट् संस्कुर्वन्ति, यहाँ सुट् होनेसे संघ, समुदाय, समवाय, अर्थ हुआ। संघीभवन्ति। इकट्ठे होते हैं। संघटन-बढ़ रहे हैं। समपूर्वक कृधातुको अभूषणाऽपि -भूषण अर्थ न होनेपर भी सुट् देखा जाता है। इसमें प्रमाण संस्कृतं भक्षाः। यहाँ भक्षणकी वस्तु ( अन्नं संस्करोति ) में सुट् देखा गया है। उसका सजाना अर्थ नहीं है। ( ३ ) उप उपसर्गसे परे कृञ्को सुट् आगम हो। एषुअर्थेषु - प्रति-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्यादेष्वर्थेषु चात् प्रागुक्तयोरर्थयोः। प्रतियत्नो—गुणाधानम्। विकृतमेव वैकृतं—विकारः। वाक्याध्याहारः—आकाङ्क्षितैकदेशपूरणम्। उपस्कृता कन्या। उपस्कृताः ब्राह्मणाः। एधो दकस्योपस्कुरुते। उपस्कृतं भुङ्क्ते। उपस्कृतं ब्रूते। वनु याचने। ७। वनुते। ववने। मनु अवबोधने। ८। मनुते। मेने। मनिता। मनिष्यते। मनुताम्। अमनुत। मन्वीत। मनिषीष्ठ। अमनिष्ट। अमत। अमनिष्यत। इति तनादयः।

---

यत्न, विकार, वाक्याध्यहार, अर्थों में भी चात् = चकारसे प्रागुक्तयोः = पहले कहे गये अलंकार संघ, आदि अर्थमें भी हो। प्रतियत्नका गुणाधान=गुणोंका रङ्ग चढ़ाना अर्थमें सुट्। जो वस्तु विकृत है, उसीको वैकृत कहते हैं। ( विकारः ) वाक्याध्याहार करके आकाङ्क्षित वाञ्छित शब्दसे एकदेशको पूराकरना। उपस्कृता कन्या यहाँ सुट्का कन्याको अलंकृत करना अर्थ है। उपस्कृताः ब्राह्मणाः। यहाँ सुट्से संघ अर्थ सिद्ध है। ब्राह्मण इकट्ठे हुए एधोदकस्य—यहाँ एधस् शब्द सान्त, नपुंसकलिङ्ग काष्ठवाची है। क्वाथ ( उबाल ) आदिमें लकड़ी जलके गुणको ग्रहण करती है। उपस्कृतं भुङ्क्ते। यहाँ विकार अर्थमें सुट् है, विकृतभोजन खाता है। उपस्कृतं ब्रूते। वाक्यका अध्याहार करके बोलता है। सुट्का वही अर्थ है।

( ७ ) उकार इत् वन धातुका याचन = माँगनेके अनुकूल क्रिया है। भिक्षुकः भिक्षां वनुते। वन, उ, ते भिक्षा मांगनेके वर्तमानकालिकक्रिया। वन्वाते वन्वते वनुषे वन्वाथे। ववने। परोक्ष भूतकालकी याचन क्रिया आदि शब्द इसीधातुके रूप हैं। वनिता। आश्रय जाँचने वाली। ववने 'अत एकहल्मध्येसे प्राप्त एत्व अभ्यास लोपका ( न शसददवादिगुणानां ) से निषेध। ( ८ ) उदित मन्धातुका अवबोधन ज्ञान, स्वीकार, माननेके अनुकूलक्रिया अर्थः। आत्मानं पण्डितं मनुते। शप्के स्थान में उप्रत्यय। शिष्यौ गुरुं मन्वाते। सेवकाः वेतनं मन्वते। मनुषे मन्वाथे। मन्वे मन्वहे ( म, व ) परे उकारलोपः। मानने स्वीकार करने, ज्ञान होनेकी परोक्ष भूतकालिक क्रिया अर्थमें लिट् आत्मनेपदे 'त'—एश् ( मन मन् ए ) हलादिशेषः। एत्वे अभ्यास लोपे मेने श्वः विचारं मनिता। स सदा भवदाज्ञां मनुताम्। यथा—मातुः अमनुत। विदुषां सेवां मन्वीत्। मनिषीष्ट। अमनिष्ट अमनिषाताम् अमनिषत। तनादिभ्यस्तथासोः इति सूत्रेण तथ परे। यदा सिचोलोपो भवति, तदा अनुदत्तापदेश अनुनासिक नकारस्य लोपे सति। अमत अमनिषाताम् अमनिषत।

इति प्रभाकर्यां तनादयः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## ९—अथ क्र्यादयः

डुक्रीञ् द्रव्यविनिमये । १ । ४ क्र्यादिभ्यः श्ना ३ । १ ८१ । शपोऽपवादः । ( ६१८ ) ई हल्यघोः । क्रीणीतः । ( ६१९ ) श्नाभ्यस्तयोरातः । क्रीणन्ति । क्रीणासि । क्रीणीथः । क्रीणीथ । क्रीणामि । क्रीणीवः । क्रीणीमः । क्रीणीते । क्रीणाते । क्रीणते । क्रीणीषे । क्रीणाथे । क्रीणीध्वे । क्रीणे । क्रीणीवहे । क्रीणीमहे । चिक्राय । चिक्रियतुः । चिक्रियुः । चिक्रेथ, चिक्रयिथ । चिक्रीये । क्रेता । क्रेष्यति, क्रेष्यते । क्रीणातु, क्रीणीतात् । क्रीणीताम् । अक्रीणात्, अक्रीणीत । क्रीणीयात्-क्रीणीत । क्रीयात्, क्रेषीष्ट । अक्रेषीत्,

---

( ९ ) अथ क्यादि—इस प्रकरण का भेदक धर्म श्ना विकरण शप् का अपवाद है । ( १ ) डुञ् इत् क्रीधातु का द्रव्य विनिमय खरीदना, किसी वस्तु या द्रव्य को देकर कोई वस्तु लेना । लोक में वि उपसर्ग से विक्रय अर्थः । केवल क्री मे क्रयके अनुकूलक्रिया अर्थः । द्रव्य विनिमयकी क्रियावाचक क्रीधातोः प्रचलितक्रयण क्रियावर्तमाने कर्तरि लट्, ति, शपं वाधित्वा । ( ४ ) क्री आदि धातुओं से श्ना प्रत्यय हो शप्को बाधकर शकार इत् । प्रकृतिप्रत्ययमध्ये क्रीनाति णत्वे । पुस्तकं क्रीणाति । फले क्रीणीतः अत्र श्ना आकारस्य 'हलि' अघोः' सूत्रेण ईत्वे । जनाः मेलायां मिष्ठान्नं क्रीणन्ति । झो अन्तः । श्ना आकारस्य श्नाभ्यस्तयोः लोपः । त्वं क्रीणासि । यूवां क्रीणीथः । यूयं क्रीणीथ । अहं क्रीणामि । आवां क्रीणीव, वयं क्रीणीमः । ङिद्वत्स्थले आकारस्य ईत्वम् । क्रीणीते । अपित् ङित् स्थले श्ना आकारस्य ईकारे हलिपरे । यत्र हलिपरे नास्ति तत्र श्ना श्नाभ्यस्तयोः आकार लोपे यथा—क्रीणाते क्रीणते क्रीणीषे क्रीणाथे क्रीणीध्वे । क्रीणे क्रीणीवहे । स कदा सकलानि पुस्तकानि चिक्राय । इति अहं न जाने । द्रव्य विनिमय ( खरीदने ) के परोक्षभूतकालिक क्रिया । क्री लिट् णल् = अ द्वित्वे अभ्यास आदिकार्ये द्वितीयस्य इकारस्य अचोऽञ्णिति 'ऐ' वृद्धिः । आय आदेशे रुपम् । ते शाटिकां विक्रियतुः अत्र अतुस् कित् अस्ति । तस्यफलं गुण निषेधः । ततः अचिश्नु इतीयङ् । ताः चिक्रियुः । एवं चिक्रिये चिक्रियाते चिक्रयिरे । चिक्रेयिथ अत्र नित्यम् इट् । श्वः पीतवस्त्रं क्रेता । कृष्णाङ्गारं क्रेष्यति । सर्वे क्रीणन्तु । भवान् सम्पन्नः । क्रीणीतात् क्रीणीताम् । क्रीणीहि क्रीणीतं क्रीणीत । क्रीणानि क्रीणीव क्रीणीम । क्रीणीतां क्रीणातां क्रीणताम् । क्रीणीष्व । क्रयणक्रिया की अद्यभिन्नभूतकाल में लङ् अक्रीणात् गोपालः दधि । वनेचरो सोमम् आक्रीणीताम् पालाः मेषान् अक्रीणन् । अक्रीणाः अक्रीणीत । अक्रीणम्, अक्रीणीव अक्रीणीम । आत्मनेपदे अक्रीणीत् । अक्रीणाताम् अक्रीणत ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अक्रेष्ट । अक्रेष्यत्, अक्रेष्यत । प्रीञ् तर्पणे कान्तौ च । २ । प्रीणाति, प्रीणीते । श्रीञ् पाके । ३ । श्रीणाति । श्रीणीते । मीञ् हिंसायाम् । ४ ।

६८५ हिनु-मीना ८ । ४ । १५ । उपसर्गस्थान्निमित्तात् परस्यैतयो र्नस्य णः स्यात् । प्रमीणाति, प्रमीणीते । (६३८) मीनातीत्यात्वम् । ममौ । मिम्यतुः । ममिथ, ममाथ । मिम्ये । माता । मास्यति । मीयात् । मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त । षिञ् बन्धने । ५ । सिनाति, सिनीते ।

---

अक्रीणीथाः । अक्रीणे क्रीणीयात् । सीयुट् परे श्ना आकारस्य लोपः । हलादिपरे श्ना आकारस्य ईत्वम् । अजादिपरे आकारलोपे । क्रीणीयाताम् क्रीणीयुः क्रीणीयुः क्रीणीथाः क्रीणीथाम् क्रीणीत क्रीणीयाताम् क्रीणीरन् । अक्रैषीत्—क्रयणक्रिया भूतकाले लुङ् अ क्री स् ई त् । इगन्ताङ्गस्य वृद्धिः, सिच् परे सकारस्य षत्वे रुपम् । अक्रैष्टाम् अक्रैषुः । अक्रैषीः अक्रैष्टम् अक्रैष्ट । अक्रैषम् अक्रैष्व अक्रैष्म । अक्रैष्यत् विक्रय अर्थ में परिव्यवेभ्यः क्रियः से आत्मनेपद ही होता है ।

( २ ) ञकार इत् प्रीधातु का तर्पणं तृप्तिः सन्तुष्टिः प्रसन्न होना, कान्तिः — इच्छा करने के अनुकूल क्रिया अर्थः । अनिट् उभयपदी सकर्मकः । शैवः शिवं प्रीणाति । सन्तुष्टि या इच्छा का आधार शिव है । प्रसन्न करने के अनुकूल क्रिया शैव ( शिवभक्त ) में है । पिप्राय पिप्रिये, प्रेता, प्रेष्यति । प्रीणातु । अप्रीणात् । अप्रीणीत । अप्रैषीत् अप्रेष्ट । ( ३ ) एवं श्री श्रीणाति सीरा में पकाता है । श्रीणीते । शिश्राय शिश्रिये, श्रेता, श्रेष्यति अश्रैषीत् । ( ४ ) मीधातु का हिंसा परपीडा, प्राण वियोगजनकव्यापारो अर्थः । सकर्मक, उभयपदी, अनिट् । सिंहः शशकं मीनाति । कुक्कुटं प्रमीणीते ।

( ६८५ ) उपसर्ग में स्थित णत्व का निमित्त 'इ' 'ष' से परे हिनु, मीनाके न को 'ण' हो : मीनातिमिनोतिदीङाल्यपिच सूत्र से 'मी' के ई को आत्व हुआ । मा मा णल् स्थाने औ 'आत् औ णलः' । वृद्धिः । ममौ । हिंसा की परोक्ष भूतकाल की क्रिया ( श्वानौ शृगालं मिम्यतुः ) मिमि द्वित्वे अतुस् परे यण् आदिकार्यें । आत्व केवल तिप् सिप् मिप् में ही होता है । मिम्युः सिप् स्थाने थल् परे मीनाति मिनोति इति आत्वम् । द्वित्वादिकार्ये । तास् परे नित्यम् अनिट्, अजन्त अकारवान् धातुः भारद्वाज मते इट् । आतोलोप इटच' इति आकारलोपे । ममिथ । इट अभावे । ममाथ त्वं शशकान् । कदा मत्कुणं मिम्ये । एशपरे यण् । माता ( हिंसा कर्ता ) मास्यति ( प्राणवियोगं करिष्यति ) मीयात् मासीष्ट, अत्र आत्वे कृते यम्रम् नमातांसक्च इति सक् । इट् कृते अ मा स् इ त् । इटः ईटि सलोपे, दीर्घे रुपम् । अमासिष्टाम् अमासिष्ट । अमासिषम् । अमास्त च्लि सिच् । अमासाताम् अमासत ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सिषाय, सिष्ये। सेता। स्कुञ् आप्लवने। ६। ६ स्तन्भु-स्तुन्भु-स्कन्भु-स्कुन्भु-स्कुञ्भ्यः श्नुश्च ३।१।८२। एभ्यः श्नुप्रत्ययः स्यात् चात् श्ना। स्कुनोति, स्कुनाति। स्कुनुते, स्कुनीते। चुस्काव, चुस्कुवे। स्कोता। अस्कौषीत्, अस्कोष्ट। स्तन्भ्वादयश्चत्वारः सौत्राः। सर्वे रोधनार्थाः परस्मैपदिनः। ७ हलः श्नः शानज्झौ ३।१।८३। हलः परस्य श्न शानजादेशः स्याद् हौ परे। स्तभान। ८ जॄ स्तन्भु-म्रुचु म्लुचु-ग्रुचु-ग्लुचु-ग्लुञ्चु-श्विभ्यश्च ३।१।५८। च्लेरङ् वा स्यात्। ९ स्तन्भेः ८।३।६७। स्तन्भे सौत्रस्य सस्य षः स्यात्। व्यष्टभत्, अस्तम्भीत्। युञ् बन्धने। ७। युनाति, युनीते।

---

अमास्थाः अमासाथाम् (५) ञित्, उभयपदी, अनिट्। षिधातुका वन्धन के अनुकूल-क्रिया अर्थः। वृषभं सिनाति वत्सं सिषाय। पोटकं सिष्ये। सेता, सेष्यति, सिनातु, असीनात्, सीयात् असैषीत् असैष्टाम् असैषुः। असित असिषाताम् असिषत। असिथाः। (६) स्कुधातु का आप्लवनम्=गतिविशेष, चारों ओर ऊछलकूद, जल में चतुर्दिक तैरना। आप्लवन की क्रिया के वर्तमान काल में लट् स्कुति ततः।

(६) स्तन्भु स्तुन्भु इत्यादि सूत्रपठितधातुओं से श्नु विकरण है। चकारसे श्ना भी हो। इतिश्नुः गुणः स्कुनोति। पक्षे स्ना स्कुनाति। वत्तख तैरता है। कठपुतली नाचती है। काष्ठपुत्तलिका चुस्काव कुष्काव परोक्षकालिक उछलकूद की क्रिया। स्कुको द्वित्वादिकार्यं शर्पूर्वाः खयः शिष्यते। कपिः श्वः स्कोता। स्कौषीत्। स्तन्भु आदि चार धातुएँ सौत्राः=सूत्रमें पठित हैं। धातुपाठमें नहीं। ये सभी रोधनार्थक (रोकने) अवरोध अर्थवाले परस्मैपदी हैं। (७) हल से परे श्नाके स्थानमें शानच् आदेश हो। हिपरे। यहाँ श्नः इति श्नाशब्दस्य षष्ठी—विभक्तेः एकवचने रुपम्। ('आतो धातोः' सूत्रके (आतः) योग विभागसे अधातुके भी अकारलोप होने से श्नाङ्स् अकार लोप हुआ) श्नः वना। स्तभान—रोधनार्थक स्तन्भ इति सौत्रधातोः प्रेरणा अर्थे लोट्, सिप्, हि, श्ना, स्तन्भ हि। अनिदितामिति न लोपः। हलः श्नः इति सूत्रेण श्नास्थाने शानच्—आन। अतोहेः इति हेर्लोपः। (८) नृ स्तन्भु म्रुचु इत्यादि सूत्रपठितधातु और श्वि धातुओंसे परे च्लिको अङ् आदेश विकल्पसे हो। (९) सूत्रपठित स्तन्भ धातुके सको ष हो। व्यष्टभत्। विउपसर्ग स्तन्भधातोः भूतकालिकक्रियार्थे लुङ् तिप् च्लिस्थाने जृस्तम्भसूत्रेण अङ्=अ, ङित् अस्ति। अनिदितामिति नकारस्य लोपे। स्तन्भु इति सूत्रेण सकारस्य षत्वे ष्टुत्वे, अटि, यण् रुपम्। यदा च्लिस्थाने सिच् तदा इट ईट् सिचो लोपे, दीर्घे। स्तन्भीत् गोकर्णः सूर्यम्। यु धातुका बन्धन अर्थ है। सकर्मकः अनिट्। यशोदा कृष्णं युनाति। दुर्वाशा राधाकृष्णौ युयाव। युयुवे। कृषकः वत्सानि योता योष्यति, युनातु, अयुनात्, युनीत, युषीष्ट अयौषीत्। अयौष्टाम्, इत्यादि (८)

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

योता। क्नूञ् शब्दे। ८। क्नूनाति, क्नूनीते। क्नविता। दॄञ् हिंसायाम्। ९। दृणाति, दृणीते। द्रूञ् हिंसायाम्। १०। द्रूणाति, द्रूणीते। पूञ् पवने। ११।

६९० प्वादीनां ह्रस्वः ७। ३। ८०। पूञ् लूञ् स्तॄञ् कॄञ् वॄञ् धूञ् शॄ पॄ वॄ भॄ मॄ दॄ जॄ झॄ धॄ नॄ कॄ ॠ गॄ ज्या री ली व्ली प्लीनां चतुर्विंशतेः शिति ह्रस्वः। पुनाति, पुनीते। पविता। लूञ् छेदने। १२। लुनाति, लुनीते। स्तॄञ् आच्छादने। १३। स्तृणाति। ( ६४८ ) शर्पूर्वाः खयः। तस्तार। तस्तरतुः। तस्तरे। स्तरिता, स्तरीता। स्तृणीयात्, स्तृणीत। स्तीर्यात्।

---

क्नू धातुका शब्दे कुँ कूँ की आवाज करना, सेट् अकर्मक। मूषकः क्नुनाति। वराटिका चुक्नाव चुक्नुवे। वत्सः क्नविता। अक्नावीत्। अक्नविष्ट। ( ९ ) दृधातु हिंसार्थक है। दृणाति। सिंह हरिणम्। व्याघ्रः अजांददार, ददरे। कालः त्वां दर्ता। दरिष्यति, दरिष्यते। भावान् वृश्चिकं दृणातु दृणीताम्। यथा—हस्ती क्षेत्रं अदृणत्, अदृणीत, दृणीयात्। द्रियात्। दृषीष्ट। मार्जारी मूषकं अदार्षीत्, अदृत।

( १० ) द्रुधातुभी हिंसार्थक है। वकः मत्स्यं द्रुणाति। हस्ती वृक्षं दुद्रुवे, दुद्राव, । वृषभः क्षेत्रं द्रविता। टिड्डीदलं शस्यान् द्रविष्यति द्रविष्यते। हनुमान अशोकवाटिकां अद्रुणात् अद्रावीत् अद्रविष्ट (११) ञ् इत् पू धातुका पवन (पवित्र) शुद्धिके अनुकूलव्यापारो अर्थः। सेट् सकर्मक। ( ६९० ) प्वादीनाम् पूञ् पवने छेदनार्थकलूञ्, आच्छादनार्थक स्तॄ, हिंसार्थककॄञ्, स्वीकरणार्थक वॄञ् कम्पनार्थक धूञ्, हिंसार्थकशॄ, पालनार्थक पॄ, पोषणार्थक भॄ, प्राणवियोगार्थक मॄ हिंसार्थक दॄ, जीर्णार्थक जॄ—झॄ, धारणार्थक धॄ विनाशार्थक नॄ, गत्यर्थक ॠ, निगलनार्थक गॄ वयोहानि—अर्थे ज्या, हिंसार्थक री मेलनार्थक ली, स्वीकारार्थक व्ली, गमनार्थक प्ली, इन चौबीस धातुओंको शित् प्रत्ययपरे ह्रस्वहो। अग्निः अशुद्धं वस्तु पुनाति। पवनार्थकपूधातोः प्रचलित क्रिया वर्तमाने लट् तिप् श्ना, शित् परे ऊकारस्य ह्रस्वः सूर्यः सर्वं पुनाति। पुपाव पुपुवे। गङ्गा पविता। सर्वान् पविष्यति। शिवः पूयात् पविषीष्ट अपावीत् अपविष्ट। ( १२ ) लू धातुका छेदन कर्तन, काटना अर्थजनक क्रिया सेट् सकर्मक। क्षेत्रं लुनाति। शष्यं लुनीते। लुनातु, अलावीत् अलविष्ट। लविता लविष्यति। लुनीयात् लूयात् लुनिषीष्ट।

( १३ ) स्तॄधातुका आच्छादन, ढकना, फैलाना आवरण, अर्थजनकव्यापारः। स्तृणाति। चादरसे समान ढकता है। शर्पूर्वक—( स ष श ) खय् प्रत्याहारके अक्षरपरे हो तो खय्प्रत्याहारका अक्षर ही शेष रहता है। कुशान् तस्तार= आच्छादनकी परोक्षकालिकसमाप्तक्रिया अर्थे लिट् तिप् णल् द्वित्वादिकार्ये शर्पूर्वाः



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

१ लिङ्सिचोरात्मनेपदेषु ७ । २ । ४२ । वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड् वा स्यात्तङि ।

२ न लिङि ७ २ । ३९ । वृत इटो लिङि न दीर्घः । स्तरिषीष्ट । (५४४) उश्चेत्यनेन कित्वम् । स्तृषीष्ट, (६१६) सिचि च परस्मैपदेषु । अस्तारीत् । अस्तारिष्टाम् । अस्तारिषुः । अस्तरीष्ट, अस्तरिष्ट अस्तीर्ष्ट । कॄञ् हिंसायाम् । १४ । कृणाति, कृणीते । चकार, चकरे । वॄञ् वरणे । १५ । वृणाति, वृणीते । ववार, ववरे । वरिता, वरीता । (६११) उदोष्ठ्येत्युत्वम् । वूर्यात् । वरिषीष्ट, वूर्षीष्ट । अवारीत् । अवारिष्टाम् । अवरिष्ट, अवरीष्ट, अवूर्ष्ट । धूञ् कम्पने । १६ । धुनाति, धुनीते । धोता, धविता ।

---

खयः सूत्रसे अभ्यासका खय् ( त ) शेष रहा । स का लोप । उत्तरखण्डस्य ऋकारस्य ऋच्छत्यृतामिति, गुणः । अत उपधायाः वृद्धिः । सेवको विस्तरं तस्तरुः । तस्तरे श्वः षटवां स्तरिता । वृतोवा इति इट् स्थाने दीर्घविकल्पे । स्तरीता । स्तृणातु अस्तृणात् स्तृणीयात् । स्तृणीत । स्तीर्यात् । यासुट्परे ऋत इद्धातोः इति सूत्रेण इर् आदेशे । हलिचेति दीर्घे । आच्छादनार्थक'स्तृ'धातोः आशीर्वादार्थे लिङ् आत्मनेपदे'त'सीयुट् सुट् अनुबन्धलोपे ततः । ( १ ) वृङ् वृञ् और ऋदन्त धातुओंसे परे लिङ् और सिच् को इट् हो विकल्पसे आत्मनेपदपरे रहते इति वा इट् । ( २ ) ऋकारस्य गुणे वृङ् वृञ् ऋदन्त धातुसे परे इट्को दीर्घ न हो । षत्वे ष्टुत्वे स्तरिषीष्ट । इट् अभावपक्षे उश्च इति सूत्रेण सीयुट् कित् भवति । तस्य फलं गुणनिषेधः ऋकारस्य इर् आदेशः । हलिचेतिदीर्घे । षत्वे ष्टुत्वे स्तरिषीष्ट । प्रकृतिः आकाशम् अस्तारीत् अस्तृईस् ईत् । सिच्परे इगन्ताङ्गस्य ऋकारस्य आर् वृद्धिः । वृतोवा इतिदीर्घः । प्राप्नोति'न सिच् परस्मैपदेषु इति न दीर्घः । स्तारिष्टाम् स्तारिषुः । अस्तृस्त लिङ्सिचोः इति इट् । ऋकारस्य गुणः वृतोवा इति दीर्घे अस्तरीष्ट । यदा न दीर्घः अस्तरिष्ट । यदा इट् न तदा उश्च इति सिच् कित् भवति । ऋकारस्य इर् आदेशे, दीर्घे, षत्वे ष्टुत्वे स्तीर्ष्ट । ( १४ ) कृधातुका हिंसाजनक व्यापारोऽर्थः । स्तॄञ्धातोः तुल्यं रूपम् । ( १५ ) वॄञ्का भी वरण = स्वीकारजनक व्यापारो अर्थः । दाता वरं वृणाति । प्वादीनां ह्रस्वः यथा—नलः दमयन्तीं ववार । स्वीकार किया । बहवः कन्यां वरीतारः वरिष्यन्ति । रामः सीतां अवृणात् । अवृणीयात् वूर्यात् । यासुट् किदस्ति । उदोष्ठ्यपूर्वस्य इति सूत्रेण ऋकारस्य उर् आदेशे । हलिचेति दीर्घे । वरिषीष्ट । लिङ्सिचोरिति इट् विकल्पः । अवारीत् । अवरीष्ट । ( १६ ) धूधातुका कम्पन, कँपाना हिलाना, जनकक्रिया अर्थः सकर्मकः । स्वरतिसूतिसूयतिधूञ् ऊदितोवा इति इट् विकल्पे । धुनियाँ रुई धुनता है । धुनाति धुनीते वायुः । वृक्षं दुधाव दुधुवे ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अधावीत्, अधविष्ट, अधोष्ट। ग्रह उपादाने। १७। गृह्णाति, गृह्णीते। जग्राह, जगृहे।

३ ग्रहोऽलिटि दीर्घः ७।२।३७। एकाचो ग्रहेर्विहितस्येटो दीर्घो न तु लिटि। ग्रहीता। गृह्णातु। (६८७) हलः श्नः शानज्झौ। गृहाण। गृह्यात्। गृहीषीष्ट। (४६५) ह्म्यन्तेति न वृद्धिः। अग्रहीत्। अग्रहीष्टाम्। अग्रहीष्ट। अग्रहीषाताम्। कुष निष्कर्षे। १८। कुष्णाति। कोषिता। अश भोजने। १९। अश्नाति। आश। अशिता। अशिष्यति। अश्नातु।

---

धोता, धविता। इट् विकल्पः। धोष्यति धविष्यति, अधुनात्। अधावीत्। स्तुसुधूञ्भ्यः नित्यमिट्। अधविष्ट। (१७) ग्रहधातुका उपादान=ग्रहण स्वीकार फलजनक व्यापारो अर्थः। स्वरितेत्, सेट्, सकर्मकः। बालकः चोरस्यं गृह्णाति। उपादानार्थकग्रहधातोः लट्ति श्ना अपित्सार्वधातुकं ङिद्वत्। तस्यफलं ग्रहिज्या इति सूत्रेण रेफस्य ऋसम्प्रसारणम्। बालकः पुत्तलिकां गृह्णीते। कृषकौ हलं गृह्णीतः। स्त्रीयः जलघटं गृह्णन्ति। त्वं मधूकं गृह्णासि। गृह्णीथः गृह्णीथ। अहं पुस्तकं गृह्णामि। आवां लगुडं गृहह्णीव। वयं गृह्णीम। गृह्णीते गृह्णाते, गृह्णते। गृह्णीसे। जग्राह, जगृहे, जग्रहाते, जग्रहिरे। (३) एक अच् रूप ग्रहधातुसे विधान किया गया इट् को दीर्घ हो, अलिटि=लिट परे न हो तो ग्रहीता। स्वीकारार्थक ग्रह धातोः अद्यभिन्नभविष्यकाले अर्थे लुट् इट् आदि। ग्रहोअलिटि दीर्घः। इति दीर्घे ग्रहीष्यति, ग्रहीष्यते। गृह्णातु गृह्णीतात् गृह्णीताम् गृह्णन्तु। गृहाण अत्र हलः परस्य 'श्ना' स्थाने शानच्=आन कृते हेर्लुक्। गृह्णीत। गृह्णानि गृह्णीव गृह्णीम। गृह्णीताम् गृह्णाताम् गृह्णताम् अगृह्णत् अगृह्णीत गृह्णीयात् गृह्णीत गृह्यात् ग्रहीषीष्ट ग्रहोऽलिटि इति दीर्घः उपादानक्रियाके भूतकालमें अग्रहीत् इ स् ई त्। इट ईटि, सलोपे, सवर्ण दीर्घे, अत्र वदव्रजहलन्तस्याचः इति प्राप्तां वृद्धि 'नेटि' सूत्रेण निषेधे। विकल्पवृद्धिः ह्म्यन्त=क्षणश्वस् आदि सूत्रेण निषेधः। अग्रहीष्टाम् अग्रहीष्ठाः। अग्रहीषम् अग्रहीढ्वम्। अग्रहीष्यत् अग्रहीष्यत।

(१८ कुष धातुका निष्कर्ष=अन्तर्गतस्य वहिः निःसारणम्=खोदकर बाहर निकालने के अनुकूल किया। सेट्। तृणेन दन्तं कुष्णाति। बिलात् सर्पं चुकोप। अकोषीत्। (१९) अश का भोजन करना अर्थः। स मोदकम् अश्नाति। नकारस्य श्चुत्वं प्राप्तं शात् इति निषेधे। अश्नीतः अश्नन्ति। त्वं कर्पट्टिकां अश्नासि, अश्नीथः। अहं फलानि अश्नामि अश्नीवः अश्नीमः। शश्कुलीम् आशः श्रीफम् आशतुः। अशिता। तण्डुलम् अशिष्यति। भवान् ससुखम् अश्नातु अश्नीतां अश्नन्तु। त्वं घृतम् अशान। हलः श्नः इति श्ना स्थाने शानच्। अतः परस्य हेर्लुक्। अश्नीतं अश्नीत अश्नानि, अश्नाव अश्नाम। अनद्यतनभूतकालकी

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अशान। मुष स्तेये। २०। मोषिता। मुषाण। ज्ञा अवबोधने। २१। जज्ञौ। वृङ् संभक्तौ। २२। वृणीते। ववृषे। ववृढ्वे। वरिता, वरीता। अवरीष्ट, अवरिष्ट, अवृत।

इति क्र्यादयः।

## १०—अथ चुरादयः

चुर स्तेये। १। ४ सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो णिच् ३।१।२५। एभ्यो णिच् स्यात्।

---

क्रिया अर्थ में लङ्। आश्नात आश्नीताम् आश्नन्। आश्नाः आश्नीतम् आश्नीत। अहं जम्बूरसम् आश्नम्। अश्नीयात्। अश्नीयाः अश्नीयाम्। अश्यात्। आशीत आशिष्टाम्। आशिष्यत्। (२०) मुष्—धातुका स्तेयं चौर्यम् = चोरीकरना अर्थः। कृष्णः नवनीतं मुष्णाति चौरः चणकं मुमोष। मूषकः मोषिता) मोषिष्यति, मोहनोऽपि मुष्णातु। गोपीनां वस्त्रं अमुष्णात्। मुष्णीयात्। स सदा मुष्यात्। इन्द्रः अश्वं अमोषीत्। अमोषिष्यत्। (२१) ज्ञा—धातुका अवबोधन ज्ञानकरना अर्थः ज्ञाननेकी क्रियावर्तमान रहते जानाति। 'ज्ञाननोर्जा' सार्वधातुक लकारोंमें 'जा' करेगा। जानीतः जानन्ति त्वं मम गुणं जानासि। जानीथः जानीथ अहं सर्वं जानामि जानीवः जानीमः। जानीते जानाते जानते। तदपि च न जाने स्तुति महो। जज्ञौ ज्ञा ज्ञा ज्ञज्ञा णल् स्थाने औ आदेशे। वृद्धिः। जज्ञतुः। ज्ञाता, ज्ञास्यते, ज्ञास्यति। जानातु जानीतां जानन्तु। जानीहि जानीतं जानीत। जानामि जानाव जानाम। जानै जानावहै जानामहै। जानीयात् जानीयातां जानीयुः। जानीत जानीयातां जानीरन्। ज्ञेयात्। ज्ञायात् ज्ञासीष्ट अज्ञासीत्। अज्ञास्त अज्ञासाताम् अज्ञासत।

(२२) वृङ्धातुका सम्भक्ति = पूजा, दान, सेवाजनकव्यापार अर्थः। वृणीते वृणाते वृणते वृणीषे वृणाथे वृणीध्वे। वृणे वृणीहे वृणीमहे। वव्रे वव्राते वव्रिवे। ववृषे अत्र इट् निषेधः 'कृ, सृ' इति सूत्रेण। वरीता अवरीष्ट लिङ्सिचोः इति दीर्घे। दीर्घस्य अभावे अवरिष्ट, इट् अभावे ह्रस्वादङ्गात् इतिसिच्लोपः। अवृत इति प्रभाकर्यां क्र्यादयः।

(१०) अथचुरादयः (१) चुरधातु=चोरी करनेके अनुकूलक्रिया अर्थः। इस प्रकरणका भेदकधर्म स्वार्थमें णिच् प्रत्यय है। यह सकर्मक सिद्ध है। स्तेयार्थ-जनक क्रियावाचक चुरधातोः णिच्। (४) सत्यापपाशरूपवीणा तूल श्लोक, सेना

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

चूर्णान्तेभ्यः 'प्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम्। चुरादिभ्यस्तु स्वार्थे। (४५१) पुगन्तेति गुणः (४६८) सनाद्यन्ता इति धातुत्वम्। तिप् शबादि। गुणायादेशौ। चोरयति। ६९५ णिचश्च १। ३। ७४। णिजन्तादात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले। चोरयते। चोरयामास। चोरयिता। चोर्यात्। चोरयिषीष्ट (५१८) णिश्रीति चङ्। (५३०) णौ चङीति ह्रस्वः। (५३१) चङीति द्वित्वम्। (३९६) हलादिः

---

लोमन् त्वच् वर्मन्वर्णचूर्ण इन शब्दोंसे तथा चुरादिगणपठित धातुओंसेपरे णिच् हो, ण् च् इत्। चुर इति स्थिते चूर्णान्तेभ्यः = सत्यापसे लेकर चूर्णपर्यन्तशब्दोंको प्रातिपादिकसे धातुके अर्थमें णिच् विधान सिद्ध था। तेषामिह = उन शब्दोंका यहाँ ग्रहण करना प्रपञ्चार्थम् प्रातिपदिकोंको बिस्तारसे समझनेके लिए है। यहाँ अनुपयोगी है तथापि सत्यापयति = सत्यप्रमाणित करता है। पाशयति = पाशं करोति रुपयति = चित्र बनाता है। वीणांकरोति वीणयति। अवीविणत्। तूलयति (धुनकर, रुई, बनाता है)। श्लोकयति श्लोक बनाता है। सेनायति = सेनाका संगठन करता है। लोमयति, त्वचमति, वर्मयति, वर्णयति, चूर्णयति। यहाँ तक णिच् प्रत्यय का धात्वर्थ करोति या आचष्टेसे विवृत है। चुरादिधातुसे णिच् स्वार्थ में हो। स्वं प्रकृति (चुर्) तस्य अर्थः स्वार्थ चोरीके अनुकूल क्रिया। स्वार्थे भवः स्वार्थिको णिचप्रत्ययः इसका प्रकृतिसे भिन्न कोई विशेष अर्थ नहीं है। चुर् इ अत्र णिच् आर्धधातुक संज्ञकः पुगन्तलघूपधस्य च इति उपधा उकारस्य गुणे चोर् इ = चोरि इत्यस्य सनाद्यन्ताः धातवः इति धातुसंज्ञा। ततः लट् तिप् शप् इकारस्य गुणे अयादेशे। चोरयति नवनीतं कृष्णः। स्तेयफल नवनीतमें तदनुकूल क्रिया कृष्णमें। इदं सकर्मकस्य लक्षणम्।

(६९५) णिच्प्रत्यय अन्तमें हो। उससे आत्मनेपद हो। यदि क्रियाकाफल कर्ता को मिले तो। इससे उभयपदी सिद्ध है। वानरः फलं चोरयतेः चोरयेते, चोरयन्ते। चौर्यकर्मकी अद्यभिन्नपरोक्षभूतकालमें समाप्तक्रिया हो। तव ब्रह्मा वत्सानि चोरयामास। (कास् अनेकाजाम्वक्तव्यो' लिट्)। अनेकाच् धातुसे आम् कृ भू अस्का अनुप्रयोग होकर चोरयामासकी सिद्धि। चोरयाञ्चकार, अनेकाच् सभीधातु सेट्' होते हैं। श्वः पात्रं चोरयिता। 'चोरि' धातु बनानेकी विधि, पूर्ववत्। अद्यभिन्नभविष्यकाले चौर्ये अर्थे लुट, तास् तिप, डा, इट, गुणे अयादेशे। असभ्याश्चोरयिष्यन्ति। तस्यापि कमण्डलुं चोरयतु। यथा—मम अचोरयत्। यदि तस्य पुस्तकानि चोरयेत्। त्वं सदा चोरयेः। अत्र णेरनिट् सूत्रेण णिचोलोपे निमित्तापाये नैमित्तिकस्यापि अपायः। कारणहटनेसे कार्य भी हटता है। णिच्के लोपसे गुणका अभाव नहीं होगा क्योंकि प्रत्ययलोपे प्रत्ययलक्षणं से णिच्की सत्ता

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शेषः । ( ५३४ ) दीर्घो लघोरित्यभ्यासस्य दीर्घः । अचूचुरत् । अचूचुरत ।
कथ वाक्यप्रबन्धे । २ । अल्लोपः ।

६ अचः परस्मिन् पूर्वविधौ । १ । १ । ५७ । परनिमित्तोऽजादेशः स्थानिवत् स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इति स्थानिवत्त्वान्नोपधावृद्धिः । कथयति । अग्लोपित्वाद्दीर्घसन्वद्भावौ न ।

---

मानी जायेगी । भगवान् सदा पापानि चोरयिषीष्ट । चोरि इ सीस् त । इकारस्य गुणे अयादेशे सकारयोः षत्वे ष्टुत्वे रूपम् । स्तेयकर्मके भूतकाले लुङ् णिच् अट् त, अचोरि-त अत्र च्लिस्थाने णि श्रिद्रुस्रुभ्यः कर्तरिचङ् ( अ ) प्रत्यय । अचोरि अत् । णौचङि उपधायाः ह्रस्वे ( चङ् परक णिपरे उपधायाः ओकारस्य ह्रस्वउकारे ) चुर् इत्यस्य 'चङि' सूत्रेण द्वित्वे । अभ्याससंज्ञा हलादिशेषे अचुचुर इ अ त । अत्र सन्वलघुनिचङ्परे आदि सूत्रेण सन्द्भावे । तस्य फलं ( दीर्घोलघोः ) इति अभ्यास—उकारस्य दीर्घे णेरनिटि इति णिलोपे । आत्मनेपदे अचूचुरत अचोरयिष्यत् । ( २ ) कथ-धातुका वाक्यप्रबन्ध=अपने शब्दसे बोलना, प्रवचन ( कथा कहने के अनुकूल क्रिया अर्थः । अल्लोपः । कथ् धातुसे स्वार्थमें णिच् प्रत्यय आनेपर अतोलोपः सूत्रेण अन्त्य अकारका लोप हुआ ।

( ६ ) परस्मिन् = परको निमित्तमानकर अचः = अच्के स्थानमें आदेशको स्थानिवद्भाव — स्थानीके तुल्य धर्मवाला आदेश हो । स्थानिभूत अच्से पूर्वत्वेन = पूर्वदिशामें दृष्टस्य = देखे गये, विधौ = विधेयकी कर्तव्यतामें । इस सूत्रसे अकार-लोपके स्थानिवद्भाव होनेसे उपधाको वृद्धि नहीं होती । कथयति—वाक्यरचनानुकूल क्रियावाचक कथ धातोः चुरादिभ्यो णिच् 'कथ इ अतोलोपः. अकारस्य लोपे । कथ इ—अत्र अच परस्मिन् सूत्रेण अकारलोपस्य स्थानिवद्भावं कृत्वा अत उपधायाः इति न वृद्धिः । स्मानिवद्भाव होनेसे उपधामें अकार नहीं मिला । जो स्थानिभूत अच् अकारसे पूर्वमें दृष्ट है । यहाँ विधि ( वृद्धि ) की कर्तव्यतामें लट् तिप् शप् गुणायादेशे । अग्लोपित्वात् अक् ( अ इ उ ऋ ऌ ) इनका जहाँ लोप हुआ हो वहाँ दीर्घ तथा सन्वद्भाव नहीं होता । कथमें अका लोपहोनेसे अग्लोप हुआ । अतः दीर्घ सन्वद्भाव नही हुए । अचकथत्—कथा कहनेकी भूतकालिकक्रिया अर्थमें लुङ् अट् च्लिस्थाने चङ् ( अ ) द्वित्वादिकार्ये अचकथइ अत् णिलोपे । कथयाञ्चकार, कथयिता, अकथयत् । कथयेत् । कथयाञ्चक्रे कथयिषीष्ट । ( ३ ) गण्धातुका सङ्ख्यान ( गणना करना ) अर्थः अकारलोपे । अग्लोपी, सेट् गणयति । सङ्ख्या-नार्थकगण्धातोः प्रचलित गणना क्रियाकाले लट् । स्वार्थे णिच् । अकारलोपे तस्य स्थानिवद्भावेन न उपधावृद्धिः । तिप् शप् गुण अयादेशे । गणयाञ्चकार । गण-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अचकथत् । गण संख्याने । ३ । गणयति । ७ ई च गणः ७ । ३ । ९७ । गणयतेरभ्यासस्य ईत् स्याच्चङ् परे णौ चादत् । अजीगणत् । अजगणत् ।

इति चुरादयः ।

## अथ ण्यन्तप्रक्रिया

६९८ स्वतन्त्रः कर्ता १ । ४ । ५४ । क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः

---

यिष्यति गणयिष्यते । गणयतु । गणयताम् । अगणयत् । गणयेत् गणयिषीष्ट । अजीगणत्—सङ्ख्यानार्थक गण्धातोः णिच् अकारलोपे स्थानिवद्भावेन उपधावृद्धिर्न भवति । सनाद्यन्ता धातवः इति धातुसंज्ञायां भूतकाले अर्थे कर्तरि च लुङ् तिप् अट् च्लि स्थाने चङ् । चङि द्वित्वादिकार्यें णिलोपे अजगणत् । अत्र ( ७ ) गणधातुके अभ्यासको ईत् = ईकार भी हो चङ् परकणिपरे । चात् = चकारसे अकार भी हो । अभ्यासस्य ईकारे अजीगणत् । पक्षे अकारे अजगणत् अजगणताम् अजगणन् । अजगणः अजगणतम् अजगणत । अजगणम् अजगणाव अजगणाम ।

इति प्रभाकर्यां चुरादिप्रकरणम् ।

अथण्यन्तप्रक्रिया—प्रेरणार्थकणिच् प्रत्ययः अन्ते यस्य सः ण्यन्त धातुः । तस्य प्रक्रिया = साधुत्वप्रकारः फलोत्पादकोव्यापारः । प्रेरणा अर्थमें णिच् प्रत्ययान्तः धातुका प्रकरण चलाते हैं। भूवादयोधातवः से धातुसंज्ञक ( धातु बोधकः ) खादति में खादसे, प्रेरणा अर्थ में णिच् होने पर माता खादयति ( खिलाती है ) में खादिके सनाद्यन्ता धातवःसे धातुसंज्ञा । प्रयोजक ( प्रेरक ) के व्यापार ( क्रिया ) में णिच्-प्रत्यय हो । जिस प्रेरणाका । खिलाना पढ़ाना अर्थ । ( ८ ) स्वतन्त्रः = किसी भी क्रियाके करनेमें स्वतन्त्ररूपसे विवक्षित कारकरूप अर्थको कर्तृसंज्ञा हो । फलके लाभ से क्रिया करनेकी रुचि होती है । फलजनक व्यापार ( क्रिया ) है । उस क्रियाको फलवती बनानेमें स्वतन्त्र हो, पराधीन न हो, ऐसा विवक्षित=अभीष्ट कारक कर्तृ-संज्ञक हो यदायदीयोव्यापारः धातुना अभिधीयते तदा स कर्ता । सभी कारक कर्ता हो सकते हैं । यथा—रामः पठति । पठन उच्चारण या ज्ञानके अनुकूलक्रियाको फलवती बनानेमें राम स्वतन्त्र है । वही स्वतन्त्रतया विवक्षित अर्थ हैं । उनको कर्तृसंज्ञा हुई । मोहनः मोदकं भूङ्क्ते । भोजनक्रियामें मोहन स्वतन्त्र है । परन्तु यदायदीयोव्यापारः धातुना अभिधीयते तदा व्यापाराश्रयत्वेन स्वातन्त्र्यात् कारकान्तरण्यापि कर्तृसंज्ञां लभन्ते । अतएव काष्ठानि पचन्ति रोटिका पच्यते स्थाली पचति इत्यादिसिध्यन्ति ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

कर्ता स्यात्। ९ तत्प्रयोजको हेतुश्च १।४।५५। कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात्। ७०० हेतुमति च ३।१।२६। प्रयोजक-व्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात्। भवन्तं प्रेरयति भावयति।

---

(९) तत्प्रयोजकः = तस्य = कर्तुः प्रेरकः, क्रियायां प्रवर्तकः (माता) स्वतन्त्र कर्ताको पठन आदि क्रियामें प्रेरित करनेवाली (कि तुम पढ़ो) तुम पैदा होओ, भोजन करो। इस प्रकारसे क्रिया करानेवालेको हेतुसंज्ञा तथा कर्तृसंज्ञा हो। जैसे— चैत्रः विद्वान् भवति यहाँ विद्वान् होनेकी क्रियामें चैत्र स्वतन्त्र है। विद्वांसं भवन्तं तं मैत्रः अध्यापनेन प्रेरयति, यहाँ विद्वान वनानेकी क्रियामें प्रेरक रुचिवर्धक, प्रवर्तक मैत्र है। उसे हेतुसंज्ञा कर्तृसंज्ञा भी हुई। चैत्र प्रयोज्य (क्रियामें प्रवृत्तिके योग्य) है। जैसे—भोजनका कर्ता प्रयोज्य है, खिलानेवाला प्रयोजक। पढ़नेवाला प्रयोज्य है। पढ़ानेवाला प्रयोजक। बालकः खादति। माता तं भोजयति (खिलाती है) प्रथमकर्ता प्रयोज्य है। उसका प्रेरककर्ता (माता) प्रयोजक है। प्रेरक (खिलाने-वाली) कर्ता, हेतुसंज्ञक भी है। जो खिलावे, पढ़ावे, होवावे, उसीको हेतुसंज्ञा भी समझें।

(७००) हेतुमतति = हेतुसंज्ञा अस्ति अस्य इति हेतुमान् (व्यापारः) तस्मिन् हेतुमतिव्यापारे = (प्रयोजकः = प्रेरणाकरनेवालेकर्ताके व्यापारे = क्रियामें खिलाना पढ़ाना पहुँचाना, सुलाना आदि व्यापारमें) प्रेरणा अध्येषणा, अन्वेषणा इत्यादि अर्थ वाच्य हो, उस अर्थको कहनेवाला णिच् प्रत्यय धातुसे हो (णिच् प्रत्ययका शुद्धार्थं प्रेरणा है) क्रियामें प्रवृत्त कराना अर्थः। धातुके अर्थमें प्रेरणा अंशको णिचप्रत्यय व्यक्त करता है। इसीको प्रकट करनेके लिए शतृप्रत्ययान्त पठन्तं, गच्छन्तं, भवन्तं, पश्यन्तं आदि शब्द जोड़े जाते हैं। यथा—चैत्रो भवति। भवन्तं चैत्रं मैत्रः प्रेरयति। यत्त्वं विद्वान् भव। विद्वान् होते हुए चैत्रको मैत्र प्रेरित करता है। उसका प्रकाशक शतृप्रत्ययान्त 'भवन्तम्' शब्द है। यहाँ भवन क्रियाका कर्ता चैत्र प्रयोज्य है। उसका प्रेरक मैत्र है। उस प्रयोजककी क्रियामें प्रेरणा अर्थ होनेपर धातुसे णिच् हुआ। भूणिच् अनुबन्धलोपे 'इ' ण् इत् होनेसे अतः अचोऽञ्णिति सूत्रेण उस्थाने औवृद्धिः। अवादेशे भवि इति दशायां सनाद्यन्ताः धातवः इति धातुसंज्ञा वर्तमानकालिक प्रेरण-क्रिया अर्थ कर्तरि लट्। यद्यपि दो कर्ता तथापि प्रधानेकार्यसम्प्रत्ययः तिप् शप् गुणायादेशे चैत्रं भावयति मैत्रः। चैत्र को स्वतन्त्रः कर्तासे कर्तृसंज्ञा। तृतीया को वाधकर गतिबुद्धिप्रत्यवसानार्थ आदि सूत्रसे अकर्मक भूधातुके अण्यन्त (भवति) अवस्थाके कर्ताको ण्यन्त 'भावयति' इस अवस्थामें कर्मसंज्ञा कर्मणि द्वितीयाविभक्तिः भावयति। यत्र चैत्रो भवति। भवन्तं चैत्रं पितरौ प्रेरयतः, तत्र चैत्रं भावयतः। यत्र बहवः प्रेरयन्ति, तत्र चैत्रं भावयन्ति। म० पु० में चैत्रो भवति, वाक्यमें यदि

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वं प्रेरयसि । तत्र त्वं चैत्रं भावयसि । युवां प्रेरयथः । इति भावयथः । यूयं प्रेरयथ भावयथ । यत्र अहं प्रेरयामि तत्र चैत्रं भावयामि इत्यादि । जहाँपर गति = गमन बुद्धि = ज्ञान प्रर्यवसान = भक्षण, शब्दकर्मक अकर्मकसे भिन्न सकर्मक धातुसे णिच् प्रत्यय हो, वहाँ प्रयोज्य ( स्वतन्त्रः ) कर्तामें तृतीया विभक्ति ही हो । जैसे—चैत्रः तण्डुलं पचति । पंचन्तं तं मैत्रः प्रेरयति । इति मैत्रश्चैत्रेण तण्डुलं पाचयति । यहां चैत्रेणमें द्वितीया नहीं हुई । प्रधान क्रिया ( णिजर्थव्यापार ) है, अतः प्रथम, मध्यम उत्तम पुरुष की व्यवस्था प्रयोजक व्यापारके अनुसार । एवं भावयते = णिचश्च सूत्र से कर्तृगामी क्रियाफल होनेपर आत्मनेपद । लिट्में चैत्रो बभूव, मैत्रः प्रेरयाम्बभूव । भावयामास । भावयिता भावयिष्यति । भावयतु अभावयत । भावयेत् भाव्यात् अबीभवत् । चैत्रो अभूत् मैत्रः तं प्रेरिरत् इत्यर्थे भूतकालिकसमाप्त भवनसम्बन्धी प्रेरणा क्रियाकाले लुङ् अथवा उत्पत्ति-अनुकूलव्यापारवाचक भूधातोः भूतकालिक प्रेरणा अर्थे णिच् = इ ( सनाद्यन्ताः धातवः ) प्रेरणाविशिष्टभवनक्रियार्थवाचक 'भू' इ-धातोः लुङ् तिप् च्लि, णिश्रिद्रु इति सूत्रेण कर्तरिचङ् = अ, अट् । अभूइ अत् । ( णिच अच आदेशो न भवति, द्वित्वे कर्तव्ये ) द्वित्व होना हो, तब णिच् परे रहते अचके स्थानमें वृद्धि आदि आदेश नहीं होते । णेरनिटि इति 'णि' लोपे । भू शब्दस्य 'चङि' सूत्रेण द्वित्वे अभ्यासादिकार्ये द्वितीय भूशब्दस्य वृद्धिःऔ । तस्य आवादेशे, अबुभाव अत् । ( णौ चङि ) सूत्रेण उपधायाः आकारस्य ह्रस्वे ( सन्वल्लघुनि ) इति सन्वद्भावे ततः ।

( १ ) प्रत्यय परे रहते जो अङ्ग उसके अवयव अभ्यासके उकारको इकार हो पूयण्ज्यपरे = पवर्ग यण् जकारे परे, यदि अवर्णपरे हो तो । इति सूत्रेण उकारस्य इकारे । तस्य दीर्घो लघोः इति दीर्घे । अबीभवत् अबीभवताम्, अबीभवन् । ष्ठा-धातुका गतिनिवृत्ति, रुकजाना अर्थः । ष्ठाधातुको धात्वदेः षः सः से स होकर 'स्था' उसके स्थान में तिष्ठ आदेशः । मूर्तिः तिष्ठति । तिष्ठन्तीं-तां रामः प्रेरयति । इति रामः मूर्तिं स्थापयति । मोहन मूर्तिको स्थिर करता है । गतिनिवृत्यर्थकस्था धातोः हेतुमति च सूत्रेण 'प्रेरणा' अर्थे णिच् । स्था इ ततः ।

( २ ) अर्ति गत्यर्थक ऋ लज्जार्थक ह्री, री, क्नूयीशब्दे, विधूननार्थ क्ष्मायी, आदि धातु और आकारान्त धातुओंको पुक् ( य ) हो णिच् परे । इति सूत्रेण आकारान्तात् पुक् । स्थापि ( स्थित्यनुकूलव्यापारनुकूलव्यापारः वृत्यर्थः ) इत्यस्य सनाद्यन्ताः इतिधातुसंज्ञायां लट् तिप् शप् गुणायादेशे स्थापयति बैठता है । स्थाप-

---

१ ओः पुयण्ज्यपरे ७ । ४ । ८० । सनि परे यदङ्गं तदवयवाभ्यासोकारस्य इत् स्यात् पवर्ग-यण्-जकारेष्व-वर्णपरेषु परतः । अबीभवत् । ष्ठा गति-निवृत्तौ । २ अर्ति-ह्री-व्ली-री-क्नूयी-क्ष्माय्यातां पुङ् णौ ७ । ३ । ३६ ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्थापयति। ३ तिष्ठतेरित् ७।४।५। उपधाया: इदादेश: स्याच्चङ् परे णौ। अतिष्ठिपत्। घट चेष्टायाम्। ४ मितां ह्रस्व: ६।४।९२। घटादीनां ज्ञपादीनां च उपधाया ह्रस्व: स्याण्णौ। घटयति। ज्ञप ज्ञाने ज्ञापने च। ज्ञपयति, अजिज्ञपत्।

इति ण्यन्तप्रक्रिया।

---

याञ्चकार रामो रामेश्वरं स्थापयिता भविष्यकालिक स्थापनाक्रिया अर्थमें स्थापयिष्यति। अनद्यतनभूतकालिकी क्रिया अस्थापयत्। चैत्र: मूर्तिम् अस्थात्। मैत्र: तं प्रैरिरित् इत्यर्थे अतिष्ठिपत्। गतिरोधार्थक स्था: धातो: अवरोधक्रियाविषयक प्रेरणार्थे णिच् (इ) पुक् (प) अवरोधप्रेरणार्थवाचका स्थापि इत्यस्य सना० धातुसंज्ञा, गतिनिवृत्ति क्रियार्थप्रधान कर्तरि लुङ तिप् च्लेश्चङ् अट् अस्थाप् इ अत। (३) तिष्ठते: = स्थाधातुकी उपधा को इकार आदेश हो चङ् परकणिपरे। इति इत्वे। स्थिप इत्यस्य द्वित्वे (शपूर्वा: खय:) इति सकारलोपे अथिस्थिप इअत्। अभ्यासे चर्च: इति चर्त्वे णिलोपे षत्वे ष्टुत्वे। अस्थापयिष्यति। घट धातुका चेष्टा प्रयास, प्रवृत्ति कार्य अर्थ:। मित्।

(४) घट् आदि और ज्ञप आदि धातुओं को ह्रस्व हो णिच्परे सुग्रीव: युद्धे घटते, तं प्रेरयति राम: सुग्रीवं घटयति। चेष्ठार्थक घटधातो: प्रेरणार्थे णिच् उपधावृद्धि: मितां ह्रस्व: इति ह्रस्वे 'घटि' इत्यस्य धातुसंज्ञा लट् तिप् शबादि: घटयति। घटयाञ्चकार। घटयिता। अघटयत्, घटयेत्, घटयात्। अजीघटत्। ज्ञप धातु ज्ञाने = जानने, ज्ञापने=ज्ञानकराने अर्थके अनुकूल क्रिया चुरादि:। शिष्य: ज्ञपयति। गुरु: तं ज्ञपयति। चुरादिणिच् ज्ञापि धातो: प्रेरणार्थे णिच् (णेरनिटि) इति प्रथम णिलोपे, उपधावृद्धि: तस्य मितां ह्रस्व: इति ह्रस्वे। ज्ञपि इत्यस्य धातुसंज्ञा तिप् शप्, गुणे, अय् आदेशे रूपम्। अजिज्ञपत् = ज्ञानकराया, करवाया भी, ज्ञप् धातो: स्वार्थेणिच् तत:, प्रेरणार्थे णिचि। एकस्य णेर्लोपे लुङ् तिप् च्लेश्चङि, द्वित्वे अभ्यासादि कार्ये, सन्वद्भावे, 'सन्यत:' इति इत्वे अत्र अभ्यासस्य न दीर्घ: लघु: नास्ति दीर्घो लघो इति न प्रवर्तते। अजिज्ञपत्। इति प्राभाकर्यां ण्यन्तप्रक्रिया।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ सन्नन्तप्रक्रिया

७०५ धातोः कर्मणः समानकर्तृकादिच्छायां वा ३ । १ । ७ । इषिकर्मण इषिणैककर्तृकाद्धातोः सन् प्रत्ययो वा स्यादिच्छायाम् । पठ व्यक्तायां वाचि । ६ सन्यङो ६ । १ । ९ । सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य । (५३३) सन्यतः । पठितुमिच्छति पिपठिषति ।

---

अथसन्नन्तप्रक्रिया—सन्प्रत्ययः अन्ते यस्य स सन्नन्तः । तस्य प्रक्रिया फलजनकसंस्कारः । इस प्रकरणकी विशेषता धातुसे खानेकी इच्छा=जिघत्सयति । जानेकी इच्छा जिगमिष्यति । इच्छा क्रियाका कर्म पढ़ना, खाना, जाना क्रिया है । जो तुमुन् प्रत्ययसे व्यक्त है । पठितुम् इच्छति, अत्तुमिच्छति गन्तुमिच्छति । धातुरुप कर्मके साथ कर्ताका होना आवश्यक है । पाठकः पठितुं इछति । इच्छा क्रियाका कर्म पठितुं है परन्तु दोनों क्रियाका कर्ता एक ( पाठकः ) ही है तभी समानकर्तृकत्व आयेगा । सन् प्रत्यय होनेसे सनाद्यन्तधातु बनता है । जिसमें इच्छाक्रिया कर्मकी प्रवृत्ति स्वीकृति है । यह एकार्थीभावरुप है । अलग-अलग अनेक अर्थका एक अर्थ होना एकार्थीभाव है. पठ्धातु, इच्छार्थक इष्धातु दोनोंक्रियाका एक अर्थः, पढ़नेकी इच्छा हैं पठनविषयिणीच्छा भवितुमिच्छति ( होनाक्रिया इच्छाकाकर्म है ) बुभूषति । भवनकर्मकइच्छानुकूलाक्रिया बुभूष्धातुका अर्थ है । ( ७०५ ) धातोः, पञ्चम्यन्तम् । कर्मणः पञ्चम्यन्तं । समानकर्तृकात्—समानः, तुल्यः, एकः कर्ता ययोः क्रिययोः स समानकर्तृकः तस्मात् । तुमुन्विशिष्ट किसी क्रियाका इच्छाक्रियाके साथ समानकर्ता होनेसे, इषिकर्मणः—इच्छार्थक इष धातुका कर्म हो, ऐसा धातुपठ् गम् इत्यादि । इषिणैकर्तृकात्=जो इष् धातुका कर्ता हो, वही इष्के कर्म पठ् गम् आदिका भी कर्ता हो, तब धातुसे सन्प्रत्यय विकल्पसे इच्छा अर्थमें हो. यथा—पठ्धातुका स्पष्ट उच्चारण, व्यक्तवाणी के अनुकूलक्रिया अर्थः सेट् । ( ६ ) सन्नन्तस्य = सन्प्रत्यय हो अन्तमें जिसके यङन्तस्य = यङ् प्रत्यय हो अन्तमें, उस धातु के प्रथम एकाच्को द्वित्व हो । अजादेस्तु = अजादिधातु हो तो द्वितीय, एकाच्को द्वित्व हो । सन्यतः = सन्परे अभ्यासस्य इकारः रामः पठितुम् इच्छति । अत्र रामः यथा इच्छायाः कर्ता । पठितुम् इति च कर्मं । समान कर्तृसत्वे इष धात्वर्थे इच्छाका ( कर्मीभूत अर्थपठन ) तद्वाचक इषधातोः ( कर्म पठधातुः ) तस्मात् इच्छार्थे सन्, तस्य आर्धधातुकसंज्ञा, वलादि आर्धधातुक, इट् पठ्इस । षत्वे पठिष् 'सन्यङोः' इति सूत्रेण सन्नन्तस्य पठिष् इत्यस्य प्रथम—एकाचः पठ् इत्यस्य सन्यङोः द्वित्वे, अभ्यासस्य हलादिशेषे

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

कर्मणः किम्-गमनेनेच्छति। 'समानकर्तृकात्' किम्-शिष्याः पठन्त्विती-च्छति गुरुः। वा ग्रहणाद्वाक्यमपि। (५५८ लुङ्सनोर्घस्लृ। ७ सस्यार्ध-धातुके ७।४।४९। सस्य तः स्यात् सादावार्धधातुके। अत्तुमिच्छति जिघत्सति। (४७५) एकाच इति नेट्। ८ अज्झनगमां सनि ६।४।१६।

---

पपठिष् इति स्थिते, 'सन्यतः' अभ्यासपकारस्य इत्वे, पिपठिष्। पठनकर्मकइच्छा-नुकूलव्यापारः सन्नन्तधात्वर्थः। अत्र सनाद्यन्ताःधातवः इति धातुसंज्ञा, वर्तमाने-काले लट् तिप् शप् आदि। पिपठिषति। पठनकर्मक इच्छानुकूलव्यापारः। सेट् धातुओंसे सन् होनेपर इट् होगा अनिट्से नहीं। आर्धधातुक मानकर आवश्यक-कार्य तथा द्वित्वादि होनेके पश्चात् सनाद्यन्त धातु बना है। कर्मणः किम् सूत्रमें इच्छाक्रियाकाकर्म कहना क्यों आवश्यक है। इसलिए कि जोधातु इच्छाक्रियाका कर्म हो उसीसे सन् हो यदि करण-सम्प्रदान आदि हों तबसन् न हो। अतः पठनेन पठनाय इच्छति यहाँ सन् नहीं हुआ। क्योंकि पठन् इच्छाक्रियाका कर्म नहीं है, किन्तु करणादि है। इसी प्रकार गमनेनेच्छति गमन्कर्म नहीं है। इच्छाका कर्म तुमुन्से जाने। समानकर्तृकात् किम् एकही कर्ताहा दोनोंके तभी सन् हो, ऐसा क्यों कहा? जहां दो कर्ता हों वहाँ सन् प्रत्यय न हो यथा—शिष्याः पठन्तु। शिष्यलोग पढ़ें। इतीच्छति गुरुः ऐसी गुरुकी इच्छा है। यहाँ दो कर्ता होनेसे सन् नहीं हुआ। 'वा' के ग्रहणसे विकल्प पक्षमें पठितुमिच्छति ऐसे वाक्यभी होते हैं। पठनकर्मक इच्छाक्रियाके परोक्षभूतकालमें पिपठिषाञ्चकार, पिपठिषाम्बभूव। अद्यभिन्न भविष्यकालमें पिपठिषिता। सामान्यभविष्य, पिपठिषिष्यति, पिपठिषतु, अपिपठिषत् पिपठिषेत् पिपठिष्यात्, अपिपठिषीत आत्मनेपद या। परस्मैपद दोनों प्रकारके धातुओंसे सन्प्रत्यय होता है। इच्छति इयेष एषिता एष्टा एषिष्यति, इच्छतु, एच्छत, इच्छेत्, इष्यात् ऐषीत् ऐषिष्टाम् (७) 'स'के स्थानमें त हो सकारादि आर्धधातुकपरे। यथा—सर्पं अत्तुमिच्छति (अदभक्षणे) भक्षण करना चाहता है। इच्छाक्रियाका कर्म अद्धातु, दोनोंका कर्ता मयूरः। अद्धातोः सन् 'लुङ् सन्परे अद्स्थाने घस्लृ=घसआदेशे अयमनिटधातुः इट् न भवति। सकारादि आर्धधातुक सन्का स परे सस्यार्धधातुके इति सूत्रेण स स्थाने तकृते। घत्स्। द्वित्वे अभ्यासा-दिकार्ये सन्यत इतिइत्वे जिघत्स=अदनविषयिका इच्छानुकूला इति सनाद्यन्तधातु-संज्ञा, लट् तिप् शप् आदि जिघत्सति मूषकं मयूरः। तत्कर्तृकभक्षणविषयक वर्तमानकालिक इच्छानुकूलव्यापारः। जिघत्सिता, जिघत्सिष्यति, जिघत्सतु, अजिघत्सत् अजिघत्सीत्। एकाच् उपदेशेअनुदात्तात् सूत्रसे प्राप्त इट्का निषेध।

(८) अजन्त धातु, हनधातु अजादेशगमेश्च=अच् (इण् आदि) के स्थानमें गम आदेश हुआ हो, उसको दीर्घ हो, झलादि सन् प्रत्ययपरे। जब इट नहीं होता

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**अजन्तानां हन्तेरजादेशगमेश्च दीर्घो झलादौ सनि। ९ इको झलि १।२।९। इगन्ताज्झलादिः सन् कित् स्यात्। (६६०) ऋत इद्धातोः। कर्तुमिच्छति चिकीर्षति। ७१० सनि ग्रह-गुहोश्च ७।२।१२। ग्रहेर्गुहेरुगन्ताच्च सन इण् न स्यात्। बुभूषति। इति सन्नन्ताः।**

## अथ यङन्तप्रक्रिया

**७११ धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३।१।२२। पौनः**

---

तब सन् झलादिमाना जाता है। यदि इट् होता तब यदागम् परिभाषासे सन् अजादि हो जाता। (९) इगन्त अङ्गसे परे झलादि सन् कित् हो। धातुके ऋत् को इत् हो। कर्तुमिच्छति बालः इति विग्रहे उत्पत्तिजनक व्यापारवाचक कृधातोः समानकर्तृकत्वे इच्छार्थकसन् प्रत्यये। कृ-स अत्र इट् प्राप्ते (एकाच्) इति निषेधे। अत्र अज्झनगमां सनि सूत्रेण, कृ इत्यस्य दीर्घे 'इको झल्' सूत्रेण सन् कित् भवति। तस्य फलं क्ङिति चेति गुणनिषेधः। कृ-स इति ऋत् इद्धातोः ऋकारस्य इ आदेशे, रपरे हलिचेति दीर्घे। कीर्स। ततः सन्यङोः इति द्वित्वे, अभ्यास आदिकार्ये, (सन्यतः) इत्वे, सकारस्य षत्वे 'चकीर्ष' इति सनाद्यन्तधातुः उत्पत्ति विषयक—इच्छानुकूलव्यापारोऽर्थः। तस्मात् वर्तमानकालिक लट् तिप् शबादिः। **चिकीर्षति**। चिकीर्षिष्यति, अचिकीर्षत् अचिकीर्षीत्। चिकीर्ष्यात् चिकीर्षेत्। कारयितुमिच्छति चिकारयिषति। अचिकारयिषीत् अपिपाठयिषति। पक्तुमिच्छति पिपक्षति पाचयितुमिच्छति **पिपाचयिषति** अपिपाचयिषीत् तण्डुलः पिपाचयिष्यते।

(७१०) ग्रहगुह, उगन्त धातुओंसे परे सन् प्रत्ययको इट् न हो। जगद्गुरुः **बुभूषति**—भवितुमिच्छति। चैत्रः। इच्छाक्रिया भवनक्रिया दोनोंका कर्ता एक होनेसे भूधातोः इच्छार्थे सन् इट्, प्राप्ते, तस्य सनिग्रहगुहोश्च इति निषेधे, इकोझल् इत्यनेन सन् किद्भवति। तेनुगुणस्य निषेध, भू स=सन्यङो इति द्वित्वे अभ्यासादिकार्ये षत्वे, बुभूष इति सनाद्यन्तधातुः। भवनविषयक इच्छानुकूलव्यापारः धात्वर्थः। लट् तिप् शबादिः **बुभूषति** बुभूषाञ्चकार। बुभूषिता बुभूष्यात् अबुभूषीत् इति **प्रभाकयां सन्नन्तप्रक्रिया।**

**अथ यङन्ताः**—यङ् प्रत्ययो अन्ते यस्य स यङन्तः (धातुः) तस्य प्रक्रिया सिद्धिसंस्कारविशेषः। यहाँ यङ्प्रत्यय क्रियामें पुनः पुनः प्रवृति या अधिक्य अर्थका वाचक है, जिस अर्थको धातुके साथ पुनः पुनः, भृश या आतिशय, शब्दका ज्ञान करते हैं। यही प्रकरणभेदक धर्म है। (१) **क्रियासभिहारे**=क्रियाके बार-बार प्रयोग होनेपर, या अतिशय, अत्यधिक क्रियाका होना, अर्थ

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पुन्ये भृशार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ् स्यात्। २ गुणो यङ्लुकोः ७।१।८२। अभ्यासस्य गुणो यङि यङ्लुकि च। ङिदन्तत्वादात्मनेपदम्। पुनः पुनरतिशयेन वा भवति—बोभूयते। बोभूयाञ्चक्रे। अबोभूयिष्ट ३ ३ नित्यं कौटिल्ये गतौ ३।१।२३। गत्यर्थात् कौटिल्य एव यङ् स्यात्, न तु क्रियासमभिहारे। ४ दीर्घोऽकितः ७।४।८३। अकितोऽभ्यासस्य दीर्घो यङि यङ्लुकि च। कुटिलं व्रजति—वाव्रज्यते।

७१५ यस्य हलः ६।४।४९। यस्येति सङ्घातग्रहणम्। हलः परस्य

---

प्रकट करना हो, एकाच हो तथा हलादि हो तब यङ् हो। अनेकाच् अजादि धातुसे यङ् नहीं होता। पक्षमें वाक्य भी रहता है ङित् होनेसे आत्मनेपद (२) गुणो=अभ्यासको गुण हो यङ्परे यङ्लुक् होनेपर (अवयवे अचितार्था प्रत्ययाः समुदायस्योपकारकाः भवन्ति) यङ्का ङित् अवयवमें अचरितार्थ होनेसे समुदायका उपकारक बना ङित होनेसे अनुदात्त ङित् आत्मनेपदम् लगता है। बोभूयते। सत्तार्थक भूधातुसे पुनः पुनः भवनक्रिया या अतिशय भवन अर्थवाचक (धातोरेकाचो आदि सूत्रेण) यङ्। भूय—सन्यङोः इति प्रथम—एकाचः भू इत्यस्य द्वित्वे अभ्याससंज्ञा (गुणो यङ्लुकोः) इति अभ्यास—उकारस्य गुणे, अभ्यासस्य चर्त्वे जश्त्वे बोभूय। इति सनाद्यन्तधातुः पुनः पुनः अतिशय भवनक्रिया। एकार्थीभावरूपा वृत्तिः। धातुसंज्ञा लट्। अत्मनेपदे त शप् टेरेत्वे अतोगुणः पररूपे बोभूयते। सभी यङन्त आत्मनेपदी, सेट्, सकर्मक होते हैं। बोभूधातु बननेकी प्रक्रिया पूर्ववत्। आम्प्रत्यये—कृ लिट् अनुप्रयोगे लिङ्गादिकार्ये बोभूयाञ्चक्रे। बोभूयिता। बोभूयिष्यते, मम ग्रामे गोधूमं बोभूयताम्। अबोभूयत। बोभूयेत अबोभूयिषत अबोभूयिष्ट। लुङ् सिच् इट् इत्यादि।

(३) गतौ गति अर्थवाचक धातुसे कौटिल्य=कुटिलस्य भावः अर्थमें यङ् हो। अन्यअर्थमें यङ् न हो। इसलिए। (पुनः पुनः अतिशय) ऐसा विग्रह गत्यर्थक धातुके साथ न करे (४) अकित्धातुके अभ्यासको दीर्घ हो, यङ्में यङ्लुक्में भी पनीपत्यते इत्यादिमें दीर्घ-वारणके लिए अकित्। अभ्यासको जहाँ नीक् नुक् आगम है वहाँ कित् होनेसे दीर्घ नहीं होता। कुटिलं व्रजति। गत्यर्थक कुटिलकर्मक व्रजनानुकूले अर्थे व्रज्धातोः (नित्यं कौटिल्ये गतौ) यङ्। गत्यर्थक धातुके कुटिल अर्थमें यङ्का विधान व्रज + य। 'सन्यङोः' इति द्वित्वे, हलादिशेषे, 'दीर्घो अकितः' सूत्रेण अभ्यासस्य दीर्घे वाव्रज्य कुटिलकर्मकव्रजनानुकूलव्यापारः। यङन्तधात्वर्थः। तस्य धातुसंज्ञा लट् 'त' शप् आदि। वाव्रज्यते (७१५) यस्येति=य का, संघात= समुदाय, अकारसहित यकारका ग्रहण है। हल्से परे य शब्दका लोप हो। आर्ध धातुक परे। आदेः परस्य सूत्रसे परको विहितकार्य आदिके स्थानमें हो। अतोलोपः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यशब्दस्य लोप आर्धधातुके। आदेः परस्य। (४७०) अतो लोपः। वाव्रजाञ्चक्रे। वाव्रजिता। ६ रीगृदुपधस्य च ७।४।९०। ऋदुपधस्य धातोरभ्यासस्य रीगागमो यङि यङ्लुकि च। वरीवृत्यते। वरीवृताञ्चक्रे। वरीवृतिता। ७ क्षुम्नादिषु च ८।४।३९। णत्वं न। नरीनृत्यते, जरी

---

से अकारलोपः परोक्षकालिक समाप्तकुटिल व्रजन क्रियावाचक वाव्रज्य धातोः लिट् आम्, तस्य आर्धधातुकसंज्ञा यस्य हलः इति सूत्रेण आदेः परस्य इति सहकारेण यकारस्य लोपः अकारलोपे वाव्रजाम्, कृ लिट् इत्यादि वाव्रजाञ्चक्रे। कुटिलकमक व्रजनक्रिया अनद्यतनभविष्यकालिक हो तब वाव्रजिता वाव्रजिष्यते वाव्रज्यतां वाव्रजिषीष्ट आवाव्रजिष्ट। ( ६ ) ऋदुपधस्य ऋकार उपधामें हो ऐसे धातुके अभ्यासको रीक् आगम हो, यङ्परे यङ्लुक् परे च। पुनः पुनः अतिशयेन वर्तते बार-बार या अधिक व्यवहार करने अर्थमें वृत् धातोः यङ् द्वित्वे वृवृत्य ऋकारस्य रीक् आगमें वीरीवृत्यते। वरीवृत्य इति यङन्तधातुः ( पुनः पुनः अत्यधिक विद्यमानानुकूव्यापारः धातुसंज्ञा लडादि कार्ये रुपम्। परोक्षकाले पुनः पुनः अतिशय सत्तारुपव्यवहाररूप समाप्तक्रिया अर्थे वरीवृताञ्चके। वरीवृत्यधातोः लिट् आमि। यकाराकारयोः लोपे। लिडन्त कृ अनुप्रयोगे रूपम्। अवरीवृत्यत वरीवृतिषीष्ट अवरीवर्तिष्ट।

( ७ ) क्षुभ्नादि गणपठित 'शब्दोंको णत्वं न भवति। गणमें कुछ शब्दोंको णत्व प्राप्त है। नरीनृत्यते पुनः पुनः अतिशयेनवा नृत्यति। बार-बार या बहुत तूफानी नृत्य करता है। इत्यर्थे नृत्धातोः यङ द्वित्वादिकार्ये रीग्रीदुपधस्यच इत्यभ्यासस्य रीक् आगमें, तदा नरीनृत्य इति ( यङन्तधातुः ) तस्य नृत्यक्रियाविषयक पुनः पुनः अत्यधिकप्रवृत्ति—अनुकूलव्यापारो अर्थः धातुसंज्ञा लडादिकार्यें। द्वितीयनकारस्य णत्वे प्राप्ते क्षुभ्नदिषुच इति निषधे नरीनृत्यते नृत्यकी बार-बार आवृत्ति या अधिकता क्रिया परोक्षकालमें समाप्त हो तब नरीनृताञ्चके। नरीनृतिता =बार-बार या बहुत नाचनेवाली नरीनृतिष्यते। नरीनृत्यता नरीवर्त्यैत अनरीनर्तिष्यत। जरीगृह्यते। पुनः पुनः अतिशयेन वागृह्णति शश्कुलिम्। बार-बार या बहुत अधिक पूड़ी लेता है। इत्यर्थे उपादानार्थक ग्रहधातोर्यङ ग्रह इत्यस्य द्वित्वादि कार्ये अभ्यास्यरीक्। ग्रहिज्या इतिसम्प्रसारणं, जरीगृह्य इति यङन्तधातुः। ग्रहण विषयक बार-बार या अधिक प्रवृत्तिके अनुकूल क्रिया अर्थे लडादिकार्यें। वह क्रिया परोक्ष कालमें हो तब जरीगृह्याञ्चक्रे आगामिभविष्काले जरीगृहीता। जरीगृहीष्यते अजरीगृह्यत अजरीगृहीष्ट। कुटिलं गच्छति जङ्गम्यते जङ्गमिता जङ्गमिष्यते कुटिल अर्थबोधक यङ प्रत्यय जङ्गम्यतां जङ्गम्यै जङ्गम्यावहै जङ्गम्याम है। अजङ्गम्यत, येतां, न्त। जङ्गमिषीष्ट अजङ्गमिष्ट ( कुटिलं अगमत् ) अतिशयेन

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

गृह्यते । इति यङन्तप्रक्रिया ।

## अथ यङ्लुगन्तप्रक्रिया

७१८ यङोऽचि च २ । ४ । ७४ । यङोऽचि प्रत्यये लुक् स्याच्चकारात्तं विनापि क्वचित् । अनैमित्तिकोऽयम् अन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वाद् द्वित्वमभ्यासकार्यम् । धातुत्वाल्लडादयः । (३८०) शेषात्कर्तरीति परस्मैदम् । चर्करीतं चेत्यदादौ पाठाच्छपो लुक् । ९ यङो वा ७ । ३ । ९४ । यङ्लुगन्तात् परस्य हलादेः पितः सार्वधातुकस्येड् वा

---

यजते इति यायज्यते यायजाञ्चक्रे चकार यायजिता यायजिष्यते । अयाज्यत । यायजिषीष्ठ अयायजिष्ठ । यायजीति यायष्टिः यायष्टः । यायजीत यायाष्ठः अयायजीत् अयायाजीत् । खद चाखद्यते । शासय्यते । अशाशयिष्ट । ब्रू वाच्यते । इति प्रभाकर्या यङन्तप्रक्रिया ।

अथयङ्लुङन्ता यङ् प्रत्ययका जो अर्थ पहलेथा वही यङ्लुक्में भी है । प्रक्रियामें भेद समझाते हैं । यङ् लुक् होनेपर, शेषात्कर्तरि परस्मैदंसे परस्मैपद ही होता है । आत्मनेपदका निमित्त न होनेपर ( ८ ) यङ्का अच्प्रत्यय परे लुक् हो । सूत्रमें चकारसे तम्–अच्के विनाभी यङ्का लुक् हो अनैमित्तिकः=विना निमित्तके यङ् लुक् होनेसे अन्तरङ्ग हुआ । अनैमित्तिकम् अन्तरङ्गं, निमित्त सापेक्षं बहिरङ्गम् । द्वित्वादिकार्यम् असिद्धं बहिरङ्गमन्तरङ्गे । अन्तरङ्गकार्ये ( यङ् लुक्की कर्तव्यतामें बहिरङ्ग द्वित्वादि कार्य असिद्ध हो । प्रथमं यङ् लुक् ततः–यङ् लुक् होनेपर प्रत्यय लोपे प्रत्ययलक्षणसूत्रसे यङ् मानकर द्वित्वे सन्यङोः । अभ्यास आदिकार्ये । धातुसंज्ञा होनेसे लट् आदिकार्यं ततः मेषात् = आत्मनेपदप्रत्यय होनेके कारणोंसे अतिरिक्तकारण 'शेष' कहलाता । उससे कर्तामें परस्मैपद 'चर्करीतं संग्रह ( नाम ) यङ् लुक्का है, जिसको अदादिगणमें पढ़ाहुआ मानकर यङ् लुक्में भी शप्का लुक समझें ।

( ९ ) यङ्लुक् अन्तमें हो उससे परे हलादिपित् आर्धधातुकको ईट आगम विकल्पसे हो । भू सू धातुको होनेवाले गुणका नभूसूवोस्तिङ् सूत्रसे निषेध । यङ्लुक् भाषामें नहीं होता । अत्र प्रमाणं छन्दमें, भू धातुको, यङ्लुक्में बोभोतु तेतिक्ते, ऐसा निपातन किया गया है । यदि निषेध होता तो निपातन व्यर्थ होता । बोभवीति पुनः पुनः अतिशयेन वा भवति । बार-बार या बहुतअधिक चमंरोग होता है । इति अर्थे भू धातोः यङ् प्रत्ययः । तस्य यङोऽचि च इति यङ्लोपे ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्यात्। ( ४४० ) भूसुवोरिति गुणनिषेधो यङ्लुकि भाषायां न। बोभूतु तेतिक्ते इति छन्दसि निपातनात्। बोभवीति, बोभोति। बोभूतः (६०६) अदभ्यस्तात्, बोभुवति। बोभवाञ्चकार, बोभवामास। बोभविता। बोभविष्यति। बोभवीतु, बोभोतु, बोभूतात्। बोभूताम्। बोभुवतु। बोभूहि। बोभवानि। अबोभवीत्। अबोभोत्। अबोभूताम्। अबोभुवुः। बोभूयात्। बोभूयाताम्। बोभूयुः। बोभूयात्। बोभूयास्ताम्। बोभूयासुः ( ४३९ )। गातिस्थेति सिचो लुक्। (७१९) यङो वेतीट्पक्षे गुणं बाधित्वा नित्यत्वाद्

---

प्रत्यय लोपे सति यङ् तदन्तं मत्वा भूशब्दस्य सन्यङोः इति द्वित्वे। अभ्यासादि कार्यें, गुणों यङ्लुकोः इति अभ्यासस्य गुणे 'बो भू' इति यङ्लुक् धातुः। बार-बार या अत्यधिक होनेकी क्रिया वृत्त्यर्थः। धातुसंज्ञा, लडादिकार्ये। यङोवा इति ईट उत्तरखण्डस्य उकारस्य गुणे अवादेशे बोभवीति। यदा ईट न भवति तदा गुणः बोभोति। अदिप्रभृतिभ्यः शपः इति शपोलुक्। दोकर्ता उक्त क्रियाके आधार हों तब द्विवचन तस् बोभूतः। अपित् तस् ङिद्भवति तस्य फलं गुण निषेधः। भत्कुणाः बोभुवति झिस्थाने अत् आदेशे ( अदभ्यस्तात्। बोभुवति उवङ् आदेशे यदा गुण निषेधः। बोभवीषि बोभोषि, वोभूथः वोभूथ। पुनः पुनः अतिशयन भवनार्थक यङन्त बोभूधातुः अनेकाच्। आम् प्रत्ययः। कृ लिट् अनुप्रयोग आदि कार्ये बोभवाञ्चकार। बोभविता आर्धधातुकगुणे अवादेशे। बार-बार या बहुत अधिक वर्षा होने वाली है। बोभविष्यति। बोभवीतु, बोभोतु, बोभूतात्, बार-बार या बहुत पैदा करो। इस अर्थमें विधि, प्रेरणा, आज्ञा, आशीर्वाद, निश्चय, प्रार्थना आदि अर्थमें लोट् इट् विकल्प तातङ् विकल्प होनेसे तीन रूप।

बोभूताम्। ङित्वात् गुण निषेधः बोभुवतु। झ स्थाने अत्। अपित् ङित्। घुण निषेधः उवङ् आदेशे रुपम्। बोभूहि। तुम बार-बार अनेक वनो। बोभवानि। मेर्निः आट आगमे गुणे अवादेशे। 'अबोभूवीत् अनद्यतनकाले समाप्त क्रिया अर्थे लङ् 'यङोवा'से ईट् विकल्प। अबोभुवुः। सिच् अभ्यस्तविदिभ्यश्च इति झिस्थाने जुस् उवङ् आदेशे। कुशलमङ्गल सुखआनन्दके बार-बार या अधिक होनेका आशीर्वाद बोभूयात् अदादि मानकर शप् लुक् ( लिङः सलोपो ) इति सकारलोपः बोभूयुः शप् लुक् झि स्थाने जुस् उस्य पदान्तात् इति पूर्वरुपे बोभूयात् स्कोः संयोगाद्योः इति सकारलोपे गातिस्था धूपाभूभ्यः सूत्रसे सिच्का लोप। यङो 'वा' से ईट् पक्षमें गुणको बाधकर वुक् आगम हो, अच्परे नित्य हो। अबोभूवीत् बार - बार या अत्यधिक भवनक्रियाके भूतकालमें अबोभूसईत् गातिस्था' इति सिज्लोपः हलादिपित् सार्वधातुकतिप्परे। यङोवा ईट्। ईट् पक्षमें गुणको बाधकर नित्य होनेसे भुवोवुक् 'लुङ् लिटोः' से वुक्। इट् अभावे।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वुक्। अबोभूवीत्, अबोभोत्, अबोभूताम्। अबोभूवुः। अबोभविष्यत्।

इति यङ्लुगन्ताः।

## अथ नामधातवः

७२० सुप आत्मनः क्यच् ३।१।८। इषिकर्मण एषितुः सम्बन्धिनः सुबन्तादिच्छायामर्थे क्यच् प्रत्ययो वा स्यात्। १ सुपो धातु-प्रातिपदिकयोः २।४।७१। एतयोरवयवस्य सुपो लुक्। २ क्यचि च ७:४।३३।

---

अबोभोत्। अबोभूवुः सिचसे परे झिस्थाने जुस् भुवोवुक् आगमे अनेकलोग बार-बार प्रवृत्त हुए। इति प्रभाकर्यां यङ्लुगन्ताः।

अथ नामधातवः—नाम एव धातुः नामधातुः तस्य प्रक्रिया साधुत्व प्रकारः, अथ = धातुगणसमाप्तिके पश्चात् अब नाम = प्रतिपदिकप्रकृतिकसुबन्तो द्देश्यकप्रत्ययान्तशब्दको धातु बनानेकी विधिः = प्रातिपदिकसे आई विभक्ति सुबन्त है। उसको धातु (क्रियावाचक) बनानेकी शैली प्रस्तुत करते हैं। कोई भी शब्द कैसे धातु बन जाय। इस प्रकरणका भेदकधर्म इच्छति क्रियाका कर्मीभूत सुबन्त (द्वितीयान्तपद) हो। और समस्त प्रातिपदिकोंसे इच्छा, आचार, आदि अर्थोंमें क्यच् क्यङ् क्यष् क्विप् आदि प्रत्ययोंका विधान हो। कर्तासे सम्बन्धित द्वितीयान्तपद इच्छा, कामनाका विषय हो तो।

(६२०) इषिकर्मणः = इच्छा क्रियाके कर्मसे, इष् धातुका कर्मीभूत इच्छा क्रिया तथा उसका कर्म दोनों एषितृः = इच्छा कर्तासे सम्बन्धित सुबन्त हो तब इच्छा अर्थमें क्यच् प्रत्यय विकल्पसे हो। इस क्यच्का कर्तृसम्बन्धिनी कर्म विषयिणी इच्छा अर्थ है। अतः इच्छा क्रिया कर्तृसम्बन्धिनः कर्मीभूतात् सुबन्तात् इच्छायामर्थे क्यच् इति सूत्रार्थः। सुबन्तप्रकृति-क्यच्प्रत्यय-आत्म-सम्बन्धिनी पुत्रविषयिणी इच्छा यह सनाद्यन्तवृत्तिका अर्थ है (१) धातु तथा प्रातिपदिकसंज्ञक के अवयव सुप्का लुक् हो (२) क्यचि च अवर्णको ईकार हो क्यच्परे। पुत्रीयति आत्मनः पुत्रमिच्छति अपनेसे सम्बन्धित पुत्रकी कामना करता है। इत्यर्थे पुत्र + अम् यही इच्छाका कर्म है। इच्छा करनेवालेका सम्बन्धी है। उससे उसी अर्थमें क्यच् पुत्र + अम् प्रकृति है क्यच् प्रत्यय है। इच्छाकर्ताके माध्यमसे पुत्र इच्छाका विषय बना। इस अर्थका वाचकः क्यच् प्रत्ययः। जहाँ स्वयं (अपने लिए पुत्र चाहता है वहीं पर इच्छाकर्तासे

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अवर्णस्य इः। आत्मनः पुत्रमिच्छति पुत्रीयति। ३ न क्ये १।४।१५। क्यचि क्यङि च नान्तमेव पदं नान्यत्। नलोपः। राजीयति। नान्तमेवेति किम्—वाच्यति (६१२) हलि च। गीर्यति। पूर्यति। धातोरित्येव नेह—

सम्बन्धित पुत्रसे क्यच् होगा। ( यदि परस्य पुत्रमिच्छति ) दूसरेके लिए पुत्र चाहता है तब क्यच् नहीं होगा। क्योंकि आत्मनः पदप्रयोगसे सम्बद्ध नहीं है ) अनुबन्धलोपे पुत्र अम् य, इतिदशायां सनाद्यन्ताः इति धातुसंज्ञा ( सुपोधातुसे ) धातुका अवयव 'अम्' विभक्तिका लोप हुआ। पुत्र य इति शिष्यते। प्रातिपदिक-संज्ञासे विभक्ति लुक् समास ( वृत्ति ) में होता है। 'क्यचि च' इति क्यच्परे अकारस्य ईकारः ( पुत्रीय इतिनामधातुः। स्व ( आत्मसम्बन्धी ) पुत्रकर्मक-इच्छानुकूलव्यापारः इति नामधातुःवृत्यर्थः लट्तिप् शबादिः। अतोगुणे पररुपे। पुत्रीयतः पुत्रीयन्ति। अनेकाच्धातुः। लिट्परे, आम् भवति। कृ-लिट्' अनुप्रयोगे। पुत्रीयाञ्चकार। पुत्रीयिता आत्मसम्बन्धी पुत्रविषयिणी आगामि-भविष्यकालकी इच्छा। पुत्रीयिष्यति ( पुत्रं एषिष्यति ) पुत्रमिच्छतात् पुत्रीयतात्। पुत्रमैच्छत् अपुत्रीयत्। पुत्रमिच्छेत् पुत्रीयेत्। पुत्रं ऐषीत् अपुत्रीयत्। पुत्रीय्यात्। अपुत्रीयीत्। इस प्रकार जितने सुप् आत्मा हैं सभीके सुबन्तसे क्यचप्रत्यय। यथा—आत्मनः विद्यामिच्छति विद्यीयति ( आत्म सम्बन्धी विद्याविषयिणी इच्छा। आत्मनः भवनमिच्छति भवनीयति। भार्यीयति गुरूयति। पत्नीमिच्छति पत्नीयति। युवतीमिच्छच्छति युवतीयति। मन्त्रीयति, राष्ट्रपतीयति। क्यजन्त-धातु सिद्ध होनेपर ही अन्यकार्य। इस प्रकरणके धातु नाम ( प्रातिपदिक )-से बनते हैं। इसलिए नामधातु नाम पड़ा।

( २ ) क्यच् तथा क्यङ् प्रत्यय परे रहते नान्तशब्द ही पद कहलाता है। जो नान्त नहीं है ये क्यच्-पद नहीं होंगे। राजीयति आत्मनः राजा भवितुमिच्छति। या अपने से सम्बन्धित को राजा बनाना चाहता है। 'राजन् अम्' यह सुवन्त है इच्छा क्रियाके कर्तासे सम्बन्धित है उससे इच्छा अर्थमें क्यच् हुआ। सनाद्यन्ता धातवः इति धातुसंज्ञा। धातुका अवयव सुपोलुक् 'राजन्य' अत्र नः क्ये इति नियमेन क्यच् क्यङ् परे नान्त राजन् शब्दः, पदसंज्ञक इति सिद्धः। तस्यफलं 'नलोपः' इति नकार लोपे, 'राज य। क्यचि-च इति अकारस्य ईकारे लडादिकार्ये। नान्तमेव किं —क्यच् क्यङ्परे नान्तको ही पदसंज्ञा क्यों कहा? इस लियेकि नान्तभिन्नको पदसंज्ञा न हो। यथा वाच्यति देवदत्तः आत्मनः वाचम्=वक्तारं वाणीमिच्छति अपने लिये या अपनेसे सम्बन्धित ( वक्ता ) वचन–सत्यप्रतिज्ञा चाहता है। वाच्यति अत्र वाच शब्द नान्त नहीं है। अतः पदसंज्ञा नहीं हुई। यदि पदसंज्ञा होती तो कुत्व जश्त्व होते। गीर्यति। मूकः आत्मनः गिरं पुरं–ग्रामं वा इच्छति। गूंगा अपने लिए वाणी ( सरस्वती ) पुर=आवास, चाहता है। पुर, अम्, इस सुबन्तसे

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**दिवमिच्छति । दिव्यति । ४ क्यस्य विभाषा ६ । ४ । ५० । हलः परयोः क्यच्क्यङोर्लोपो वार्धधातुके । आदेः परस्य । अतो लोपः । तस्य स्थानिवत्वाल्लघूपधगुणो न । समिधिता, समिध्यिता ।**

---

इच्छा कर्तृसम्बन्धी तथा इच्छायाः कर्म सुवन्त 'पुर् + अम्' इत्यस्मात् क्यच् सनाद्यन्त धातुसंज्ञा सुपः लोपे हलि चेति दीर्घे, गीर्यं पूर्यं, इति क्यजन्त धातुः । आत्मसम्बन्धी वाणी या **ग्रामकर्मक इच्छानुकूलव्यापारो वृत्त्यर्थः** । लट् तिप् आदि कार्ये पूर्यति । धातोः = हलि च सूत्रसे रेफान्त और वान्त धातुके रेफ और व की उपधाको दीर्घ हो । यदि रेफ और व धातुके अन्तमें न होकर प्रातिपदिकके अन्तमें हो तो दीर्घ न होकर गृ धातुसे इच्छति अर्थे क्विप् । ऋकारको इत्व होकर गिर बना । यहाँ रेफधातुका है, इसलिए दीर्घ हुआ **गीर्यति** परन्तु नेह = इह न । आत्मनः **दिवम् इच्छति** । स्वयं स्वर्गकी इच्छा करता है । इच्छाकर्तृसम्बन्धी इच्छा कर्म सुवन्त दिव अम् व के उपधाको हलिचसे दीर्घ प्राप्त था, परन्तु धातुका 'व' न होने से दीर्घ नहीं हुआ । अयं वकारः प्रातिपदिकस्य **दीव्यति** ( **क्विप् विच्** ये अन्तमें हो तो धातुत्व नष्ट नहीं होता । दिवशब्द यदि क्विवन्त होता ( च्छ्वोः शूड से व को ऊठ्, यण् होकर द्युः हो जाता । यदि विजन्त होता तो, लघूपधगुण नहीं, लोप होने लगता । दिव स्वर्गवाची अव्युत्पन्न प्रातिपदिक है । अकार यकारलोपे । **वाचाञ्चकार** वाचिता, वाचिष्यति, वाच्यतु, अवाच्यत, अवाचीत् । **गिराञ्चकार** । गिरिता गीर्यतु अगीर्यत् अगिरीत् अगिरिष्यत् । **पुराञ्चकार** पुरिता अपूर्यत्, अपुरीत् । **दिवाञ्चकार दिविता** दीव्यतु अदीव्यत् अदेवीत् ।

( ४ ) **हल्सेपरे**—क्यच् और क्यङ्का विकल्प से लोप हो, सार्वधातु परे । **परस्य**='पर' में क्यच् क्यङ्को विधान किया कार्य, उसके आदि ( य ) को हो, य का शेष, अ का 'अतोलोपः से लोप । **तस्य**=उस अ के लोप को स्थानिवद्भाव होनेसे लघूपधगुणो न । क्योंकि उपधामें लघु नहीं मिलता । आत्मनः समिधम् इच्छति । अपनेसे सम्बन्धित लकड़ी चाहता है । समिध-अम् इस सुबन्तसे क्यच् प्रत्यय धातुसंज्ञा, विभक्तिलोप, समिध्य यह क्यजन्त धातु है । जिसका इच्छा क्रियाके कर्तृसम्बन्धी समिधाकर्मक इच्छानुकुल व्यापारः । **समिध्यति** समिधम् इयेष, समिधाञ्चकार ( परोक्षभूत कालिकसमिधकर्मक इच्छानुकूलाक्रिया समिधम् एष्टा एषिता वा **समिधिता** । समिध्य इति क्यजन्त धातोः लुट्, तास्–डा, इट् **समिध्यिता** । क्यच् विभाषा इति सूत्रेण आदेः परस्य सहकारेण यकारस्य लोपे । अतोलोपः इति अकारलोपे तस्य स्थानिवद्भावात् प्राप्तगुणस्य अभावें रूपम् । यदा यलोपो नभवति तदा द्वितीयं रूपम् । समिधम् एषिष्यति, **समिधिष्यति** । समिधम् इच्छतु **समिध्यतु** । समिधिम् ऐच्छत् । **असमिध्यत्** समिधमिष्यात्, **समिध्यात्** समिधम् ऐषीत् **असमिधीत्** । **पुत्रकाम्यसि** । सभी हलन्त धातुओं से क्यच् होनेपर विकल्प यलोप होता है ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

७२५ काम्यच्च ३।१।९। उक्तविषये काम्यच् स्यात्। पुत्रमात्मन इच्छति–पुत्रकाम्यति। पुत्रकाम्यिता। ६ उपमानादाचारे ३।१।१०। उपमानात् कर्मणः सुबन्तादाचारेऽर्थे क्यच्। पुत्रमिवाचरति–पुत्रीयति छात्रम्। विष्णूयति द्विजम्। (सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः)। (२७४) अतो गुणे। कृष्ण इव आचरति कृष्णति। स्व इवाचरति स्वति।

(७२५) उक्तविषये=इच्छाक्रियाका कर्मीभूत (इच्छाक्रिया सम्बन्धी अर्थ का वाचक) सुबन्तसे इच्छा अर्थ में काम्यच् प्रत्यय हो। आत्मनः पुत्रमिच्छति मनुः। अपने लिए पुत्रकी कामना करते हैं। इषधात्वर्थ इच्छा का कार्मीभूत। इच्छाकर्ताका सम्बन्धी 'अर्थ' पुत्र है। उनका वाचकसुबन्त पुत्र+अम् है अत्र इच्छार्थे काम्यच्। अनुवन्धलोपे। पुत्र, अम् काम्य। इति दशायाम् सनाद्यन्ता धावतः इति धातुसंज्ञा सुपोलुक्। पुत्र काम्य' इति नामधातुः। स्वसम्बन्धी पुत्र विषयिणी इच्छसि पुत्रकाम्यसि। पुत्रम् इच्छामि पुत्रकाम्यामि। पुत्रम् एष्टा इति पुत्रकाम्यिता (छात्रः वृतिं-काम्यति) वृत्तीयति पुत्र 'पुत्रकाम्य' इति नामधातोः लुट् तिप् आदि कार्यं अतोलोपः इति अकारस्य लोपे। पुत्रम् एष्यति पुत्र काम्यिष्यति। ऐच्छत् अपुत्रकाम्यत्। ऐषीत् अपुत्रकाम्यीत्। (६) उपमानात्= जिसका सादृश्य उपस्थितिक्रिया जाय उसे उपमान कहते। उपमान रूपकर्म, उपमानवाची सुबन्त से आचार, व्यवहार, आचरण, अर्थ में क्यच् हो सुबन्त कर्म और उपमानभी होना चाहिए यह क्यचका आचार चरित्र व्यवहारों अर्थः इच्छार्थक क्यचके समान है अर्थ भेद विग्रहसे निर्णय किया जाता है। आत्मनः पुत्रमिव आचरति छात्रम्। छात्रके साथ अपने पुत्र के समान व्यवहार करता है। पर पुत्र की तरह नहीं। आचरणकर्ता सम्बन्धी आचर क्रिया का कर्म पुत्र+अम् इस सुबन्तमें छात्र उपमेय है। उपमान वाची शब्द पुत्र है) सुबन्त से क्यच्। शेषकार्य पूर्ववत् (पुत्रीयति) पुत्रमिवाचरामि। पुत्रीयामि। पुत्रमिव आचचार इति पुत्रीयाञ्चकार। पुत्रमिव आचरिष्यति पुत्रीयिष्यति। यत्किञ्चित् कर्तृकपुत्रकर्मक आचारसदृशछात्रोद्देश्यकमाचरणम्। पुत्रमिव आचरत् अपुत्रीयत्। आचर्यात् पुत्रीयात्। पुत्रमिव आचारीत् अपुत्रीयीत। धार्मिकः द्विजं विष्णुमिव आचरति। धर्मात्मा ब्राह्मणके साथ बिष्णु तुल्य आचरण करता है। आचार क्रिया का कर्तृसम्बन्धी अर्थवाचक सुबन्तपद विष्णु-अम् उपामानादाचारेऽर्थे क्यच्। धातुसंज्ञा सुपोलुक् अकृत सार्वधातुकयोः दीर्घः विष्णूय (आचारक्रिया कर्तृसम्बन्धी उपमानकर्मक व्यवहारानुकूलाक्रिया। विष्णुमिव आचरामि विष्णुयामि इत्यादि। (वा०) सभी प्रातिपदिकोसे आचार, (सुन्दरव्यवहार) अर्थमें क्विप् प्रत्यय विकल्पसे हो। क्विप्का सर्वापहारलोप। क्विप्प्रत्यय होनेपर अतोगुणेसे मकार का लोप। कृष्ण इव आचरति दैत्यः आचरणकर्ता प्रथमान्त पद हो "उपमानवाची

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

**सस्वौ । ः अनुनासिकस्य क्विझलोः क्ङिति ६ । ४ । १५ । अनुनासिकान्तस्योपधाया दीर्घः स्यात् क्वौ झलादौ च क्ङिति । इदमिवाचरति = इदामति । राजेव=राजानति । पन्था इव=पथीनति ।**

हो तब आचार अर्थमें क्विप् । परन्तु प्रातिपदिकसे ही क्विप् का विधानहोने से सुबन्त न होनेपर विना पदान्तके भी पररूप होता है । कृष्ण इति । यह क्विबन्तनाम धातु है । जिसका आचारविषयिणी कर्तृसम्बन्धिनी उपमानभूत होनेके अनुकूल क्रिया अर्थः ; **कृष्णति,** कृष्णतः, कृष्णन्ति । कृष्णकर्तृक आचरण सदृश-आचरणं चैत्रकर्तृकम् । कृष्णिता कृष्णइव आचचार इति कृष्णाञ्चकार । अकृष्णत् अकृष्णताम् अकृष्न् । कृष्यात् कृष्यास्ताम् । अकृष्णीत् । अकृष्णिष्टाम् अकृष्णिषुः । **स्वइवाचरति स्वति** । अपने समान अपने लोगों के साथ व्यवहार करता है । इत्यर्थे सर्वप्रातिपदिकेभ्य इति क्विप् आचारे अर्थे । सर्वापहारलोपे, धातुसंज्ञा, वर्तमाने लट् शप् **स्वति** । अतोगुणे इति पररूपे **स्वति** शरीरम् शरीरमें आत्माकी तरह आशक्त है, आत्मकर्तृकम् आचरणसदृशाचरणं शरीरकर्तृकम् **स्वतः स्वन्ति** । स्वसि स्वथः स्वथ । स्वामि स्वाव स्वाम । **सस्वौ** = स्वइव आचचार रामः । स्व-इस प्रातिपदिक से लिट् तिप् णल् । स्व इत्यस्य द्वित्वे, अभ्यासादिः सस्व अ णल्परे स्व-अकारस्य स्थाने (अचोऽञ्णिति) इति–वृद्धिः । स स्त्रा अ आकारान्तसे परे णल् को औ । वृद्धिः । **सस्वौ** = वार्तिकार मते सस्वौ इत्येव रुपम् । सस्वतुः सस्वुः । सस्विथ सस्वथ सस्वथुः सस्व सस्वौ सस्विव, सस्विम **स्विता,** स्विष्यति, स्वतु स्वेत् अस्वीत् । ( ७ ) अनुनासिककान्तधातुकी उपधाको दीर्घ हो, झलादि कित् ङित् तथा क्विपरे । **इदामति** अयम् इव **आचरति,** अमुक व्यक्तिके समान आचरण करना है । उपमान हो ।

तथा प्रातिपदिक हो, आचरण क्रियाके कर्तासे सम्बन्धित हो, तदा आचारे अर्थे क्विप् । सर्वापहारलोपे प्रत्ययलक्षणेन, अनुनासिकस्य क्वि-आदि सूत्रेण, अनुनासिकान्तस्य 'इदम् शब्दस्य उपधायाः अकारस्य दीर्घे । इदाम् इति नामधातुः । लट् तिबादिः । **इदामति इदामतः इदामन्ति** । नहि कश्चित् इदामति ( कोई इसकी तरह आचरण नहीं करता ) इदम् इव आचचार इति । **इदामाञ्चकार** । नपुंसककी तरह आवरण किया । इदम् इव आचरिष्यति इदामिष्यति । स्त्रीकी तरह आचरण करेगा । **इदामतु** ऐदामत्, इदामेत्, इदाम्यात् ऐदामीत्, ऐदामिष्टाम् । **राजानति**= राजाइव आचरति दम्भी, अहंकारी ( राजाके समान आचरण करता है । ) इत्यर्थे 'राजन्' इस प्रातिपदिकसे क्विप् प्रत्यय सर्वापहारिलोपे, 'अनुनासिकस्य क्वि'आदि सूत्रेण दीर्घे । राजान् इति नामधातुः राजसदृशम् आचरणमर्थः । लडादिकार्ये । दरिद्रोऽपि **राजानति** । तो **राजानतः** । ते राजानन्ति । राजानाञ्चकार राजानिता, राजानिष्यति । राजानतु अराजानत्, राजान्यात् अराजानीत् । **पथीनति** । पन्था इव आचरति । यह मार्ग सड़ककी तरह हो रहा है । क्विप् सर्वापहारि लोपे अनुनासिककी उपधाको दीर्घ । **पथीनति** । पथीनाञ्चकार, पथीनिष्यति । **अपथीनत्** । पथीन्यात् । अपथीनीत् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

८ कष्टाय क्रमणे ३ । १ । १४ । चतुर्थ्यन्तात् कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात् । कष्टाय क्रमते – कष्टायते । पापं कर्तुमुत्सहते, इत्यर्थः । ९ शब्दवैर-कलहाभ्र-कण्व-मेघेभ्यः करणे ३ । १ । १७ । एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात् । शब्दं करोति = शब्दायते । तत्करोति तदाचष्टे' इति णिच् । ( प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च ) = प्रातिपदिकाद्धात्वर्थे

---

( ८ ) कष्टाय कष्टं पापम् । तस्मै पापाय क्रमणे उत्सहते (क्रमपादविक्षेपे) पापके लिए पैर बढ़ाने अर्थमें क्यङ् ( य ) चतुर्थी विभक्ति अन्तमें हो ऐसे कष्ट शब्द से उत्साह अर्थ में क्यङ् प्रत्यय हो । चतुर्थ्यन्त कष्ट ङे, से उत्साह ( कदम बढ़ाने अर्थमें ) कष्टाय क्रमणे इति सूत्रेण क्यङ् = ( य ) धातुसंज्ञा ङलुक्, अकृत सार्वधातुकयोः दीर्घः 'कष्टाय' इति सनाद्यन्तधातुः । पापकर्मविषयक उत्साहानुकूलव्यापारो धात्वर्थः लट् तिप् शप् आदिः । प्रकृत्यर्थ, प्रत्ययार्थ समुदायार्थका ज्ञान आवश्यक है । स कष्टायते कष्टायेते कष्टायन्ते । कष्टायाम्बभूव । कष्टाय क्रान्ता, कष्टायिता । कष्टाय क्रंस्यते, कष्टायिष्यते । अक्रमत् अकष्टायत् अकष्टायेताम्, क्रंसीष्ट कष्टायिषीष्ट अक्रंसत अकष्टायिष्ट ।

( ९ ) एभ्यः = शब्दवैरकलह, अभ्रकण्व, मेघ, ये कर्म हो, ऐसे धातुसे करोति अर्थमें क्यङ् ( य ) प्रत्यय हो शब्दायते, शब्दं करोति । आवाज करता है । इस विग्रहमें करोति क्रियाका कर्ता सम्बन्धी-शब्द कर्मकध्वनिकरण क्रिया अर्थमें क्यङ् । शब्द + अम् से करण अर्थमें क्यङ् = य अकृतसार्वधातुकयोः इति दीर्घे । शब्दाय, इति समुदायः, ङित् तस्य फलम् आत्मने पदम् शबादिकार्ये शब्दं कुरुतः शब्दायेते । शब्दं कुर्वन्ति, शब्दायन्ते । शब्दं चकार इति शब्दायामास शब्दायिता । शब्दं करिष्यति शब्दायिष्यते । शब्दायताम् = शब्दं करोतु । कुरुताम्, अशब्दायत शब्दायिषीष्ट । शब्दमकार्षीत् अकृत वा अशब्दायिष्ट वैरं करोति वैरायते । कलहं करोति कलहायते । अभ्रं करोति, अभ्रायते । कण्वं पापं करोति इति कण्वायते, मेघं करोति इति मेघायते । ( वा० ) तत्करोति = तम् द्वितीयान्तशब्दसे करोति या आचष्टे कहने अर्थमें णिच् प्रत्यय हो, घटं करोति आचष्टे वा ( घड़ाको बनाता है या उसे समझाता है ) द्वितीयान्त घट + अम् से उक्त अर्थमें णिच् = इ ति, सुप् ( अम् ) का लोप यथा—( वा० ) प्रातिपदिक से धातुके अर्थमें णिच् प्रत्यय बहुल करके हो, इष्ठवच्च' = वह णिच् इष्ठन् प्रत्ययके सदृश हो । जैसे—इष्ठन् प्रत्ययपरे प्रातिपदिकको पुम्वद्भाव, रभाव, टिलोप, विन् और मतुपका लोप यणादि लोप, प्रस्थ, स्फ आदि आदेश और भ संज्ञा ये कार्य होते हैं । इसीप्रकार णिच् परे भी उक्त कार्य हों । 'इति ब्वार्तिकेन णिच् परे भसंज्ञा 'यस्येति च' इति अकारलोपे । घटि धातुः लट् तिप् शबादिः । घटं कुर्वन्ति घटयन्ति । घटं करोषि,

२०

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

णिच् स्यात्, इष्ठे यथा प्रातिपदिकस्य पुंवद्भाव-रभाव-टिलोप-विन्मतुब्लोप-यणादिलोप-प्र-स्थ-स्फाद्यादेश-भसंज्ञास्तद्वण्णावपि स्युः। इत्यल्लोपः घटं करोत्याचष्टे वा घटयति।

इति नामधातवः

## अथ कण्ड्वादयः

७३० कण्ड्वादिभ्यो यक् ३।१।२७। एभ्यो धातुभ्यो नित्यं यक्

---

घटयसि। घटं कुर्मः, घटयामः। घटयाञ्चकार। घटं करिष्यति घटयिष्यति। घटम् अकरोत् अघटयत्। घटं कुर्वीत् घटयेत्। अकार्षीत् अकृतवा अजघटत्। सुपो धातु इति सुपोलुक् पुम्वद्भावश्च। पट्वीमाचष्टे पटयति। अत्र पुम्बद्भावभसंज्ञे भवतः। दृढ़ं करोति द्रढ़यति। अत्र णिच् परे रभावः। पटुमाचष्टे पटयति। ( णिच् परे टि लोपः ) स्रग्विणं आचष्टे स्रजयति। णिच् परे विन् प्रत्ययस्य लुक्। श्रीमन्तं करोति श्राययति। मतुपो लुक्। स्थूलम् आचष्टे स्थवयति। दूरं करोति दवयति अत्र णिच् परे यण् आदिःलोपे। प्रियमाचष्टे प्रापयति णिच् परे प्रिय शब्दस्य प्रादेशे। स्थिरं करोति स्थापयति। स्थिर शब्दस्य स्था आदेशे। स्थिरम् आचष्टे स्थापयति। आचष्टे आचक्षाते आचक्षते। आचचक्षे आचख्यौ आचक्षिता अचक्षिष्यते। आचक्षताम् आचक्षीत् आचक्षिषीष्ट। आचक्षिष्ट ये विग्रहके साधन हैं।

इति प्रभाकर्यां नामधातवः।

अथकण्वादिः (७३०) कण्ड्वादिगणमें पठित् धातुओंके अर्थका बोधक नित्य यक् प्रत्यय हो। स्वार्थे = स्वं प्रकृतिः तस्य अर्थः स्वार्थः यह यक् अपनी ही प्रकृतिके अर्थको कथयति। कण्ड्वादि दो हैं। धातु और प्रातिपादिक। धातु से ही यक् हो ( कित्का फल भी हो ) प्रातिपदिकसे न हो। अतः धातु विशेषण दिया। ( १ ) कण्डू धातुका गात्रस्य ( शरीरस्य, विघर्षणम् = खुजलानेके अनुकूलक्रिया अर्थः। इसी अर्थका वाचक कण्डूधातुके उपदेशावस्थामें अन्त्य हल् ञ-इत् हुआ। ततः कण्ड्वादिभ्यो यक् इति स्वार्थे यक्। ह्रस्व उकार हो वहाँ दीर्घ कण्डूय सनाद्यन्तधातुसंज्ञा वर्तमानकाले कर्तरि लट् तिप् शप् पररूपे कण्डूयति

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वैनतेयः । ८ कन्यायाः कनीन च ४ । १ ११६ । चादण् कानीनो=व्यासः, कर्णश्च । ९ राज-श्वशुराद् यत् ४ । १ । १३७ । ( राज्ञो जातावेवेति वाच्यम् ) ।

१०२० ये चाऽभावकर्मणोः ६ । ४ । १६८ । यादौ तद्धिते परेऽन् प्रकृत्या स्यान्न तु भावकर्मणोः । राजन्यः । श्वशुर्यः । जातावेवेति किम्– १ अन् ६ । ४ । १६७ । अन् प्रकृत्या स्यादणि परे राजनः । २ क्षत्राद् घः ४ । १ ।१३८ । क्षत्रियः । जातावित्येव । क्षात्रिरन्यत्र । ३ रेवत्यादिभ्यष्ठक् ४ । १ । १४६

---

।८। कन्याशब्दको अपत्य अर्थमें कनीन आदेश हो, च=अण् भी हो । कानीनः । कन्यायाः पुत्रः, अविवाहितास्त्री की सन्तान । सत्यवती से व्यास, कुन्ती से कर्ण कानीन है । कन्या ङस् इत्यस्मात् अण् प्रत्यये कन्या स्थाने कनीन आदेशादिः कानीनः । ९ । राजन् और श्वसुर शब्द से यत्प्रत्यय, अपत्य अर्थमें हो । (वा०) राजन्शब्दसे जाति अर्थमें ही यत्प्रत्यय हो अपत्ये नहि । इससे यत्प्रत्यय जाति अर्थका परिचायक है ।

। १०२० । ये=यकारात्तद्धित प्रत्ययपरे अन्को प्रकृतिभाव ( जैसा है वैसा रहे ) हो नतुभाव कर्मणोः भाव और कर्म अर्थ में अन्को प्रकृतिभाव न हो । राज्ञः [ जातिः ] राजन्यः [ क्षत्रियजातिः ] वार्तिकनियमसे जाति अर्थमें राजश्व-सुराद्यत् सूत्रसे यत् नस्तद्धिते इतिभसंज्ञक टि [ अन् ] लोपे प्राप्ते, येचाभाव-कर्मणोः इति प्रकृतिभावे राजन्यः । क्षत्रियात्—स्व विवाहिता क्षत्रियजातिकी स्त्रीमें उत्पन्न सन्तान से यत्प्रत्ययः । मूर्धाभिषिक्तोराजन्यः बाहुजः क्षत्रियोविराट इत्यमरः जातौ–राजन् शब्दसे जाति अर्थमें यत् क्यों कहा ? इसलिए कि अपत्यादि अर्थमें यत्प्रत्यय न हो यथा–राज्ञों अपत्यं पुमान् [ राजाओं से उत्पन्न सन्तान ) जाति भिन्न अपत्य अर्थमें अण् टिलोपे प्राप्ते । १ । अणपरे अन्को प्रकृतिभाव हो। इति प्रकृति भावे राजनः । वैश्य शूद्र जाति की कन्या में क्षत्रियसे उत्पन्न सन्तान राजन है । श्वसुरस्यापत्यं पुमान् ससुरका लड़का अर्थमें श्वसुरशब्दसे राजश्व-सुरात् यत्प्रत्यये आकारलोपे, श्वसुर्यः [ श्यालकः ] । २ । क्षत्रशब्दसे घप्रत्यय हो । जातावित्ति—यह घप्रत्यय जाति अर्थ में ही हो । क्षत्रस्यजातिः क्षत्रियः । क्षत्रशब्दात् 'जाति' अर्थे घः, घस्थाने 'आयनेयी' आदि सूत्रेण इयादेशे, अन्त्य अकारलोपे, अन्यत्र जातिंभिन्न अर्थमें क्षत्रस्यापत्यम् ( अत इञ् ) आदिवृद्धिः अस्य लोपे क्षात्रिः । क्षत्रनामक पुरुषकी सन्तान । ३ । रेवती आदि समर्थशब्दोंसे,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

४ ठस्येकः ७ । ३ । ५० । अङ्गात् परस्य ठस्येकादेशः स्यात् । रैवतिकः ।

१०२५ जनपदशब्दात् क्षत्त्रियादञ् ४ । १ । १६८ । जनपदक्षत्त्रियवाचकाच्छब्दादञ् स्यादपत्ये । पाञ्चालः ( क्षत्त्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् ) पञ्चालानां राजा—पाञ्चालः । ( पूरोरण् वक्तव्यः ) पौरवः । ( पाण्डोड्यण् ) पाण्ड्यः । ६ कुरु-नादिभ्यो ण्यः ४ । १ । १७२ ।

---

अपत्य अर्थमें ठक् [ क इत् ] ठ हो । ४ । ठस्य—अङ्गसंज्ञक शब्द से परे ठस्थाने इक् आदेश हो । रेवत्याः अपत्यं रेवती ङस् रेवत्यादि भ्यष्ठक्, ठस्य स्थाने ठस्येकः, 'इक्' आगमे रेवतीं इक्आदिवृद्धिः, यस्येतिच ईकारलोपे, तद्धितान्तत्वात्, प्रा० संज्ञा प्रथमायाः एकवचने रैवतिकः—रेवती से उत्पन्न पुत्र ।

। १०२५ । जनपद शब्दात् जनपदनाम यस्य स वाचकोशब्दः जनपद शब्दः एवं च जनपदवाचक शब्द होकर क्षत्रियवाचक शब्द हो तव षष्ठ्यन्त समर्थसे अपत्यअर्थमें अञ् पञ्जाबप्रान्त या पञ्जाबी क्षत्रिय दोनों पाञ्चालः हैं । पञ्चालस्य अपत्यं विग्रहे पञ्चाल ङस् अस्मात् जनपदशब्दात् इति सूत्रेण अपत्ये अर्थे अञ्प्रत्यये, आदिवृद्धिः, अलोपे पाञ्चालः । ( वा० ) क्षत्रिय=जातिवाचक शब्दके समान यदि जनपदात्=जनपद वाचक शब्द भी हो उसे राजन्यपत्यवत्= राजा अर्थ में अपत्य के समान अर्थ हो पाञ्चालः । अङ्गबङ्गमगधकलिङ्ग आदि शब्द देशवाची, राजावाची भी है । देशवाचीअर्थमें बहुवचनान्त हैं । राजवाचीमें एकवचनान्त । यहाँ पञ्चालस्य राज्ञो अपत्यम् इस विग्रहमें अपत्य प्रत्यय । जहाँ देशवाची वहां पञ्चालानां राजा षष्ठीबहुवचनान्तसे राजाअर्थमें पञ्चालानां— देशविदेशके राजाका ( राजा अर्थमें ) अपत्यार्थ के समानरूप अण् । आदिवृद्धिः इत्यादि । शब्दसमान होते हुए अर्थमें अन्तर :—पञ्चालस्य राज्ञो अपत्यं पाञ्चालः । पंजाबी राजा का पुत्र । दूसरेमें पंजाबियोंका राजाअर्थ । रूपसमान । ( वा० ) पुरोरण्—पुरुशब्द से राजा अर्थ और अपत्य अर्थमे अण्प्रत्यय हो । पुरोः राज्ञो अपत्यं पुरुवंशीराजा की सन्तान पौरवः । अण् आदिवृद्धिः, ओर्गुणः, पुरूणां राजा पौरवः पुरुवंशियो का राजा अर्थ । ग० । पाण्डुशब्दसे राजाअर्थमें ड्यण् ( य ) हो । डित्फलं टिलोपः यद्यपि पाण्डुशब्द श्वेत और पाण्डवजनकका बोधक है तथापि देश और क्षत्रिय अर्थ ही ग्राह्य है । पाण्डोः अपत्यं पाण्डु देश का राजा या सन्तान अर्थ में ड्यण् ( य ) टि ( उ ) का लोप पाण्ड्यः । ६ । कुरु और नकारादि शब्द जनपद और वहांके निवासी क्षत्रिय के वाचक हों, तव राजा और अपत्य अर्थ में ण्यप्रत्यय हो । कुरोः राज्ञो अपत्यं कुरुवंशी राजाका पुत्र अथवा कुरुणां कुरुनामक देशस्यराजा कौरव्यः । कुरुशब्दात् अपत्ये राजनि

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

कौरव्यः । नैषध्यः । ७ ते तद्राजाः ४ । १ । १७४ । अञादयस्तद्राजसंज्ञाः स्युः । ८ तद्राजस्य बहुषु तेनैवास्त्रियाम् २ । ४ । ६२ । बहुष्वर्थेषु तद्राजस्य लुक्; तदर्थकृते बहुत्वे; न तु स्त्रियाम् । इक्ष्वाकवः । पञ्चालाः इत्यादि । ९ कम्बोजाल्लुक् ४ । १ १७४ । अस्मात्तद्राजस्य लुक् । कम्बोजः । कम्बोजौ (कम्बोजादिभ्य इति वक्तव्यम्) चोलः शकः । केरलः । इत्यपत्याधिकारः ।

---

चार्थे 'ण्य' ( य ) आदिवृद्धिः उकारस्य गुणे अवादेशे प्रथमैकवचने निषधस्य अपत्यं निषधके राजा का पुत्र या निषधानां देशविशेषाणां राजा ( नलः ) निषध शब्द नकारादि है । ण्य, आदिवृद्धिः, अन्त्यलोपादिः नैषध्यः । ७ । ते— अञादयः अपत्य और राजा अर्थ में विधान किये गये इञ्, अञादिको तद्राज संज्ञा हो । ८ । बहुषु–बहुवचन अर्थ की विवक्षा में । जिसको तद्राजसंज्ञा हुई हो । ऐसे प्रत्यय का लोप हो, तदर्थकृते—वह बहुवचन तद्राज प्रत्यय के अर्थ में हो, ( स्त्रीलिङ्ग में लुक् न हो ) इक्ष्वाकुवंशी राजाका लड़का या राजा परन्तु बहुवचन में इक्ष्वाकूणां राजा ( अर्थमें ) इक्ष्वाकुशब्दात् 'जनपदशब्दात्' सूत्रसे अञ् बहुवचनमें अञ् प्रत्ययको 'तेतद्राजा' इति तद्राजसंज्ञा, उससे परे तद्राजसंज्ञक अञ् का लुक् बहुवचने जस् इक्ष्वाकवः । जनपद का राजा एवं पाञ्चालः पाञ्चाली पञ्चालाः । पञ्चालानां राजा इत्यर्थे तद्राजसंज्ञक अञ्प्रत्ययस्य लुक् ( जस् ) विभक्तौ रूपम् । ९ । कम्बोजशब्दसे तद्राजसंज्ञकका लोप हो, कम्बोज शब्द भी जनपद और क्षत्रिय वाचक है । कम्बोजानां राजा कम्बोज देश का राजा । क्षत्रियः । कम्बोज आम् राजा अर्थे अञ्प्रत्यये, तद्राजसंज्ञा तस्यलुक् ( वा० ) कम्बोज आदिगणपठित शब्दों से लुक् हो । चोलस्य राज्ञो आपत्यं या चोलानां राजा अञ्, तद्राजसंज्ञा लुक् चोलः । एवं शकस्य जनपदस्य राज्ञो अपत्यं शकानां राजा शकः द्व्यच् मगध इति अण् । केरलस्य राज्ञः पुत्रः केरलानां राजा । केरलः । यवनशब्द भी देश या क्षत्रिय विशेषका वाचक है । यवनानां राजा जनपदशब्दात् अञ् लुक् अपत्यअर्थ विभिन्न प्रत्ययों का प्रसङ्गः पूर्ण ।

इति प्राभाकर्यामपत्याधिकारः ।

अथरक्ताद्यर्थका :—अपत्यार्थके अनन्तर रक्तः—लालरङ्गवाचक शब्द हो आदिमें जिसके ते रक्तादयः । रक्त, युक्त, दृष्ट, परिवृत, संस्कृत, सास्यदेवता, समुह, तदधीते इत्यादयः अर्थाः येषान्ते ( ये अर्थ है जिनके ) वे प्रत्यय रक्ताद्यर्थकाः है । उनका प्रकरण । इसमें तृतीयान्त ( क्रियाकारकभाव ) समर्थ ( साधन अर्थ ) से कार्यका महत्वविशेष है ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ रक्ताद्यर्थकाः

१०३० तेन रक्तं रागात् ४ । २ । १ । अण् स्यात् रज्यतेऽनेनेति रागः । कषायेण रक्तं वस्त्रं-काषायम् । १ नक्षत्रेण युक्तः कालः ४ । २ । ३ । अण् स्यात् (तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्) पुष्येण युक्तं- पौषमहः । २ लुबविशेषे ४ । २ । ४ । पूर्वेण विहितस्य लुप् स्यात् षष्टिदण्डा-

---

। १०३० । तेन—(साधन से)। तृतीया विभक्तिका साधन अर्थ है । क्रिया की सिद्धि में साधकतमं करणं रक्तं, लालवर्णादि (रङ्ग कार्यं) रागात् रज्यते अनेनं रागः तस्मात् रंगने का साधन (कारण) नील, पीत, हरित, कपिश, आदिकारणसे रंगरूप कार्यंअर्थ में अणप्रत्यय हो । अर्थात् रञ्जक द्रव्यवाचक रङ्ग आदि साधन (कषाय) शब्दसे रंगे हुए वस्त्रादि अर्थ में अण् हो । यथा—कषायेन (गेरुआ रङ्ग से) रक्तं— रंगा हुआ वस्त्र काषायं यहां तृतीयान्त साधन गुणगुविभावसमर्थ रंगवाचक कषायशब्दात् रक्तं (रंगा हुआ अर्थ में) कषाय टासे तेन रक्तं रागात् सूत्रेण अण् । प्रा० संज्ञा सुपोलुक् आदिवृद्धिः । यस्येति अकारलोपे स्वादिः । कषायगुणसे गुणवान् वस्त्र तद्धितार्थः । १ । नक्षत्रेण=नक्षत्र, अश्वनी भरणी इत्यादि से युक्त—सम्बद्ध, आधारित, काल अर्थ में प्रथम उच्चारित नक्षत्रवाचक शब्दसे अण् हो । नक्षत्रका सम्बन्ध चन्द्रमासे विशेष हो । जैसे :—पुष्यनक्षत्रसे युक्त पूर्णमासी का चन्द्रमा जिसमासमें हो उसे पौषं कहते हैं । (वा०) तिष्य और पुष्य शब्दों से नक्षत्रयुक्त काल अर्थ में अण् हुआ हो, तब 'य' का लोप कहना चाहिए । नक्षत्र युक्त काल ही प्रत्यय का अर्थ है । पुष्य नक्षत्र से युक्त चन्द्रमा से युक्त (सम्बद्ध) दिन, पूर्णिमा अवश्य होनी चाहिए । आधाराधेय सामर्थ्यवान् तृतीयान्त, कारणभूत, नक्षत्रवाचक पुष्येण (शब्द से) पुष्यनक्षत्रयुक्त, चन्द्रमायुक्त, काल अर्थमें नक्षत्रेण युक्तः कालः सूत्रेण अण् (ण इत्) प्रा० संज्ञा सुप्लोपे, पुष्य+अ आदिवृद्धिः अलोपे; वार्तिकेन यलोपे, स्वादिकार्ये नपुंसकलिङ्गे, प्रथमायाः एकवचने रूपं पौषम् (अहः) पूसमहीनेका दिन या पूर्णमासी । २ । अत्र नक्षत्रेणयुक्तः काल इति सूत्रात् अण् अनुवर्तते, षष्ठ्या विपरिणमते, अत आह पूर्वेण—पूर्वसूत्रसे विधान किये गये अणका लोप हो । अविशेषे—कोई विशेषता अन्तरं न प्रतीत हो कि, षष्ठीदण्डात्मकस्य—षष्ठिदण्डः (साठघड़ी) आत्मा (है) यस्य (जिसका) (२४ घंटे) के कालका अवान्तरविशेष (अन्य दिन, रातका विशेष--भेद) न गम्यते—प्रतीत न होता हो, तब अण् का लुक् हो । दिन है कि रात यह ज्ञात नहीं । यथा अद्यपुष्यः पुष्यनक्षत्रयुक्त चन्द्रमा युक्तकाल अद्य है पुष्यसे अण्प्रत्यये ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

टमकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते । अद्य पुष्यः । ३ दृष्टं साम ४ । २ । ७ । तेनेत्येव । वसिष्ठेन दृष्टं-वासिष्ठं साम । ४ वामदेवाड्ड्यड्ड्यौ ४ । २ । ९ । वामदेवेन दृष्टं साम-वामदेव्यम् ।

१०३५ परिवृतो रथः ४ । २ । १० । अस्मिन्नर्थेऽण् प्रत्ययो भवति । वस्त्रेण परिवृतो-वास्त्रो रथः । ६ तत्रोद्धृतममत्रेभ्यः ४ । २ । १४ ।

---

परन्तु उससे दिन या रात रूप काल का निश्चय न होने से लुबविशेष—अविशेषे (दिन रात के भेद की विशेषता (अन्तर्भेद) न होने से) अण् का लुप्—अद्यपुष्यः । आज पुष्य नक्षत्र से युक्त काल है । यहां कालमात्र की प्रतीति हो रही है । अद्य २४ घटे (पूरी तारीख) १२ बजे दिनसे १२ बजे रात तक काल मात्रकी प्रतीति । ३ । दृष्टं —देखा गया, सामवेद, 'तेन' इति अनुवर्तते । तृतीयान्तात्—साधन और दर्शक दृश्यसम्बन्धसमर्थ तृतीयान्तशब्दसे दृष्ट साक्षात्कार ज्ञानप्राप्त, प्रत्यक्ष विषयीभूत यदि सामवेद हो तभी अण् हो । वसिष्ठ ऋषि से दृष्टं —प्रत्यक्ष विषयीभूतं (देखा गया) सामवेद उसको वासिष्ठम् कहेंगे वशिष्ठेन दृष्टं, लौकिकं वाक्यं, तृतीयान्त दर्शकदृश्यसम्बन्ध समर्थ वशिष्ठशब्दात् अण् आदि वृद्धिः, अलोपे स्वादिः । मन्त्रद्रष्टा (ऋषि) वशिष्ठ से देखा गया साममन्त्र । ४ । तृतीयान्त दर्शक दृश्यभावसमर्थं वामदेव शब्द से दृष्टं सामवेदका मन्त्र देखा ) अर्थं में ड्यत् (य) प्रत्यय हो । वामदेव से साक्षात (देखा गया) साममन्त्र वामदेव्यं है । तृतीयान्तसमर्थ वामदेव शब्दात् (दृष्टं साम) इत्यर्थे ड्यत् या ड्य (ड् इत्) होनेसे टि (अ) का लोप स्वादिः । रूप एक समान । परन्तु त इत् होनेसे परिस्वरित और उदात्त का अन्तर ।

। १०३५ । परिवृतः—चारों तरफ से घिरा हुआ । अस्मिन्नर्थे—इस अर्थमें तृतीयान्तसाधन परिवृतपरिवर्तकभावसमर्थ शब्द से परिवृत घिरा हुआ अर्थ में अण् । अथवा उपलक्षण द्विचक्रिका, त्रिचक्रिका तैलयानी (कार) आदिका । वस्त्रसे घिरा हुआ रथ आच्छादित या लिपटा हुआ अर्थ में, तृतीयान्त आच्छादन समर्थ साधनभूत, वस्त्र टा से अण् (अ) आदिवृद्धिः अलोप इत्यादिकार्यं । यहां तक रक्त लुप्त, दृष्ट, परिवृत्त, चार अर्थमें प्रत्ययका विधान हुआ । रथो-वास्त्रः । वास्त्री द्विचक्रिका, तैलयानीच । ६ । तत्र—सप्तम्यन्तपदसे उद्धृतं [ निकालकर रक्खा हुआ ] अर्थमें अमत्र—पात्रवाचक शब्द से अण् हो । अमत्रेभ्यः में बहुवचनसे छोटा बड़ा अनेक पात्र । शरावो मृन्मयपात्रं । मिट्टी का पात्र कड़ाहा कड़ाही, भगोना, चादर, आदि । शरावे उद्धृत (पात्रमें निकाला हुआ ) इति विग्रहे सप्तम्यन्त उत्सृज्यं उत्सर्जकसमर्थ सप्तम्यन्त [ शराव ङि ]

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शरावे उद्धतः शाराव ओदनः। ७ संकृतं भक्षाः ४।२।१६। सप्तम्यन्ता-दण् स्यात् संस्कृतेऽर्थे यत् संस्कृतं भक्षाश्चेत् स्युः। भ्राष्ट्रेषु संस्कृता :— भ्राष्ट्राः = यवाः। ८ साऽस्य देवता ४।२।२४। इन्द्रो देवता अस्येति ऐन्द्रं = हविः। पाशुपतम्। बार्हस्पतम्। ९ शुक्राद् घन ४।२।२६। शुक्रियम्।

१०४० सोमाट्ट्यण् ४।२।३०। सौम्यम्। १ वाय्वृतुपित्रुषसो यत् ४।

---

अस्मात् तत्रोधृतममत्रेभ्यः सूत्रेणाण् आदिवृद्धी अलोप आदिकार्ये, कटाहे उद्धृतः काटाहः सूपः। पात्रे उद्धृता पात्रा, यवागू।७। अत्र 'अण्' तत्र इति अनुवर्तते। सप्तम्यन्त संस्कार्यसंस्कारक भाव समर्थशब्दसे संस्कृतं [ संस्कार किया गया ) अर्थमें अण् हो। परन्तु संस्कार किया पदार्थ, भक्ष्यन्ते इति भक्षाः कर्मणि घञ्—खाने की वस्तु हो। यथा—भ्राष्ट्रेषु भाड़में संस्कृताः = भूँजा गया जो चना भ्राष्ट्राः। भाड़का जौ के साथ भर्ग्य भर्जक [ भूँजना भूँजाने वाला सम्बन्ध ] सप्तम्यन्तभर्जनसमर्थ भ्राष्ट्र+सुप् शब्दात् पाकसंस्कारे [ भुने हुए जौ ] अर्थे अण् आदिवृद्धिः अलोप इत्यादि कार्ये। एवं दध्ना संस्कृतं दाधिकं = दहीवाड़ा अग्निषु संस्कृतम् आग्नं मृत्पात्रम् ] रसेषु संस्कृता रासाः [ रसगोलिका ] गुलाब जामुन।८। सा—प्रथमान्त समर्थ अस्य—सम्बन्धित, प्रथमोच्चारित देवतावाचक किसी भी समर्थ [ अधिकारसम्बन्ध, युक्त ] शब्दसे अस्य—सम्बन्धित अर्थमें अणादि हों। इन्द्र है देवता इस हवि के ( देवताभोग्य वस्तु ) ऐन्द्रम्। प्रथमान्त अधिकृत-अधिकारीभाव समर्थ देवतावाचक इन्द्रशब्दात् इन्द्रसम्बन्धी हविष ( वस्तु ) अर्थमें अण् ( देवता विशिष्टदेय ) इतना प्रत्यार्थ है। आदिवृद्धिः, अलोप आदिः। पाशुपतं, पशुपतिः ( भगवान् शंकरः ) देवता। अधिकृत अधिकारी हैं ) अस्य। इस वस्तु के वह हवि पाशुपतम्। पशुपति शब्दात्समर्थात् देवताविशिष्टदेये अर्थे अण् आदिवृद्धिरित्यादि। वृहस्पतिशब्दात् ण्यप्रत्यये, आदिवृद्धिः, इलोपे आदि। बार्हस्पत्यम्। सूर्यो देवता अस्य इति सौर्यं भोजनम्। मङ्गलः देवता अस्य माङ्गलं दधि। गुरुः देवता अस्य गौरवो ग्रन्थः। भगवान् देवता अस्य भागवतम्।९। शुक्रात्=शुक्रशब्दसे देवताअस्य अर्थमें घन् प्रत्यय हो। प्रथमान्त समर्थ शुक्र शब्दात् देवताविष्ट समर्थात् घन=घ तस्य ( घस्य ) आयनेयी' आदि सूत्रेण इय आदेशे अलोपे स्वा० शुक्रियं—शुक्राचार्यनिमित्तकदेवम्।

।१०४०। प्रथमान्त सोमशब्दसे सोमः देवता अस्य अर्थमें टयण्—य प्रत्यय हो। सोम्यं घृतं, सोमः, चन्द्रमा सदेवता अस्य सोमाट्यणसे टयण्, आदिवृद्धिः, अलोपे रुपम्। सौम्यं हवि। चान्द्रं वस्त्रं दधि। सौम्या ( वनस्पतिः ) सोमो वनस्पतीनां राजा।१। वायु, ऋतु, पितृ, उषस्, इनका प्रथमान्त समर्थशब्दसे

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

२।३१। वायव्यम्। ऋतव्यम्। २ रीङ्‌ऋतः ७।४।२७। अकृद्यकारे असार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः। (२३६) यस्येति च। पितृव्य-मातुल-मातामह-पितामहाः ४।२।३६। एते निपात्यन्ते। पितुर्भ्राता=पितृव्यः। मातुर्भ्राता=मातुलः। मातुः-पिता=मातामहः। पितुः पिता=पितामहः। ४ तस्य समूहः ४।२।३७। काकानां समूहः—काकम्।

---

साऽस्य देवताअर्थमें यत् ( य ) हो। वायुः देवता अस्य ( वायु है देवता इस वस्तु के ) अत्र प्रथमान्त सम्बन्ध समर्थवायुशब्दात् देवता अस्य ( देवतासम्बन्धी देने की वस्तु अर्थ में ) यत् वायु+य ओर्गुणः उकारस्यगुणे। वान्त अवादेशे स्वा० वायव्यम्। वायु देवता सम्बन्धी देय वस्तु। ऋतुः देवता अस्ति। ऋतुः ( वसन्तः ) देवता है इसके ( कामदेव ) यत् गुण आदिः पूर्ववत्। ऋतव्यम्। २। रीङः, अकृत्—कृदन्तभिन्न यकार, सार्वधातुक भिन्न यकार, और च्विप्रत्ययपरे ऋदन्त अङ्गको रीङ् आदेश हो। ऋस्थाने रीङ्। पित्र्यं–पितरोदेवता अस्य ( पितर है देवता इस हवि, पिण्ड आदि ) विग्रहे सास्य देवता सूत्रेण प्रथमान्त सम्बन्ध सामर्थ्यवान् पितृशब्दात् देवता अर्थे यत् ( वायुऋतुसूत्रेण ) पितृ+य यह कृद्भिन्न सार्वधातुक है, ऋदन्त अङ्गके ऋको ऋतः से रीङ् हुआ। यस्येति च इलोपे स्वादिकार्ये पित्र्यम्। पितरों के लिए देने की वस्तु। उषा देवता [ प्रातः काल के अभिमानी देवता ] सम्बन्धी देय अर्थ में यत् उषस्यम् अर्घ्यः प्रातः काल अभिमानी देवता सूर्य उनको देय अर्घ्य—पूजा। ३। ये निपातन [ सूत्रमें ग्रहण ] होने से सिद्ध स्वीकृति है अर्थविशेष—उपयोगिताकी दृष्टिसे प्रत्यय और अर्थ की कल्पना। पितुः भ्राता पितृव्यः। पिता का भाई चाचा ताऊ। पितृ शब्दसे भ्राता अर्थमें [ व्य ] प्रत्यय। मातुर्भ्राता [ माँ का भाई मामा ) मातृशब्दात् डुलच्प्रत्ययो निपातनात् भवति। उल् शेष, टि। (ऋकारलोपे)। मातुः पिता [ माताका पिता ] मातामहः [ नाना ] एवं पितुः पिता [ पिताका पिता ] पितामहः। बाबा दादा। मातृ, पितृशब्दसे पिता अर्थमें डामहच्—आमह टि (ऋ) लोपे, माता-महः। पितामहः। ये सभी अर्थं रक्तादिमें मान्य हैं। इति देवतार्थे प्रत्ययः। अब समूह अर्थ में प्रत्यय प्रस्तुत करते हैं। ४। तस्य—षष्ठयन्त समर्थसे समूह [समुदाय ] अर्थमें अण् हो। काकानां [ कौओंके ] समूहः–झुण्डको काकं, विशेष्य विशेषणभावसमर्थ षष्ठयन्त काकआम्। अस्मात्समूहे अर्थे अण् आदिवृद्धिः, अन्त्य अकारलोपे।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

१०४५ भिक्षादिभ्योऽण् ४।२।३८। भिक्षाणां समूहो-भैक्षम्। गर्भिणीनां समूहो-गार्भिणम्। इह (भस्याढे तद्धिते) इति पुंवद्भावे कृते—६ इनण्यनपत्ये ६।४।१६४। अनपत्यार्थेऽणि परे इन् प्रकृत्या स्यात्। तेन (९१९) 'नस्तद्धिते' इति टिलोपो न युवतीनां समूहो—यौवनम्। ७ ग्राम-जन-बन्धुभ्यस्तल् ४।२।४३। तलन्तं स्त्रियाम्। ग्रामता। जनता। बन्धुता। (गजसहायाभ्यां चेति वक्तव्यम्) गजता। सहायता। (अह्नः खः क्रतौ) अहीनः। ८ अचित्त-हस्ति-धेनोष्ठक् ४।२।४७। ९ इसुसुक्तान्तात् कः ७।३।५१।

---

।१०४५। भिक्षा आदि षष्ठ्यन्तसमर्थ से समुदाय अर्थमें अण्। अनेक भिक्षा का एक समुदाय कई भिक्षाका मिला हुआ होना भिक्षाणां समूहः भिक्षा शब्दात्सुबन्तात्समूहे अर्थ अण् आदिवृद्धिः लोपादिः भैक्षम्। अत्र अचित्तहस्तिधेनोष्ठक् इति ठक् प्राप्ते। अण्। अचित्त—अन्नसमुदाय है। गर्भिणीनां [ गर्भिणीके ] समूहः—झुण्डको गार्भिणम्। गर्भिणी आम् इति दशायाम अनुदात्तादेः अञ् प्राप्तः, तं बाधित्वा भिक्षादिभ्यो अण् आदि। गर्भिणी अण् इति दशायां भस्याढे ढ से भिन्न, तद्धितपरक भसंज्ञकको पुंवत् हो। इति पुंवद्भावे गर्भिन् अ नस्तद्धिते सूत्रसे टिलोप प्राप्त है। ६। अनपत्ये—अपत्य अर्थसे भिन्न अर्थमें अणप्रत्यय होने पर इन् को प्रकृतिभाव हो जैसा था वैसा रहे। अपत्य अर्थसे भिन्न समूह अर्थमें इन्को प्रकृतिभावे युवतीनां समूह युवतियोंका समुदाय यूनस्तिः इति प्रत्ययान्त युवतिशब्दात् समुदाये अर्थ अण् पुंवद्भावे ति निवृत्तः युवन् अ। अन् इति प्रकृति भावेन न टिलोपः आदिवृद्धिः यौवनम्। अत्र टिलोपो न भवति। इन् अणि अनपत्ये इति प्रकृतिभावात्। सत्रन्त युवती झुण्डको यौवृतं। अण् इलोपे। ७। ग्राम जन बन्धु ये षष्ठयन्त समर्थ सुबन्त हो समुदाय अर्थमें तल्। तलप्रत्ययान्त स्त्रीलिङ्गः है। ग्रामाणां समूहः [ गांवोंका समुदाय ] ग्राम+आम् समुदाये अर्थ तल् टाप् ] ग्रामता। जनानांसमूहः जनता। लोगोंका समुदाय, तल टाप्। बन्धूनां समूहः बन्धुता। भाइयोंकी एकता, तल् टाप्। [ वा० ] गज [ हाथी ] सहाय [ मददगार ] शब्दोंसे समूहे अर्थ तल्। गजानां समूहो गजता। सहायानां—सहयोगियोंका धर्म समूहः सहायता ( वा० ) अहन् शब्दसे समुदाय अर्थमें ख हो, यज्ञ अर्थ हो तब। अहीनः ( यज्ञः ] अह्नां दिनानां समूहेन साध्यः ( रात दिन होने वाला यज्ञ ] अहन् ख, तस्य ईन आदेशे टिलोपे रूपम्। ८। अचित्त चेतन शून्य वस्तु, हस्ति, धेनु—गायके। षष्ठ्यन्त समर्थसे ठक् हो, समूहअर्थमें। कइत्। ९। इस् उस् उक्, [ उ ऋ लृ ] और त अन्तमें हो उन समर्थ शब्दोंसे परे उ को क आदेश हो। इकको बाधकर शक्तूनांसमूहः शक्तुकों

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इस्-उस्-उक्-तान्तात् परस्य ठस्य कः। साक्तुकम्। हास्तिकम्। धैनुकम्।

१०५० तदधीते तद्वेद ४। २। ५९। १ न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ७। ३। ३। पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः किंतु ताभ्यां पूर्वौ क्रमादैचावागमौ स्तः। व्याकरणमधीते वेद वा-वैयाकरणः। २ क्रमादिभ्यो वुन् ४। २। ६१। क्रमकः। पदकः। शिक्षकः। मीमांसकः। इति रक्ताद्यर्थकाः।

---

का ढेर साक्तुकम् हाटकम्। बाजार। चेतन रहित शक्तु शब्द से समूहेऽर्थे उक्। ईसु-सुक्तात्तात्कः इति ठ स्थाने क आदेशे आदिवृद्धिः, शाक्तुकं गृहं पात्रं। हस्तिनां समूहः हाँथियोंका झुण्ड हास्तिकम् आयाति। विशिष्टसम्बन्ध समर्थहस्तिन् आम् शब्दात् अचित्तहस्तिधेनोः ठक् प्रा० संज्ञा सुपोलुक्; ठस्थाने इक् ( ठस्येकः ) टि ( इन् ) का लोप हास्तिकं हस्तिगृहम्। धेनूनां समूहः गायोका झुण्ड धेनुशब्दात् ठक् उगन्त मानकर ठस्थाने क, आदिवृद्धि, एकवचने। समूहार्थेप्रत्ययपूर्णः।

। १०५०। तं=द्वितीयान्तं, समर्थसुबन्तसे अधीत या वेद ( पढ़ा या ज्ञान करता है। अर्थमें कहेगये और कहे जानेवाले प्रत्यय हों। अणादि। १। पदान्त यकार और वकारसे परे अच्को वृद्धिनहो, किन्तु उनके ताभ्याम्—यकार वकारसे पूर्वौ पहले क्रमसे ऐच्=( ऐ औ ) आगम हो, यसे पूर्व ऐ, वसे पूर्व औ। यथा—व्याकरणम् अधीते, वेद, वा ( व्याकरणको पढ़ता है या जानता है ) द्वितीयान्त ज्ञाता ज्ञेयवर्तमानकालाध्ययन समर्थ सुबन्तव्याकरण अम् शब्दात् ( तदधीते तद्वेद) इति अध्ययनार्थे अण् यस्येति अलोपे, प्रा० सं०, सुलोपे णित्वात् प्राप्तां आदिवृद्धि बाधित्वा नय्वाभ्याम् आदि सूत्रेण वृद्धिनिषधे, किन्तु वृद्धिस्थाने ऐच्+( यकारसे पूर्वमें 'ऐ' हुआ ) स्वादिः वैयाकरणः। व्याकरण पढ़नेवाला। ग्रन्थमधीते ग्रान्थः। ( २ ) क्रमादि=क्रम, पद, धन, जटा, शिक्षा, आदि द्वितीयान्त समर्थ हों, अधीते, वेद अर्थमें वुन्=वुस्थाने अक्। क्रमम् अधीते वेदवा क्रमकः। वेदका पाठक्रम जाननेवाला। वु को अक् अन्त्य अकारलोपे। पदम् अधीते वेत्तिवा पदकः। पदपाठग्रन्थः पदम्। शिक्षापाठग्रन्थः शिक्षाम् अधीते वेत्तिवा। शिक्षकः मीमांसाम् अधीते ( मीमांसाशास्त्र पढनेवाला ) मीमांसकः यह रक्तम् अर्थ बोधक प्रत्ययसे लेकर अधीते वेदपर्यन्त अर्थ रक्ताद्यर्थकः समाप्तः।

इति प्राभाकर्यं रक्ताद्यर्थकाः।

अथचातुरार्थकाः—चतुर्णाम् अर्थानां समूहः चातुरर्थः ( चारअर्थोंका समुदाय ) तत्रभवाः=उन अर्थोंमें होनेवाले प्रत्ययाः चातुरर्थिकाः है। अथवा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ चातुरर्थिकाः

३ तदस्मिन्नस्तीति देशे तन्नाम्नि ४।२।६७। उदुम्बराः सन्त्यस्मिन्देशे औदुम्बरो देशः। ४ तेन निर्वृत्तम् ४।२।६८। कुशाम्बेन निवृत्ता नगरीकौशाम्बी।

१०५५ तस्य निवासः ४।२।६९। शिबीनां निवासो देशः शैवः। ६ अदूरभवश्च।४।२७०। त्रिदिशाया अदूरभवं नगरं-वैदिशम्।

---

चतुर्णां सूत्राणामर्थाः तत्र भवाः प्रत्ययाः इसप्रकरणमें चारप्रत्यय प्रमुख हैं। चारों देश अर्थके बोधक हैं १–वस्तु के कारण प्रसिद्ध देशः। २। क्रिया, निर्माण, सिद्धि द्वारा, व्यक्तिके नामसे प्रसिद्धदेश। ३—स्थान वास्तव्य निवासकेकारण प्रसिद्ध देश। ४—समीपसम्बन्धसे देशनगरकी प्रसिद्धि, ये चार अर्थ चातुरर्थिकनामसे प्रसिद्ध हैं। क्रमशः सूत्र उदाहरण। ३। तदस्मिन्=प्रथमान्त समर्थसे अस्मिन् ( सप्तम्यन्त आधार–अर्थमें ) अस्ति विग्रहमें प्रत्यय हो, वह प्रत्ययान्त शब्द तन्नाम्नि=उसी शब्दसे सम्बद्ध देश प्रसिद्ध हो। ऐसे प्रत्यय कुछ कहे गये हैं कुछ कहे जायेंगे। यथा–उदुम्बराः सन्ति अस्मिन्देशे उदुम्बरका देश के साथ आधार आधेयभाव रहते प्रथमान्तवस्तु उदुम्बर जस्। 'तदस्मिन्' सूत्रेण अण् आदि वृद्धिः अलोपे औदुम्बरः ( जिसदेशमें गूलरका ) पेड़ हो। एलाः सन्ति अस्मिन्देशे ऐलः। गोधूमाः सन्ति अस्मिन्देशे गौधूमः। पाञ्चालः। ४। तेन=तृतीयान्त साधनभूत समर्थकार्यकारणात्मकशब्दसे निर्वृत्तं ( सिद्धं ) निर्माण किया गया इस अर्थमें कहे गये और वक्षमाण प्रत्यय हों। सुबन्त शब्द ही देशका नाम ग्रहण करे। यथा–कुशाम्बेन निर्वृत्ता ( कुशाम्बराजासे निर्माण या सिद्ध की गयी ) नगरी तन्नाम्नि=उसी कुशाम्बराजाके नामसे देश कौशाम्बी प्रसिद्ध है, राजाका देशके साथ कार्यकारण सम्बन्ध ) तृतीयान्त समर्थ कुशाम्बशब्दात् निर्वृत्ते—निर्माणे अर्थे अण् आदिवृद्धिः। स्त्रित्व बोधके ङीपिरूपम्। कुशाम्बराजासे बसाई हुई नगरी। इन्दिरया निर्वृत्तं दलम् ऐन्दिरम्। त्रिपूरेण निर्वृत्ता नगरी त्रैपुरी।

। १०५५। तस्य—षष्ठयन्तसमर्थसे निवास अर्थमें उक्त, वक्षमाण प्रत्यय हों। ( आधारसम्बन्ध ) शिवीनां शिवि नामक प्रसिद्ध राजाओं का निवासदेश, रहनेका स्थान, वास्तव्य, अर्थमें षष्ठयन्तसमर्थ शिवि+आम् शब्दात् निवासे अर्थे तस्य निवासः अण् आदिवृद्धिः इलोपे शैवः। शक्तीनां निवासो देश शाक्तः। सूर्यवंशीनां सौर्यवंशः। यवनानां यावनः। आध्यापकः मन्त्रीणां मान्यः अङ्गानाम् आङ्गः, वाङ्गः, कालिङ्गः। ६। पञ्चम्यन्तसमर्थशब्दसे अदूरभव—समीप होने अर्थमें अण् आदि हों। यथा–विदिशानगरीसे अदूरभव। समीपमें विद्यमान नगरं

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

७ जनपदे लुप् ४।२।८१। जनपदे वाच्ये चातुरर्थिकस्य लुप्। ८ लुपि युक्तवद्व्यक्तिवचने १।२।५१। लुपि सति प्रकृतिवल्लिङ्गवचने स्तः। पञ्चालानां निवासो जनपदः—पञ्चालाः। कुरवः। अङ्गाः। वङ्गाः। कलिङ्गाः। ९ वरणादिभ्यश्च ।४।२।८२। अजनपदार्थ आरम्भः। वरणानामदूरभवं नगरं-वरणाः।

१०६० कुमुद-नड-बेतसेभ्यो ड्मतुप् ४।२।८७।१ झय ८।२।१०।

---

वैदिशम्। विदिशा के पास की नगरी। वाराणस्याः अदूरभवं वाराणसेयं यामदग्निपुरं, वैन्ध्याचलं, विदिशा शब्दात् अदूरभवअर्थे अण्आदिः। ७। जनपद—नगरके नामसे उसीअर्थमें होनेवाले चातुरर्थिक—तदस्मिन, निर्वृत्तं, निवासः, अदूरभवः इन अर्थोंमें हुए प्रत्ययका लुप् ( लोप ) हो। ८। लुपि—चातुरर्थिक प्रत्ययका लोपहोनेपर युक्तवत्—प्रकृतिवत् जिससे प्रत्यय हुआ हो उसीके समान युक्त—प्रकृतिके तुल्य लिङ्गवचन हो। व्यक्तिवचने-जिससेपरे प्रत्ययका लुप् हुआ हो उस व्यक्तिका लिङ्गवचन हो। व्यक्ति शब्दः लिङ्गवाची है। पाञ्चालाः पंजाबियोंके रहने का स्थान जनपद, महल्ला, ग्रामनगर, पाञ्चालः षष्ठयन्त समर्थपाञ्चाल शब्दात् निवासेअर्थे अण्। अत्र निवासः पाञ्चालोंके ठहरनेका स्थान जनपदपदवाची अस्ति। जनपदे लुप्—चातुरर्थीमें प्रसिद्ध अण्का लोप लुपि—युक्तवद् सूत्रेण लिङ्गवचने अभिधाने यः शिष्यते स लुप्यमानार्थाभिधायी। इस न्यायसे लुप्तप्रत्यय की प्रकृति अकेली ही निवासरूप अर्थको भी कहेगी। एकवचने पुंलिंग। जिसमें एक जिलाधीश हों उसे जनपद कहते हैं। बहुनगर ग्राम व्याप्त मण्डलाधिकरणं स्थानम्। एवं कुरुणां निवासो जनपदः कुरुः अण् आदिकालोप होनेसे ? आदिवृद्धि, अन्त्य लोप नहीं होते। अंङ्गानां निवासो जनपदः। अङ्गः उड़ीसा प्रांतः। बङ्गानां निवासोदेशः जनपदः बङ्गाः—बंगाल। कलिगानांनिवासः कलिंगः। केरलः। ९। वर्ण आदि शब्दोंसे परे चातुरर्थिक प्रत्ययका लोप हो। जनपदेलुप्से लुप् अनुवर्तते। जनपद अर्थमें पूर्वसूत्रके लोपसे भिन्नअर्थमें लोप हो। इसलिए जनपदार्थः कहा। वरणा शहरसे अदूरभव अर्थे अण् तस्य वर्णादिभ्यश्चेतिलोपे, लुपियुक्तवत् वचने प्रकृतिके समान लिंगवचन वर्णाः।

।१०६०। कुमुद, नड वेतस शब्दसे ( अस्मिन्नस्ति देशे ) इस अर्थ में डमतुप् ( मत् ) देशवाची अर्थ में हो। डित् से टिलोप )।१। झय् प्रत्याहारके अक्षर अन्तमें हों उससे मतुप्के म को व हो। कुमुदाः सन्ति अस्मिन्देशे। ( जिसदेशमें ) कुमुद=रात्रिकमल, अधिक हो, वह कुमुद्वान् है। कुमुदशब्दात् उक्तसूत्रेण ड्मतुप् अनुबन्धलोपे, डित्से टि ( अ ) का लोप, 'म' स्थाने झयः सूत्रेण ( व ) कृते

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

झयन्तान्मतोर्मस्य वः। कुमुद्वान्। नड्वान्। २ मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८। २। ९। मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च यवादिवर्जितात् परस्य मतोर्मस्य वः। वेतस्वान्। ३ नड-शादाड्-ड्वलच् ४। २। ८८। नड्वलः। शाद्वलः। ४ शिखाया वलच् ४। २। ८९। शिखावलः। इति चातुरर्थिकाः।

---

कुमुद्वत् प्रथमायाः एकवचने रूपम्। नडाः सन्ति अस्मिन्देशे नरकट, नर्कुल, अधिक हो। देश अर्थमें नडशब्दात् ड्मतुप् प्रक्रिया पूर्ववत्। २। 'म' व, 'अ' च् अनयोः समाहारः 'मं' तस्मात्=मकारान्त अकारान्त या मकार और अकार उपधामें हो उससे परे मको 'व' हो। यवादि परे न हो तो। वेतसाः सन्ति अस्मिन्देशे वेंत अधिक हो जिस देश में। वेतस्शब्दात् सूत्रेण ड्मतुप टि (अ) लोपे, अवर्णोपरि होनेसे मादुपधायाश्च से म को व वेतस्वत् प्रथमायाः एकवचने वेत्तस्वान्। किं परिमाणम् अस्य किम्वान्। ज्ञानमस्ति अस्य ज्ञानवान्। भाग्यवान् लक्ष्मीवान्। ३। नड और शाद्शब्दसे (आधार अर्थ में) ड्वलच=वल् प्रत्यय हो। डित्फलं टिलोपः। नडाः घमन् नर्कट हों जिस देशमें वलच् नड्वलः। हरीघास बहुलदेश शादाः हरितघासाः सन्ति यस्मिनदेशे। शाब्दलानि वनानि पश्यन्=हरेघासवाले वनको देखते हुए शाद्बलः। ४। शिखाशब्दसे निवृत्तं या अस्मिन् अस्ति इत्यादि अर्थमें वलच्=वल शिखाशब्दात् वलच् शिखया निबृतः शिखाबलः। इति प्राभाकर्यां चातुरर्थिकाः प्रत्ययाः समाप्ताः।

अथशैषिका :— शेषेभवाः=शेष (अवशिष्ट) अर्थमें प्रत्यय हों। उक्तादन्यः शेषः। कहे हुए चारों अर्थों से भिन्न अर्थः।

। १०६५। तत्र समर्थं (सम्बन्ध सहित). सुबन्तात् शेषेअर्थे प्रत्ययाः स्युः अपत्यादि=तस्यापत्यं से लेकर रक्त, युक्त, दृष्टंवसाम, परिवृत्त, संस्कृतं, भक्षाः, सास्य देवता, समूह, अधीते, वेद, अस्मिन्देशे, निर्वृतं, निवासः, अदूरभवः, इति चतुरर्थपर्यन्त अर्थ, उक्तात्=कहे गये, उनसे अन्यो यः (बचा हुआ) अर्थः (पश्यति गृह्यते, पिपट, जात, भव आदि शेष है उसी अर्थ में अण आदि प्रत्यय हों। वक्षमाणा=कहे जाने वाले प्रत्यय भी हों। भाव यह है कि जिन अर्थोंका प्रतिपादन सूत्र कर चुके हैं उससे भिन्न अर्थोंका सूत्रमें कथन, उपदेश, उच्चारण नहीं है वही अर्थ 'शेषे' सूत्र के अधिकारमें प्रत्यय मान्य हैं। यह अवशिष्ट अर्थमें प्रत्ययविधानसे विधिसूत्र है। इसका अधिकार पूरे प्रकरणतक पहुँचता है। अतः अधिकार सूत्र भी है। अर्थके अनुकूल शक्ति, सामर्थ्य, परस्परसम्बन्ध और प्रत्ययकी कल्पना कर्तव्य है। यथा—ग्रहण अर्थमें किसी सूत्र ने प्रत्ययविधान नहीं किया, अतः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ शैषिकाः

१०६५ शेषे ४ । २ । ९२ । अपत्यादिचतुर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः स्युः । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टा दार्षदाः सक्तवः । चतुर्भिरुह्यते चातुरं शकटम् । चातुर्दश्यां दृश्यते चातुर्दशं रक्षः । तस्य विकार इत्यतः प्राक् शेषाधिकारः । ६ राष्ट्राऽ-

---

उस में शेष की कल्पना । चक्षुषा गृह्यते ( नेत्रसे जो ग्रहण किया जाय, नेत्रेन्द्रिय का ग्राह्यविषय ( रूप ) है अतः तृतीयान्त ग्राह्य ( रूप ) ग्राहक ( इन्द्रिय ) शक्ति समर्थ चक्षुष+टा, शेषे सूत्रेण ग्रहणेऽर्थे 'अण्' (अ) आदिवृद्धिः प्रा० संज्ञा, 'सुलोपे' नपुंसकैकवचने चाक्षुषं रूपम् । आँख से ग्रहण करने योग्य रुप चक्षुर्मात्र-ग्राह्योगुणोरूपं, घ्राणेन ( नाकसे ) गृह्यते घाणो गन्धः । त्वचा ( चर्मसे ) गृह्यते त्वाकः स्पर्शः । रसनया गृह्यते रासनः स्वादः । जीभसे ग्रहण के योग्य । श्रवणेन श्रूयते ( कानसे सुनाजाय ) श्रावणः श्रोत्रमात्रग्राह्यः शब्दः । तृतीयान्त ( ग्राह्यग्रा-हकसामर्थ्यशक्तियुक्त ) श्रवण+टा, अण् आदिवृद्धिः प्रा० सं० सुलोपे स्वादिः । मनसा अनुभूयते मानसः खेदः । औपनिषदः पुरुषः उपसमीपे निषीदन्ति—उप विशन्ति उपनिषदः ब्रह्मतत्ववेत्तरः, साक्षात्सम्बन्ध कृतग्रन्थः, या, मन्त्र, वेदका अन्तिम भाग (दर्शन) उपनिषद्भिः ब्रह्मज्ञानकुशलैः, मन्त्रैः, बुधैः ग्रन्थैर्वा प्रतिपादितः ज्ञान विषयः, पुरुषः, परब्रह्म आत्मा, उपनिषद्का ब्रह्म के साथ प्रतिपाद्यप्रतिपादक सम्बन्ध । तृतीयान्त समर्थ उपनिषद् भिस् प्रतिपादनसमर्थ अर्थं अण इत्यादिः ( दृषदि ) चक्कीमें पिष्टाः=पीसे गये जो भी सत्तू आँटा, सीमेन्ट, चूर्ण, मसाला, सभी दार्षदाः हैं सप्तम्यन्तपेष्यपेषणशक्तिसमर्थ दृषदङि से पीसने अर्थमें अण् आदिः । शिलापुत्रे ( शिलोटीपर ) पेष्टाः शैलापुत्राः । भाँग, चटनी, उपटन आदि । ( चार व्यक्ति घोड़ा, बैल, मनुष्य, से ) चतुर्भिः उह्यते, ढ़ोया खींचा जाय बग्घी, पालकी, रथ आदि चातुरं शकटम् । अथवा चतुर्भि चतुश्चक्रैः उह्यते=चार पहियों से जो चले, कार, ट्रक, बस आदि । त्रिभिः उह्यते+अम् द्वाभ्यामउह्यते 'द्वम्' इन अर्थमें अण् आदिवृद्धिः । स्वादिसमञ्ज्ञे । अतुर्दशीमे दीखने-वालेको चतुर्दश्यां दृश्यते, चातुर्दशंरक्षः=राक्षस । सप्तम्यन्त कार्यकारणभाव-सामर्थ्य अण् आदिवृद्धि आदिः । द्वितीयायां दृश्यते, द्वैतीयश्चन्द्रः पुर्वस्यां दृश्यते पौर्वश्शुक्रः । उत्तरस्यां दृश्यते औत्तरः=ध्रुवतारा । तस्य विकारः सूत्रसे प्राक्=पहले शेषाधिकारः=बिनासूत्रके कहे गये अर्थोमें प्रत्ययका अधिकारः । ।६। राष्ट्र और अवारपार ( इसपार, उसपार ) इन सप्तम्यन्त समर्थ शब्दोंसे

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वार-पाराद्ध-खौ ४।२।९३। आभ्यां क्रमाद् घ-खौ स्तः शेषे। राष्ट्रे जातादिः राष्ट्रियः। अवारपारीणः। (अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्)। अवारीणः। पारीणः। पारावारीणः। इह प्रकृतिविशेषाद् घादयष्टटच्युटच्युलन्ताः प्रत्यया उच्यन्ते तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते। ७ ग्रामाद् य-खञौ ४।२।९४। ग्राम्यः, ग्रामीणः। ८ नद्यादिभ्यो ढक् ४।२।९७। नादेयम्। माहेयम्। वाराणसेयम्।

---

शेष अनुकूल अर्थ क्रमसे घ और ख प्रत्यय हो। शेष शब्दसे जो अर्थ सिद्धशेे राष्ट्रे जातः, भवः (राष्ट्र में, जन्म लिया, पैदा हो) अनुकूल अर्थ भव या जातः। सप्तम्यन्त समर्थ (अस्तित्व) राष्ट्र ङि शब्दात् "राष्ट्रावार–" सूत्रेण घप्रत्यये 'आयनेयी' सूत्रेण घस्थाने इय् आदेशे, भसंज्ञायां, यस्येति च अन्त्य अलोपे। अबारपारीणः–अवारपारं आदिअन्त ग्रन्थ, या आरपार नदी, या इहलोक परलोक। शब्दब्रह्मज्ञानमें पूर्णनिष्णात प्राप्तः; पारंगत; तत्ववेत्ता। द्वितीयान्तसमर्थ अवारपारशब्दात् उक्तसूत्रेण ख तस्य स्थाने "आयनेयी" सूत्रेण इन आदेशे अलोपणत्वे स्वादिः वा० अवारपारशब्दात् बिग्रहीतादपि=अलग-२ रहने पर भी ख प्रत्यय हो। विपरीतात्=अवारपारको उलटकर पारावार से भी ख हो। अवारे जातः इसपार, इहलोक, आरम्भमें जिसकी सत्ता उपस्थित हो वह अवारीणः है। अवारशब्दात् ख–ईन, अलोप, णत्वादिः पारीणः। पारे जातः उसपार पहुँचना शास्त्रमें पारंगत, पूर्ण, ख इन आदिः। ये विगृहीतके उदाहरण है। अब विपरीतका उदाहरण :–पारावारे जातः उसपारसे इसपार पहुँचा (परब्रह्म परमात्मा व्यापक) वार्तिकसे विपरीत दशामें भी ख-ईन आदिः। इह= शेषिकप्रकरणमें राष्ट्रवारपारात् घखौ सूत्रमें किसी अर्थका निर्देश न होनेसे अनिर्दिष्ठार्थाः प्रत्ययाः स्वार्थे भवन्ति अनिर्दिष्ट असंकेतित अर्थ वाले प्रत्यय स्वार्थ में हों। इस नियम से घर आदि प्रत्यय स्वार्थे=प्रकृति के अर्थ में हों, ऐसी शंका होने पर समाधान करते हैं कि इस शिर्षक प्रकरणमें प्रकृतिविशेषात्=राष्ट्र अवारपारआदि प्रकृति है उनसे घादय=घ ख इत्यादिसे लेकर टच्, टयुल् पर्यन्त कहें है तेषां उनप्रत्योंके जातादयो अर्थविशेषा=जातः, भवः आदि अर्थ का विशेष उच्चारण या अर्थं निर्देश, प्रत्यय के अर्थका सम्बन्ध, एक वाक्यता और समर्थ विभक्तियां, वक्ष्यन्ते कही जायेगी। ७। सप्तम्यन्तसमर्थ शक्तिसम्पन्न ग्राम शब्दसे य' और खञ् प्रत्यय हो जातः या भवः अर्थमें। ख–शेष, ञ इत्फलं उदात्तः। ग्राम्यः–ग्रामे जातः गांव में पैदा हुआ। ग्राम शब्दात् जातादि य। अलोपे ग्राम्यः, खञ् संथाने ईन अलोप आदि वृद्धि, णत्वे ग्रामीणः।८। नदी आदि गणपठित शब्दों से ढ़क हो। क इत। नदी, मही, वाराणसी श्रावस्ती,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

६ दक्षिणा-पश्चात्-पुरसस्त्यक् ४।२।९८। दाक्षिणात्यः। पाश्चात्यः। पौरस्त्यः।

१०७० द्यु-प्रागपागुदक्-प्रतीचो यत् ४।२।१०१। दिव्यम्। प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्। १ अव्ययात्त्यप् ४।२।१०४। (अमेह-क्वतसि-त्रेभ्य एव) अमात्यः। इहत्यः। क्वत्य। ततस्त्यः। तत्रत्यः।

---

कौशाम्बी, काशपरी, काशफरी, खादिरी पूर्वनगरी, पाठा, मायां, साल्वा दार्वा केतकी, इति नद्यादिः। नद्यां जातं, भवं नादेयं ( नदीमें जो हुआ हो। शैवाल, शोपी, जल मूर्ति ) स० नदी शब्दात् जातादिअर्थे नद्यादिभ्यः सूत्रेण ढक्, क इत। ढस्थाने एय इलोपे आदिवृद्धिः। नादेयम् मह्यां जातं भवं वा पृथिवीपर पैदा हुआ, या होनेवाला, मही-ङि से ढक् आदि। पर्वत नदी वनस्पति जीवजन्तु मायेहं है। वाराणस्यां भवः, जातः वाराणसीशब्दात् ढक् एय, इलोप बनारसमें होनेवाला दर्शनीय स्थान विश्वविद्यालय, गंगा, विश्वनाथ आदि। वाराणसेयम्। मायायां जातं मायेयम्। ६। दक्षिणा पश्चात् पुरस इन अव्ययशब्दोसे जात, भव आदि शैषिक अर्थोंमें व्यक्त हो दक्षिणस्यां जातः दक्षिणदिशामें पैदा हुआ या होगा। वह दक्षिणात्यः—दक्षिणास्याम् ( अदूरे ) दक्षिणा, तत्र जातः। सप्तम्यन्तसमर्थदक्षिणा शब्दात् भवादि अर्थे शैषिक त्यक्प्रत्यये, क इत्। पाश्चात्यः—पश्चात्भवः विकसितः पीछे या पश्चिममें हुआ या होगा। त्यक आदि वृद्धिः। पौरस्त्यः पुरोभवः अग्रे ( पहले हुआ ) (पूर्वः पौरस्त्यः प्रथमः आद्य इत्यमरः) व्यक्। पुरस् शब्दात्।

।१०७०। दिव ( द्यौः स्वर्गे ) प्राच ( पूर्वदिशा ) अपाच ( दक्षिण ) उदक ( उत्तर ) प्रतीच ( पश्चिम ) इन सप्तम्यन्त समर्थ शब्दसे भव आदि अर्थमें यत् हो। दिविभवं ( स्वर्गमें हो ) दिव्यम्। सप्तम्यन्त समर्थदिव शब्दात् भव आदि अर्थे यतादिः प्राच्यां भवं जातं प्राच्यम्। प्राची दिशामें पैदा हुआ, पूर्वी, सूर्य, ऊषा,। अपाच्यां भवम् दक्षिणमें हुआ, होनेवाला, अपाच्यम्। दक्षिणी मनुष्य, समुद्रादिः। उदिच्यां दिशिभवम् उत्तरीदिशामें हुआ हिमालय आदि। प्रतीच्यां दिशि भवं प्रतीच्यं ( पश्चिमी पंजाबी, राजस्थानी आदि ) प्राच अपाच उदीच, प्रदीचशब्दात् भवार्थे यत्। १। अव्ययसे जात आदि अर्थमें त्यप् हो। प इत्। सूत्रकारस्य न्यूनतां सक्षेपोक्ति दृष्टवा वार्तिककारः प्रपूरयेत्। अव्यय अनेक है। किनसे त्यप हो उसका नियन्त्रकवार्तिक अमा ( साथ सहयोग सलाह मन्त्रणा ) इह = यहां क्व = कहां, तसि = तस प्रत्ययान्त ततः अतः और त्र प्रत्ययान्त



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

( त्यब्नेर्ध्रुव इति वक्तव्यम् ) नित्यः । २ वृद्धिर्यस्याचामादिस्तद् वृद्धम् १ । १ । ७३ । यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद् वृद्धसंज्ञं स्यात् । ३ त्यदादीनि च १ । १ । ७४ । वृद्धसंज्ञानी स्युः । ४ वृद्धाच्छः ४ । २ । १४४ । शीलीयः । मालीयः । तदीयः । ( वा नामधेयस्य वृद्धसंज्ञा वक्तव्या ) देवदत्तीयः दैवदत्तः ।

---

अत्र, तत्र, उत्र आदिसे भी त्यप् अमात्यः अमया सह भवः सहयोग, या साथ मे मन्त्रणा, समर्थ मंत्र देने में सहयोगी अमा अव्ययसे व्यप् स्वादिकार्यें । इह भवः इहत्यः यहाँ है । क्व भवः क्वत्यः, कहाँ है । ततोभव ततस्त्यः । वहां से सम्बन्धित अतोभवः अतस्त्यः ( इसलिए होगा ) तत्र भवः जातः तत्रत्य ( वहाँ का है ) सर्वत्र इह क्व ततः शब्दसे त्यप । क्वत्यो भवान ? वाराणसीयोऽहम् । अत्रत्याः अमात्याः विवेकिनः सन्ति । तत्रत्यं वृत्तान्तम् ।

( वा० ) त्यब्नेः = नि उपसर्गसे त्यप्रत्यय ( ध्रुव = स्थिर अर्थं ) में हो । नितरांभवः, नित्यः, निउपसर्गात ध्रुव इत्यर्थे वार्तिकेन त्यप् । नित्यः । सदा स्थिर, अविनाशी । २ । यस्य समुदायस्य जिस समुदायके अचोके मध्यमें आदि अच् बृद्धि ( आ ए औ ) हो तद्वृद्धम । उस समुदायको वृद्ध संज्ञा हो । ३ । त्यद् यद् इदम् अदस् आदि को भी वृद्धसंज्ञा हो ।४। बृद्धात् = बृद्धसंज्ञक शब्द से शेष अर्थमें छप्रत्यय हो–शालीयः– शालायां भवः जातः । ( घरमें पैदा हुआ ) शालाशब्दके अचोंमें आदि अच् 'आ' समुदाय बृद्धसंज्ञक है । अतः ( वृद्धिर्यस्य अचामादिः ) सूत्रेण शालासमुदायस्य वृद्धसंज्ञा वृद्धाच्छः, छस्थाने आयनेयी सूत्रेण ईय् आदेशे, भसज्ञा, अन्त्य आलोपादिः । एवं मालीयः मालायां जातः मालाशब्दमें आदि अच् समुदायको वृद्धसंज्ञा, भवार्थेछः, ईय, (मालामें फूलया सुमेरु मालीयः) । तदीयः- तस्मिन्भवः ( उसमे (हो) हुआ ) या तस्य अयम् ( उसका सम्बन्धी ) तद् शब्दस्य वृद्धसंज्ञा, ( त्यदादीनि च से ) वृद्धाच्छः । ईय आदेशे, तदीयो उपानहो । अस्मावमयं मदीयः । तव अयं त्वदीयः भवताम् अयं भवदीयः । अस्माकं अस्मदीयः युस्माकं युस्मदीयः एतस्यायमिति एतदीयः । यस्यायं यदीयः । वाराणस्यां भवः वाराणसीयः मूर्तौ ( भवः ) मौर्तः । गुरौ जातः गुर्वीयः छात्राणामयं छात्रीयः । (वा०) वा नामधेयस्य किसी के नाम ( व्यक्तिवाचक शब्द) को वृद्धसंज्ञा विकल्पसे हो । देवदत्तस्य पुत्रः, ग्रन्थः, देवदत्तीयः देवदत्तशब्दस्य वार्तिकेन विकल्पेन वृद्धसंज्ञा छप्रत्ययः ईय आदेशे । पक्षे अण्वृद्धिः दैवदत्तः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

१०७५ गहादिभ्यश्छः ४ । २ । १३८ । गहीयः । ६ युष्मदस्मदोरन्यतरस्यां खञ् च ४ । ३ । १ । चाच्छः । पक्षेऽण् । युवयोर्युष्माकं वाऽयं युष्मदीयः । अस्मदीयः । ७ तस्मिन्नणि च युष्माकास्माकौ ४ । ३ । २ । युष्मदस्मदोरेतावादेशौ स्तः खञि, अणि च । यौष्माकीणः । आस्माकीनः । यौष्माकः । आस्माकः । ८ तवकममकावेकवचने ४ । ३ । ३ । एकार्थवाचिनोर्युस्मस्मदोस्तवकममकौ स्तः खञि, अणि च । तावकीनः, तावकः । मामकीनः, । मामकः । छे तु—९ प्रत्ययोत्तरपदयोश्च ७ । २ । ९८ । मपर्यन्तयोरेकार्थ-

---

। १०७५ । गहादिभ्यश्छः--गह आदि गणपठित शब्दों से भी छप्रत्यय जात आदि अर्थमें गहीयः । गहे = देशनाम्नि भवः गहनामक देशमें हुआ । गहशब्दात् छप्रत्ययादिः । ६ । युस्मदस्मदोः = युष्मद और अस्मद् शब्दसे खञ् चात = छ हो । अन्यतरस्याम् = विकल्पसे, अण् भी हो । खको ईन, छको ईय, आदेश । आयनेयीनी-फढखछघाम् सूत्रसे होते हैं । युष्मदीयः युवयो युष्माकं वा तुमदोनों या तुमलोगों की वस्तु यह है । युष्मद्ङस् आम् । उक्त सूत्रेंण छ प्रत्यये तस्य ईय आदेशे युष्मदीयः । कुत्र आवयोः अस्माकं वा गृहम् । हमदोनों, हमलोगोका घर अस्मदीयः । अस्मद् छ, ईय । यदा युष्मदशब्दात् युष्मदस्मदोः सूत्रेण खञ, तस्य ईन ततः । ७ । तस्मिन्नणिच उस खप्रत्यय ओर अण् परे युष्मद् और अस्मद् दोनोंके स्थानमें एतौ = युष्माक और अस्माक ये दोनों आदेश हों । इति सूत्रेण युष्मद् स्थाने युष्माक आदेशे, आदिवृद्धिः, अलोपे, णत्वं, यौष्माकीणः, ग्रन्थः । तुम्हारी पुस्तक । आवयोः = हमदोनोंकी अस्माकं = हमलोगोंकी, वस्तु आस्माकीनः अस्मद् शब्दात् खञ् अस्मद्-स्थाने स्माक आदेशे । खस्ये ईन आदिवृद्धिः । यदा अण् भवति तदा युस्माक अस्माक च आदेशे । आदिवृद्धिः, अलोपे । यौष्माकः आस्माकः तद्धितार्थः पूर्ववत् । द्विवचनं बहुवचन प्रकृतिकरूपसमान हो । एकवचनमें, ।८। एकार्थवाचिनोः एकवचनार्थकप्रकृति युष्मद् या अस्मद् शब्दके स्थानमें क्रमसे तवक, ममक । आदेशहों खञ् अण् परे । तावकीनः अव अयम् ( तुमसे सम्बन्घित वस्तु । एक अर्थ, व्यक्तिवाचक या एकवचन प्रकृतिक युष्मद् शब्दात् खञ्, तवकममकावेकवचने इति युष्मद्स्थाने तवकआदेशे आदिवृद्धिः । खको ईन तावकीनः । अण् कृते तावकः ( तुमसे सम्बन्धित व्यक्ति या वस्तु ग्रन्थः ) मम अयं मामकीनः पुत्रः । अस्मद शब्दात् खञ् ममक, ईन, आदेशे । अण् पक्षमें भी वैसा आदिवृद्धिः । छेतु युष्मद्छ ततः । ९ । मपर्यन्तयो=म भाग तक एकार्थवाचिनोः=एकवचनसे सम्बन्धित युष्मद् अस्मदके स्थानमें क्रमसे त्व म आदेश हों प्रत्ययपरे, उत्तरपदपरे रहते । तव अयं त्वदीयः शिष्यः । मम अयं मदीयः,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वाचिनोस्त्वमौ स्तः प्रत्यये-उत्तरपदेच परतः। त्वदीयः। मदीयः। त्वत्पुत्रः, मत्पुत्रः।

१०८० मध्यान्मः ४।३।८ मध्यमः। १ कालाट्ठञ् ४।३।११। कालवाचिभ्यष्ठञ् स्यात्। कालिकम्। मासिकम्। सांवत्सरिकम्। (अव्ययानां भमात्रे टिलोपः) सायंप्रातिकः। पौनःपुनिकः। २ प्रावृष एण्यः ४।

---

( मेरेसे सम्बन्धित व्यक्ति ( वस्तु ) युष्मद् शब्दस्य अस्मद् शब्दस्यच। त्यदादीनि सूत्रेण वृद्धसंज्ञा, वृद्धाच्छः। यहा एक अर्थवचन। व्यक्तिवाची, युष्मद युष्मस्थाने त्व, अस्मद्के मपर्यन्त भाग अस्मको 'म' युस्मको 'त्व' हो। छस्थाने ईय त्वदीयः। त्वसम्बन्धी वस्तु। यत् किञ्चित्पुलिङ्गीयः। मदीयः मत्सम्बन्धिद्रव्यगुणक्रिया। इतिप्रत्ययपरकोदाहरणम्। अथोत्तरपदपरकमुदाहरणं:—समासमें तवपुत्रः त्वत्पुत्रः ( तुमसे सम्बन्धित पुत्र ) मम पुत्रः मत्पुत्रः ( मेरी सन्तान ) तत्पुरुष समासेकृते उत्तरपदपुत्रशब्दपरे युष्म, अस्म भागको 'प्रत्ययोत्तरपदयोश्च सूत्रसे ( त्व। म ) आदेशे।

।१०८०। मध्यशब्दसे जात, भव आदि अर्थबोधक शैषिक (म) प्रत्यय हो। मध्येभवः जातः मध्यमें हो या जन्मले वह मध्यमः। मध्यशब्दात् भव अर्थे म।१। कालवाची सप्तम्यन्त ( परिछेद्य परिच्छेदक भावसमर्थ ) समयबोधकशब्दसे ठञ् भव आदि अर्थमें हो। विपल, पल, दण्ड होरा, प्रहर दिन रात सप्ताह पक्षमास ऋतु वर्ष युग परार्ध आदि कालवाची हैं। सामान्यकाल और भेदककाल दोनोंका प्रयोग व्यापककाल। काले-भवं जातं ( समयमें होनेवाले या हुए ) कालिकं= ग्रीष्म वर्षावसन्तादि। अन्न, फल, सूर्य, चन्द्र आदि सामयिकम्। सप्तम्यन्त ( जन्यजनकसम्बन्धसमर्थ ) कालशब्दात् भवार्थे ठञ् ठस्य इक् आदेशे, अलोप, आदिवृद्धिः नपुंसकैकवचने। विशेषभेदककाल। मासे भवं मासिकम् ( वेतन रजो धर्मः ) सप्तम्यन्त जन्यजनकसमर्थमासशब्दात् ठञ्; इक्, अलोप, आदिवृद्धिः। सम्वत्सरे वर्षे भवम् ( एकवर्षमें होनेवाला ) साम्बत्सरिकम् मेलापकं, वार्षिकोत्सव आदि कालवाचक सम्वत्सरशब्दात् भवार्थे ठञादिः। (वा०) अव्ययानाम्=अव्ययोंको भसंज्ञामात्रमें टिलोप निश्चित। सायं प्रातर्भवः ( सुबह शाम होनेवाला ) सन्ध्याकालीनस्नानादिः। कालवाचक सायं प्रतार शब्दात् कालाट्ठञ, ठस्य इक्, भसंज्ञा, वार्तिकेन टि ( अर् ) लोपे, सायंप्रातिकः नियमः। पुनः पुनर्भवः ( बार-बार होनेवाला। कालवाचक पुनः पुनर् अव्ययात् ठञ् पूर्ववत्कार्यम् पौनःपुनिकः नखः, केशः, बुभुक्षा आदि बार-बार होते हैं। २। काल विशेष अर्थबोधक वर्षाऋतुवाचक प्रावृषि शब्दसे भव अर्थमें 'एण्य' प्रत्यय हो ठञ्को

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

३ । १७ । प्रावृषेण्यः । ३ सायं-चिरं-प्राह्णे-प्रगे-ऽव्ययेभ्यस्टयु-ट्युलौ तुट् च ४ । ३ । २३ । सायमित्यादिभ्यश्चतुर्भ्यः अव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च । सायन्तनम् । चिरन्तनम् । प्राह्णप्रगयोरेदन्तत्वं निपात्यते । प्राह्णेतनम् । प्रगेतनम् । दोषातनम् । ४ तत्र जातः ४।३।२५। सप्तमीसमर्थाज्जात इत्यर्थेऽणदयो घादयश्च स्युः । स्रुघ्ने जातः स्रौघ्नः । उत्से जातः–औत्सः । राष्ट्रे जातः–राष्ट्रियः । अवारपारे जातः–अवारपारीणः इत्यादि ।

---

बाधकर । प्रावृषि ( वार्षाकाले ) भवः जातः अर्थे एण्य प्रत्यये, कालाठञ् को बाधकर प्रावृषेण्यः । वर्षाकालिकजीवजन्तुः । ३ । सायं शाम, चिरं ( देर ) प्राह्णे ( पूर्वदिन ) प्रगे अपराह्ण और कालवाचक अव्यय शब्दोंसे भव, उत्पन्न, जात, ( जन्म लिए ) अर्थमें टयु टयुल् हों उनको तुट् ( त ) हो । अनुबन्धलोप होनेपर 'यु' मात्र शेष युवोरनाकौ यु स्थाने 'अन' आदेशे ( स्वरमें भेद ) लितिपरे पूर्वं उदात्त आद्युदात्तश्च । तुटके टित् होनेसे अन्के आदिमें ( त ) हो । सायं चिरं शब्दद्वितीयान्त हैं । निपातनसे मान्तमानकर अव्यय भी हैं । सायंकाले भवं सायन्तनम् । पक्षिघोसलागमनम् । सन्ध्या । सायं शब्दात् कालवाचकात् कार्य-कारणसमर्थात् भव अर्थे टयु ( यु ) तस्य अन आदेशे तस्य तुट् ( त ) आगमें विभक्तिलुकि सति 'मान्तत्वं निपात्ये । अनुस्वारपरसवर्णे नपुंसकैकवचने रुपम् सायंभवं, चिरंभवम् इत्यपि विग्रहः । चिरेभवः चिरंभवं चिरंतनं=देरतकभावी । टयु तुट् आदि पूर्ववत् । प्राह्णे प्रगे अनयोः इनदोनों शब्दोंको, एदन्त्म्=एकारान्त-निपातन करते हैं । सूत्रमें उच्चारणसे निपातन मान्य हैं । प्राह्णेभवं ( पूर्वाह्णमें जो हो ) प्राह्णेतनम् । दिनके पूर्वभागमें उत्पन्न वेदाध्ययनम् । टयु टयुल् एदन्त निपातनं तुट् पूर्ववत् । प्रगेतनम् प्रातः काले उत्पन्नं, प्रगेभवः अर्थमें सप्त-म्यन्त समर्थ टयु, तुट, एदन्त निपातन आदि । दोषा=रात्रौभवम् रातमें उत्पन्न टयु तुट् इत्यादि दोषातनम् । चक्रवाकयुगलवियोगः, उलूकदर्शनम् ।४। तत्र जातः सप्तम्यन्तसमर्थ कृतसन्धि शब्दसे जातः ( पैदा हुआ अर्थमें ) अण इत्यादि प्रत्ययः घादयश्च—घ इत्यादि प्रत्ययभी हों । जात अर्थमें सूत्र निर्देश, इसके पहले नहीं किया गया, किन्तु राष्ट्रवार पारादृघखौ, सूत्र प्रसङ्गमें, इहप्रकृतिविशेषात् के निर्देशससे भव जात अर्थभी हैं । सुघ्ने जातः स्रौघ्नः पाटलिपुत्र—पटना प्रसिद्ध नगर सुघ्न है । इति पद्मचन्द्रकोषः । स्रुघ्नशब्दात् जातः इत्यर्थे अण् ; आदिवृद्धिः, अलोपे, प्रथमैकवचने स्रौघ्नः शिष्यः । उत्से—झरनामे जातः ( पैदा हुआ ) औत्सः शैवाल घास घोंघा आदि सप्तम्यन्त समर्थ ( कार्यकारण ) उत्सादिभ्यो अञ् इति अञ् पूर्ववत् । राष्ट्रेजातः राष्ट्रियः राष्ट्रमें जन्मवान् । अवारपारीण—पूर्णपारङ्गत । आदि अन्त, तत्ववेत्ता आरपारगन्ता पूर्ववत् । अर्थ निर्देशमुख्य है ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

१०८५ प्रावृषष्ठप् ४ । ३ । २६ । एण्यबाधकः । प्रावृषिकः । ६ प्रायभवः ४ । ३ । ३९ । तत्रेत्येव । स्रुघ्ने प्रायेण=बाहुल्येन भवति स्रौघ्नः । ७ सम्भूते ४ । ३ । ४१ । स्रुघ्ने सम्भवति स्रौघ्नः । ८ कोशाड्ढञ् ४ । ३ । ४२ । कौशेयं (वस्त्रम्) । ९ तत्र भवः ४ । ३ । ५३ । स्रुघ्ने भवः-स्रौघ्नः । औत्सः । राष्ट्रियः ।

१०९० दिगादिभ्यो यत् ४ । ३ । ५४ । दिश्यम् । वर्ग्यम् । १ शरीरावयवाच्च ४ । ३ । ५५ । दन्त्यम् । कण्ठ्यम् । (अध्यात्मादेष्ठञिष्यते)

---

।१०८५। सप्तम्यन्त समर्थप्रावृषिशब्दसे जातअर्थं ठप् ठस्य इक् । एण्य प्रत्ययका बाधक । प्रावृषि (वर्षाऋतुमें पैदा हो) ठ इक् प्रावृषिकः ।६। सप्तम्यन्तसमर्थसे प्रायभवः बहुलतया होना अर्थमें अण् आदि ध आदि यथायोग्य हों । अतः बोले तत्र इत्येव स्रुघ्नदेशमें अधिकतर होनेवाला प्रावृषि प्रायभवः प्रावृषिकः पुनः पुनः प्रायभवः पौनःपुनिकः रोगः ।७। सप्तम्यन्त समर्थ से सम्भूत उत्पन्न सम्भावना अर्थमें अनुकूल अणादि प्रत्यय हों । स्रुघ्ने संभवति । (श्रुघ्नदेशमें जिसकी संभावना हो) उसे श्रौघ्नः भारते संभवति भारतकः । विदेशे सभवति वैदेशिकः । यहां अर्थसंकेत अन्य प्रत्ययविधायकसे और भी हों) ।८। कोशात् समर्थकोश शब्दसे संभावना अर्थमें ढञ्, ढस्य एय । कोशे संभवति कौशेयं—रेशमीवस्त्रं, कृमिकोशोत्थम् । कीडारुपकोशसे उत्पन्न । सप्तम्यन्त कार्यकरणभाव समर्थ कोशशब्दात् संभावना अर्थं ढञ् एय आदेश आदिवृद्धिः ।९। तत्र—सप्तम्यन्त आधाराधेयभाव समर्थ शब्दसे भव अर्थमें अण्, घ आदिहों; स्रुघ्नेभवः—उत्पन्न अण् आदिवृद्धिः । भव और जातशब्द एकार्थक होने से दूसरा अर्थ व्यर्थ है (शंका न करें) यातका उत्पन्न, भवका विद्यमान, अर्थ होने से दोनों में भेद है उत्सेभवः औत्सः ।

।१०९०। दिगआदिगणपठित समर्थशब्दसे भव अर्थं यत् हो, दिशिभवं दिश्यं दिश्यं शुक्रः नक्षत्रं सप्तप्यन्त समर्थदिश् शब्दात् दिगादिभ्यो यत् भव अर्थे । वर्गेभवम् (पार्टीवाला) वर्गशब्दात् यत्, अलोपे, वर्ग्यम । किसीगुटका । १ । शरीरका अवयव—अङ्गवाचक समर्थशब्दसे भी यत हो भवार्थे । दन्तेषु भवं दन्त्यं क्रिमिः रोगः । सप्तम्यन्त समर्थ शरीराङ्गवाचक दन्तशब्दात्यत्, यस्येतिच अलोपे । कण्ठे भवं कण्ठयम् (कण्ठमाला) शरीरावय होने से यत (वा०) अध्यात्मादि सप्तम्यन्तसमर्थसे भवार्थे ठञ् अध्यात्मं भवम् आध्यात्मिकं ज्ञानम । ज्ञान आत्मामें होता है । अध्यात्मन् शब्दात् वार्तिकेन ठञ्, इक् आदिवृद्धिः,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अध्यात्मं भवमाध्यात्मिकम्। २ अनुशतिकादीनां च ७। ३। २०। एषामुभयपदवृद्धिर्ञिति णिति किति च। आधिदैविकम्। आधिभौतिकम्। ऐहलौकिकम्। पारलौकिकम्। आकृतिगणोऽयम्। ३ जिह्वामूलाङ्गुलेश्छः ४। ३। ६२। जिह्वमूलीयम्। अङ्गुलीयम्। ४ वर्गान्ताच्च ४। ३। ६३। कवर्गीयम्।

१०६५ तत आगतः ४। ३। ७४। स्रुघ्नादागतः, स्रौघ्नः। ६ ठगाय-

---

अलोपे रुपम्। आत्मनि अधि इति अध्यात्मम्—आत्मामें जो हो। २। अनुशतिक आदिगणपठितशब्दोंके उभयपद वृद्धिः—दोनोंपदके आदिअच्को वृद्धि हो। ञिणित्कित् परे। देवमधि इति आधिदेवम तत्रभवम् आधिदैविकम। [ देवताओं में होनेवाला शान्ति या उपद्रव ] सप्तम्यन्त समर्थअधिदेव शब्दात् अध्यात्मदेश्ठञ् इति भवार्थे ठञ् आदिवृद्धिः प्राप्ता। तं बाधित्वा अनुशतिकादीनाञ्च इति उभयपदवृद्धिः। अधिदैव ठस्य इक अलोपे। भूतानि [ पञ्चमहाभूतानि पृथिवी जल अग्नि. वायु. आकाश ] अधि. अधिभूते भवं सृष्टिः आधिभौतिकम्। जीव आदिः। ठञ उभयपद वृद्धिः। इहलोकेभवं वस्तु ऐहलौकिकम्। इससंसारमें उत्पन्न सुखभोग आदि। परलोके स्वर्गादिः। इहलोक परलोक अब्दसे ठञ् दोनोंपदकी आदिवृद्धिः आकृतिगण—अनुशतिकादिगणकी। आकृति दोनोंपदमें आदिअच्को वृद्धि जहां भी मिले उसे इसगणमें मान ले। ३। जिह्वामूल और अंगुल शब्द सप्तम्यन्तसमर्थ—शक्तिसम्पन्न हों. तबभवअर्थमें छ हो। जिह्वामूले भवं जिह्वामूलं रोगः जीभकी जड़में होनेवाला ] सप्तम्यन्त आधार आधेय—सम्बन्धसमर्थी जिह्वामूलशब्दात भवार्थे प्राप्तं शरीरावयवात् यतं बाधित्वा उक्तसूत्रेण छ—ईय. अलोपे. जिह्वामूलीयम्। अंगुल्यां भवम् अंगुलियम् [ मुद्रिका ] अंगुलशब्दात छ [ ईय ] आदिः। ४। वर्गशब्द अन्तमें हो ऐसे समर्थसे छ हो। कवर्गेभवं कवर्गमें जो रहे वह वर्गान्तसप्तम्यंत ( आधाराधेयसमर्थ ) कवर्ग शब्दात भवार्थे वर्गान्ताच्च इतिछः ( ईय ) आदेशे अलोपे स्वादिकार्यें कवर्गीयं खवर्गे भवं खवर्गीयम्। हिन्दुवर्गीयम. शूद्रवर्गीयम।

। १०६५। तत=पञ्चम्यन्तसमर्थसे आगत ( आया हुआ ) अर्थमें यथायोग्य अणआदि, घ आदिप्रत्यय हों। स्रुघ्नादागतः स्रौघ्नः नगरादागतः=नागरः। वैदेशः, ग्राम्यः गृहादागतः गार्हः ६ ठक् आय स्थानेभ्यः। स्वामिग्राह्यो भागः आयः राजा या अधिकारीके ग्रहणयोग्य धन ( आयकर ) जहांसे लब्ध हो उसपञ्चम्यन्तसमर्थशब्दसे आगतअर्थमें ठक् हो। शुल्कशाला करगृहं ( चुङ्गीखानासे आया धन )

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्थानेभ्यः ४ । ३ । ७५ । शुल्कशालाया आगतः–शौल्कशालिकः । ७ विद्यायोनिसम्बन्धेभ्यो वुञ् ४ । ३ ७७ । औपाध्यायकः । पैतामहकः । ८ हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ४ । ३ । ८१ । समादागतं समरूप्यम् । पक्षेगहादित्वाच्छः–समीयम् । विषमीयम् । देवदत्तरूप्यम् । दैवदत्तम् । ९ मयट् च ४ । ३ । ८२ । सममयम् । देवदत्तम् ।

११०० प्रभवति ४ । ३ । ८३ । हिमवतः प्रभवति—हैमवती=गङ्गा ।

---

शौल्कशालिकः । विभाजकसम्बन्ध समर्थ शुल्कशालाशब्दात् ठक् ( इक् ) आदिवृद्धिः ( आय स्थानवाचक ) ।७। विद्या ( गुरुशिष्यभाव ) योनि=रक्तसे जन्म का सम्बन्धवाचक पञ्चम्यन्तपदसे वुञ् । उपाध्यायात् आगतः (गुरु के पाससे आयी ) विद्यासम्बन्धवाचक पञ्चम्यन्त उपाध्याय-ङस् अस्मात् विद्यायोनिसम्बन्धेभ्यो वुञ । वुस्थाने युवोरनाकौ इति अक्, आदिवृद्धिः । पितामहादागतः पितामहके पाससे आया, योनि ( जन्म ) कृत-सम्बन्धवाचक पितामहशब्दात् आगत अर्थे वुञ् । पैतामहकः आदिवृद्धिः । पितुः आगतः पैतृकः । मातुः आगतः मातृको गुणः । गुरोः आगतः गुरुकः । ८ । हेतु=कारण वाचक और मनुष्यवाचक शब्दसे आगत अर्थे रुप्यप्रत्यय विकल्पसे हो । समात् ( समतासे ) आगतम् आया हुआ । हेतुवाचक पञ्चम्यन्तसमशब्दात् रुप्य-प्रत्यये । समरुप्यम् । विषमात् संग्राम या घोर जङ्गलसे आया हुआ विषमरूप्यम् । विषमहेतु भूत है उससे रुप्यप्रत्ययः । पक्षमें छ ईय, विषमीयम् । विषम रास्तेसे आया हुआ । वक्रीयम् । मनुष्यवाचक देवदत्त शब्द से आया हुआ अर्थमें रुप्य प्रत्यय देवदत्तादागतं देवदत्तरुप्यम् । पक्षे वा नाम धेयस्य इति वृद्धिसंज्ञावाच्या, वृद्धाच्छः ईय, देवदत्तीयम् । पक्षे शेषे सूत्रेण अण् । आदिवृद्धिः दैवदत्तम् ( देवदत्त के पास आया हुआ ) मकरान्दादागतं मकरन्दरुप्यम् मकरन्दम् । ९ । मयट प्रत्ययः हेतुवाचक, मनुष्मवाचक समर्थ पञ्चम्यंतपदात् आगते अर्थे भवतु । टइत् । हेतुवाचक-समादगत सममयं मयट् प्रत्यये मनुष्यवाचक देवदत्तादागतं देवदत्तमयम् । ग्रामादागतं ग्राममयम् ।

। ११०० । प्रभवति प्रथमं प्रकाशते ( प्रगटहोना ) हिमवतः=हिमालयसे प्रभवति अर्थे अणादिः हैमवती गङ्गा । पञ्चस्यन्त निःसार्यं निःसरण या प्रकाश्य प्रकाशकसम्बन्धसमर्थं हिमवत् शब्दात् प्रभवति अर्थे अण्=अ आदिवृद्धिः । स्त्रीलिङ्गविवक्षामें टिड्ढाणञ् आदि सूत्रेण ङीप् ( ई ) हैमवती=हिमालयसे प्रकट हुई । वाराणस्याः प्रभवति=वाराणसी ( विद्या ) मुखात् प्रभवति मौखा ( गीता ) शरीरात्प्रभवति शारीरी ( एकादशी ) यन्त्रस्थानात् प्रभवति यन्त्र-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

